# अथालंकाराणामनुक्रमः ।

( तत्रादौशतमलंकाराः )

# अलंकाराणामनुक्रमः



## अथ पंचदशालंकाराः



## अथान्ये पंच संकराः

॥ श्रीः ॥

# श्रीपरमेश्वरोजयति।

अमरीकवरीभारभ्रमरीमुखरीकृतम् ॥ दू
रीकरोतुदुरितंगौरीचरणपंकजम् ॥ १ ॥

श्रीगणेशायनमः। अनुचिंत्यमहालक्ष्मींहरिलोचनचंद्रिकां। कुर्वेकुवलयानंदसदलंकारचंद्रिकां ॥१॥ चिकीर्षितात्रिविघ्नसिद्धयइष्टदेवतांस्तौति। अमरीति। अत्रचरणमेवपंकजमितिमयूरव्यंसकादिसमासाश्रयणात्परिणामालंकारः। चरणेआरोप्यमाणस्यपंकजस्यारोपविषयचरणात्मतापरिणतिंविनादुरितदूरीकरणक्रियार्थत्वासंभवात् 'परिणामःक्रियार्थश्चेद्विषयीविषयात्मनेति' तल्लक्षणात्। नचपंकजमिवचरणमितिपूर्वपदार्थप्रधानउपमितसमासएवास्त्वितिशंक्यं। अमरीणांकवरीभारस्यकेशपाशस्यसंबंधिनीसौगंध्यलोभात्तत्संसृष्टायाभ्रमरीतयामुखरीकृतमितिविशेषणस्यानुगुण्याभावात्तस्यपंकजगतत्वेनैवप्रसिद्धेरिति। एतद्विशेषणावगतेनचपादपतनेनाभिव्यज्यमानागौरीविषयासुरांगनागतारतिःकविगतांतांपुष्णातीतिप्रेयोलंकारोपिबोध्यः ॥ १ ॥

परस्परतपःसंपत्फलायितपरस्परौ ॥ प्रपं
चमातापितरौप्राञ्चौजायापतीस्तुमः ॥ २ ॥

परस्परेति। प्रांचौपुरातनौजायापतीअर्थादुमामहेश्वरौस्तुमः। किंभूतौ प्रपंचस्यजीववर्गस्यमातापितृरूपौनिरुपाधिकृपाश्रयत्वाद्धितोपदेष्टृत्वाच्च। तथापरस्परसंबंधिन्यास्तपःसंपत्तेःफलवदाचरितंपरस्परस्वरूपंययोस्तौ। अत्रपरशब्दस्यक्रियाविनिमयविवक्षायांकर्मव्यतिहारेसर्वनाम्नोद्वेवाच्येइतिवार्तिकेनद्विर्भावेअसमासवद्भावेपूर्वपदस्थस्यसुपःसुर्वक्तव्यइत्यनेनसुपःस्वादेशेचपरस्परशब्दव्युत्पत्तेःपार्वतीतपःसमृद्धिफलायितःपरमेश्वरःपरमेश्वरतपःसंपत्फलायिताचपार्वतीत्यर्थोलभ्यते। तपःसंपत्तेश्चफलंनिरतिशयानंदइति तदुपमयापरस्परंपरमप्रेमास्पदत्वलक्षणःशृंगारोव्यज्यमानःसौभाग्यातिशयव्यंजनमुखेनशिवयोर्भावप्रकर्षेपर्यवस्यतीतिसहृदयैराकलनीयं। मातापितराविवितिरूपकाभ्यामुक्तोपमयोःसंसृष्टिः। परस्परंचोपमयोःफलायितेसेकत्राचकानुप्रवेशलक्षणःसंकरइतिदिक् ॥ २ ॥

उद्घाट्ययोगकलयाहृदयाब्जकोशंधन्यैश्चिरादपि
यथारुचिगृह्यमाणः ॥ यःप्रस्फुरत्यविरतंपरिपू
र्णरूपःश्रेयःसमेदिशतुशाश्वतिकंमुकुंदः ॥ ३ ॥

संप्रतिप्रतिपिपादयिषितानामलंकाराणांव्युत्पत्तेःस्वतोऽपुरुषार्थतयाफलत्वायोगात्तस्यारसास्वादौपयिकत्वेनफलत्वंप्रेक्षावतांप्रकृतग्रंथप्रवृत्तयेसूचयितुंशृंगाररसाधिदैवतंश्रीकृष्णंप्रतिरसास्वादानंदंप्रार्थयते। उद्घाट्येति। समुकुंदोमेमह्यंशश्वद्भवंशाश्वतिकंभग्नावरणतयासदाप्रकाशमानंश्रेयोविगलितवेद्यांतरमानंदं'रसोवैसइतिश्रुतेः'रसपदाभिधेयंदिशतुददात्वित्यर्थः। यथाश्रुतेमुक्तिप्रार्थनायाःप्रकृतेऽसंगत्यापत्तेः सकःयोधन्यैर्महामहिमपुण्यशालिभिर्नारदादिमुनिभिर्योगकलयायोगकौशलेनहृदयाब्जस्यउरसोमध्यवर्त्तिनोहृदयपुंडरीकस्यकोशंमुकुलंअधोमुखतयाविद्यमानं उद्घाट्यरेचकप्राणायामेनोर्ध्वमुखंकृत्वा चिराद्बहुकालंयथारुचियथेच्छंगृह्यमाणोपिरामकृष्णाद्यभिमतमूर्तिध्यानगोचरीक्रियमाणोपिपरितः पूर्णरूपमस्यतथाभूतोऽपरिच्छिन्नब्रह्मरूपोऽविरतंनिरंतरंमुक्तिदशायांप्रस्फुरतिप्रकाशतइतिविरोधालंकारः। औपासनिकरूपस्यकल्पितत्वेनचतत्परिहारः। अथवायोगिभिरप्यचिंत्यस्वरूपइतिमाहात्म्यातिशयवर्णनं। अत्रयोगिगतभगवद्विषयकरतिभावस्यकविगतंतंप्रत्यंगतयाप्रेयोलंकारः ॥ ३ ॥

अलंकारेषुबालानामवगाहनसिद्धये ॥ ललि
तः क्रियतेतेषांलक्ष्यलक्षणसंग्रहः ॥ ४ ॥

चिकीर्षितस्यग्रंथस्यप्रयोजनाभिधेयेप्रदर्शयति । अलंकारेष्विति । एतच्चोभयान्वयि । अलंकारेषुअर्थालंकारेषूपमादिषुविषयेबालानामव्युत्पन्नानांतेष्ववगाहनस्यव्युत्पत्तेःसिद्धयइत्यर्थः । तेषांयेलक्ष्यलक्षणेतयोःसंग्रहइतिनित्यसापेक्षत्वात्समासः। लक्ष्यंउदाहरणम् । अलंकारत्वंच रसादिभिन्नव्यंग्यभिन्नत्वेसतिशब्दार्थान्यतरनिष्ठायाविषयितासंबंधावच्छिन्नाचमत्कृतिजनकतावच्छेदकतातदवच्छेदकत्वं । अनुप्रासादिविशिष्टशब्दज्ञानादुपमादिविशिष्टार्थज्ञानाच्च चमत्कारोदयात्तेषुलक्षणसमन्वयः । शब्दार्थयोर्ज्ञाननिष्ठचमत्कृतिजनकतायांविषयितयावच्छेदकत्वेनतद्विशेषणीभूतानुप्रासोपमादेस्तन्निष्ठावच्छेदतावच्छेदकत्वात् । रसवदाद्यलंकारसंग्रहायव्यंग्योपमादिवारणायचभेदद्वयगर्भसत्वंतोपादानम् ॥ ४ ॥

येषांचंद्रालोकेदृश्यंतेलक्ष्यलक्षणश्लोकाः ॥ प्रा
यस्तएवतेषामितरेषांत्वभिनवाविरच्यंते ॥ ५॥

परकीयग्रंथापहारशंकानिरासायाह येषामिति। येषामलंकाराणांचंद्रालोकेचंद्रालो

काव्यग्रंथे तएवेसनंतरंलिख्यंतइतिशेषः। तत्रस्थितानामपिकेषांचिदलेखनात्प्रायइत्युक्तं। यथाऽनंतरश्लोकस्योत्तरार्धं। तत्रैवंदृश्यते 'हृदयेखेलतोरुच्चैस्तन्वंगीस्तनयोरिवेति' स्वयंत्वन्यदेवविरचितमिति। एवंचतदीयत्वेनकथनादाशंकानिरासः॥ ५॥

उपमायत्रसादृश्यलक्ष्मीरुल्लसतिद्वयोः॥ हं
सीवकृष्णतेकीर्तिःस्वर्गंगामवगाहते ॥ ६ ॥

यत्रोपमानोपमेययोः सहृदयहृदयाल्हादकत्वेनचारुसादृश्यमुद्भूततयोल्लसतिव्यंग्यमर्यादांविनास्पष्टंप्रकाशतेतत्रोपमालंकारः। हंसीवेत्युदाहरणम्। इयंचपूर्णोपमेत्युच्यते। हंसीकीर्तिः स्वर्गंगावगाहनमिवशब्दश्चेत्येतेषामुपमानोपमेयसाधारणधर्मोपमावाचकानांचतुर्णामप्युपादानात्। यथावा। "गुणदोषौबुधोगृह्णन्निंदुक्ष्वेडाविवेश्वरः। शिरसाश्लाघतेपूर्वंपरंकंठेनियच्छति॥" अत्रयद्यप्युपमानोपमेययोर्नैकःसाधारणोधर्मः। उपमानेईश्वरेचंद्रगरलयोर्ग्रहणमुपादानंतयोर्मध्येपूर्वस्यचंद्रस्यशिरसाश्लाघनंवहनंउत्तरस्यगरलस्यकंठेनियमनंसंस्थापनंउपमेयेबुधेगुणदोषयोर्ग्रहणंज्ञानंतयोर्मध्येपूर्वस्यगुणस्यशिरसाश्लाघनंशिरःकंपेनाभिनंदनं उत्तरस्यदोषस्यकंठेनियमनंकंठादुपरिवाचाऽनुद्घाटनमितिभेदात्। तथापिचंद्रगरलयोर्गुणदोषयोश्चबिंबप्रतिबिंबभावेनाभेदादुपादानज्ञानादीनांगृह्णन्नित्येकशब्दोपादानेनाभेदाध्यवसायाच्चसाधारणधर्मतेतिपूर्वस्माद्विशेषः। वस्तुतोभिन्नयोरप्युपमानोपमेयधर्मयोःपरस्परसादृश्यादभिन्नयोःपृथगुपादानंबिंबप्रतिबिंबभावइत्यालंकारिकसमयः॥ ६॥

संप्रसर्थालंकारेषु निरूपणीयेषुबहलालंकारघटकतयासुप्रसिद्धतयाचप्रथममुपमालंकारंलक्षयति उपमेति। अयंचलक्ष्यनिर्देशः। शेषंलक्षणं। सादृश्यलक्ष्मीश्चमत्कृतिजनकतातद्विशिष्टसादृश्यमितियावत्। धर्मधर्मिणोरभेदोपचाराल्लक्षणंव्याचष्टे यत्रेति। यत्रकाव्येवृत्तित्वंसप्तम्यर्थः। तच्चशक्तिलक्षणान्यतरसहकारेणबोधकत्वसंबंधेन। उपमानमधिकगुणंचंद्रादि। उपमेयंवर्ण्यमानंकामिनीवदनादि। सहृदयःकाव्यभावनापरिपक्वबुद्धिः। व्यंग्यस्यमर्यादाप्रतीतिनियमरूपाययासाव्यंजनेत्यर्थः। अत्रचोपमानोपमेययो

रितिस्वरूपकथनंनतुलक्षणांतर्गतंव्यावर्तनीयाभावादात्माश्रयापादकत्वाच्च। उपमानत्वोपमेयत्वयोरुपमाघटितत्वात्। एतच्चाग्रेव्यक्तीभविष्यति। इत्थंचालंकारत्वेसतिसादृश्यमुपमालंकारलक्षणंबोध्यम्। एवमग्रेप्यधिकारप्राप्तमलंकारत्वविशेषणंबोध्यं। हंसीत्यादि। अत्रतावदिवार्थेसादृश्येनिरूपितत्वसंसर्गेणहंस्यादेरन्वयः। सादृश्यस्यप्रयोजकत्वसंसर्गेणस्वर्गंगावगाहनाश्रयत्वरूपेसाधारणधर्मेतस्यचस्वरूपसंबंधेनकीर्तौसादृश्यस्यनिपातार्थतयानामार्थप्रतिसाक्षात्संबंधेनविशेष्यत्वेविशेषणत्वेचबाधकाभावात्। तथाचहंसीनिरूपितसादृश्यप्रयोजकस्वर्गंगाकर्मकावगाहनाश्रयत्ववतीकीर्तिरितिबोधः। नचैवंस्वर्गंगावगाहनमिवशब्दश्लेषाद्यग्रिमग्रंथेधात्वर्थस्यसमानधर्मत्वोक्तिर्विरुद्धेतिवाच्यं। तद्वाश्रयत्वस्यसमानधर्मत्वेतस्यतथात्वस्यौचित्यायातत्वेनविरोधाभावात्। तथासतितत्रैवकुतोनसादृश्यान्वयइतिचेन्न। धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेणशाब्दबोधेविशेष्यतयाविभक्त्यर्थोपस्थितेर्हेतुत्वात्। नचनिपातार्थभिन्नवृत्तित्वेनप्रकारताविशेषणीयेतिवाच्यं। घटोनपश्यतीत्यादौघटाद्यन्विताभावस्यकर्मतासंसर्गेणदर्शनेऽन्वयापत्तेः। यदितुधात्वर्थेर्पितातात्पर्यवशात्सादृशान्वयोनुभवसिद्धस्तदाधात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंबंधेननान्वयबुद्धिंप्रतिनञ्जन्योपस्थितेःप्रतिबंधकत्वमात्रंपरिकल्प्यघटोनपश्यतीत्यादौपूर्वोक्तान्वयबोधोनिराकरणीयइतिदिक्। एवमरविंदमिवसुंदरंवदनमित्यादावरविंदादिनिरूपितसादृश्यस्यप्रयोजकतासंसर्गेणसुंदरपदार्थैकदेशेपिसुंदरत्वेऽनुभवबलादन्वयस्तद्विशिष्टस्यचाभेदेनमुखादौ। इत्थंचारविंदनिरूपितसादृश्यप्रयोजकसौंदर्यवदभिन्नंवदनमित्यन्वयबोधः। अरविंदसुंदरमितिसमासेत्वरविंदपदेनारविंदनिरूपितसादृश्यप्रयोजकंलक्ष्यते। तच्चाभेदेनपदार्थैकदेशेसौंदर्येऽन्वेति। एवंचारविंदनिरूपितसादृश्यप्रयोजकाभिन्नसौंदर्यवदभिन्नंवदनमित्यन्वयबोधः। एकदेशान्वयायोगादरविंदपदमेवलक्षणयासर्वार्थबोधकं सुंदरपदंतुतात्पर्यग्राहकमित्येके। अरविंदमिववदनमित्यत्रारविंदनिरूपितसादृश्यवद्वदनमितिबोधः। सादृश्यस्यनिपातार्थतयाभेदेननामार्थान्वयेबाधकाभावात्। अरविंदमिवभातीत्यत्रभातेर्ज्ञानार्थकत्वेऽरविंदपदस्यारविंदनिरूपितसादृश्यप्रकारकज्ञानविषयेलक्षणातस्यचाभेदेनमुखादावन्वयः। शेषंतात्पर्यग्राहकं। पूर्वोक्तदिशावासादृश्यस्यैवप्रकारितासंसर्गेणधात्वर्थेऽन्वयः। अत्रैवसौंदर्येणेतिधर्मोपादानेतृतीयार्थस्यप्रयोज्यत्वस्यसादृश्येन्वयात्सौंदर्यप्रयोज्यारविंदनिरूपितसादृश्यप्रकारकज्ञानविषयइतिबोधः। आद्यकल्पेत्वरविंदपदमेवसर्वार्थबोधकमितरतात्पर्यग्राहकमितिध्येयं। इयंचसादृश्यस्यपदार्थांतरत्वमतेशाब्दबोधरीतिरुपदार्शिता। तस्यसमानधर्मरूपत्वेतुचंद्रइवमुखमित्यादौचंद्रवृत्तिधर्मवन्मुखमितिबोधः। अत्रैवाल्हादकमितिसमानधर्मोपादानेइवार्थस्यधर्मस्याल्हादकत्वेपदार्थैकदेशेऽन्वयः। तदस

हिष्णुतायांतुचंद्रनिष्ठाल्हादकत्ववतिआल्हादकपदस्यलक्षणा । चंद्रादिपदंतात्पर्यग्राहकं । चंद्रसदृशमित्यत्राप्येकदेशेसादृश्येचंद्रान्वयः ससंबंधिकत्वात् । सदृशपदंवाचंद्रसादृश्यविशिष्टेलाक्षणिकं । अत्रैवाल्हादकत्वेनेत्युक्तावभेदस्तृतीयार्थस्तस्यचसदृशपदार्थैकदेशेधर्मेऽन्वयः । तथाचाल्हादकत्वाभिन्नचंद्रवृत्तिधर्मवदभिन्नंमुखमितिबोधः । सदृशपदमेववासर्वार्थबोधकमितरतात्पर्यग्राहकमित्येवंविधान्वयसरणिश्रेणयस्तत्रतत्रशब्दव्युत्पत्तिनिपुणैरनुसंधेया । इत्यलंप्रसक्तानुप्रसक्तपरिचिंतनेन । पूर्णोपमेतीत्यनंतरमालंकारिकैरितिपूरणीयं । तत्त्वंच विशेषतउपात्तशब्दशक्तिप्रतिपादितोपमानोपमेयकत्वेसतिविशेषतःशब्दोपात्तसमानधर्मकत्वेचसतिविशेषतःस्वनिरूढशब्दगम्यत्वम् । स्वपदमुपमापरम् । उपमानलुप्तायामपिलक्षणयोपमानप्रतिपत्तेस्तद्वारणायशक्तीति । उपमेयलुप्तायांस्मरवधूयंतीत्यादावात्मनउपमेयस्याध्याहृतेनात्मानमितिशब्देनबोधनादुपात्तेतिशब्दविशेषणम् । एवमपितन्वीत्यनेनात्रोपमेयस्यकाव्यस्यसदृशंनदृश्यतइत्येवंविधायांलुप्तोपमानायामुपमानस्यचसदृशपदोपात्तत्वाद्विशेषतइतिउपमेयोपमानतावच्छेदकरूपेणेत्यर्थः । धर्मलुप्तायामप्युपमावाचकेनसामान्यतोधर्मस्योपात्तत्वाद्विशेषतइतिउपमाप्रयोजकतावच्छेदकरूपेणेत्यर्थः । वाचकलुप्तायामपिलक्षणयोपमानादिपदेनोपमावगमात्तद्वारणायविशेषतःस्वनिरूढेतिउपमायांचनिरूढाइववद्वायथाशब्दाइत्याद्यभियुक्तोक्तिसंगृहीताइवादयः । अत्रनिपातरूपस्यैवादेरुपसर्गवद्द्योतकत्वमेव । कथमन्यथा ‘शरैरुस्रैरिवोदीच्यानुद्धरिष्यन्रसानिवे’त्यादावुस्रादिपदोत्तरतृतीयादिसंगतिः । उस्रादेरुद्धरणक्रियांप्रत्यकरणत्वातइवार्थसादृश्यान्वयित्वेनकरणीभूतशरविशेषणत्वाभावाच्चद्योतकत्वेतूस्रादिपदस्योस्रसदृशपरतयोस्रसदृशैःशरैरितिशरविशेषणत्वेनतृतीयादिसंगतिरितिवैयाकरणमतंतुनादरणीयम् । उपास्यतेगुरुरित्यादौधात्वर्थासनक्रियायाअकर्मकतयाकर्मलकारानुपपत्तिरूपबाधकस्योपसर्गवाचकतायामिवेवादिवाचकतायामभावेनदृष्टांतवैषम्यस्यस्फुटत्वात् । विशेषणविशेष्ययोःसमानविभक्तिकतायां ‘विशेष्येणसहैकार्थंभवेद्यत्रविशेषणम् । तत्रलिंगादयःप्रायोविशेष्यस्थाविशेषणे’ इत्यनुशासनस्यैवोपमानोपमेययोरपितस्यांलिंगसंख्याविभेदेप्युपमानोपमेयता । ‘विभक्तिःपुनरेकैवउपमानोपमेययोः । इत्यनुशासनस्यसत्त्वेनोपमानपदोत्तरतृतीयादेःसाधुत्वार्थतयोपपत्तेश्च । तस्माद्वाचकत्वमेवेवादीनां । युक्तंचैतत् । अन्यथासकलालंकारिकसंमतस्यैवशब्दप्रयोगेश्रौतीत्वस्यदत्तजलांजलित्वापत्तेः । रूढिप्रयोजनयोरन्यतरस्याभावेनचंद्रादिपदेनचंद्रसदृशलक्षणायांनिषिद्धलाक्षणिकत्वरूपनेयार्थत्वदोषापत्तेश्च । अपि चइवादेर्द्योतकत्वनयेचंद्रादेरुपमानस्यपदार्थैकदेशतयातत्रसाधारणधर्मान्वयानुपपत्तिरितिदिक् । उ

पमोनसादि । उपमानत्वंचोपमानिरूपकत्वेनविवक्षितत्वम् । तदाश्रयत्वेनविवक्षितत्वंचोपमेयत्वम् । साधारणत्वंचधर्मस्वारसिकमौपचारिकंविंबप्रतिविंबभावकृतंश्लेषकृतंवस्तुप्रतिवस्तुभावेनसमासभेदाश्रयणेनेसनेकधाचित्रमीमांसायांप्रपंचितम् । तत्रस्वर्गंगावगाहनस्यतथात्वमौपचारिकंकीर्तौतस्यस्वारसिकत्वाभावात् । उपादानादितिवाचकस्योपादाननिर्देशः । इतरेषांतुशब्देनप्रतिपादनंतदितिचिंतनीयम् । साधारण्यप्रकारविशेषोपदर्शनायोदाहरणांतरमाह यथावेति । गुणदोषाविति । गुणदोषावर्थात्परस्य गृण्हन्जानन् बुधःपंडितः पूर्वंपूर्वेनिर्दिष्टंगुणंशिरसाश्लाघतेआंदोलितेनशिरसाअभिनंदयति परंपरतोनिर्दिष्टंदोषंकंठेनियच्छतिनिरुणद्धि वाचाकंठाद्बहिर्नोद्घाटयतीसर्थः कइव इंदुक्ष्वेडौचंद्रगरलेगृण्हन्नुपाददानईश्वरोहरइव। सोपिहिपूर्वंचंद्रंशिरसाश्लाघतेतत्पूर्वकंधारयति। परंचगरलंकंठेनियच्छतिस्थापयतीति 'क्ष्वेडस्तुगरलंविषमिसमरः'।शंकते अत्रयद्यपीति साधारणस्तत्वेनाभिमतोधर्मःगृण्हन्शिरसाश्लाघतेपूर्वमिसादिनोक्तोयद्यपिनैकोनसाधारणइतियोजना ।गृण्हन्निसादिनोक्तएकोपिधर्मःसाधारणोनेतिवा। यथाश्रुतेसाधारणस्यसाधारणत्वाभावोक्तेरसंगतत्वापत्तेः। साधारण्याभावेहेतुरुपमानइसारभ्यइतिभेदादिसंतेनोक्तः । समाधत्तेतथापीति । वस्तुगसासाधारण्याभावेपीसर्थः । चंद्रगरलयोरिसादियथाक्रमंचंद्रगुणयोर्गरलदोषयोश्चेसर्थः । विंबप्रतिविंबभावेनप्रतीयमानसादृश्ययोरुपमानोपमेयधर्मयोर्भिन्नशब्दोपात्तत्वरूपेण अभेदादभेदाध्यवसायात् । एतच्चसाधारणधर्मतेसग्रेतनेनान्वितं । ज्ञानादीसादिनाशिरसावहनाभिनंदनयोःकंठस्थापनतद्बहिरनुद्घाटनयोश्चसंग्रहः। गृण्हन्निसादीत्यादिनाचशिरसाश्लाघतेकंठेनियच्छतीसनयोःसंग्रहः। अभेदाध्यवसायादिति अभेदस्याध्यवसायादाहार्यनिश्चयादिसर्थः।साधारणधर्मतेतीति।साधारणधर्मत्वाभिमानविषयतेतीसर्थः। पूर्वस्मात्पूर्वोदाहरणादितिविशेषइसन्वयः । नचैवंसाधर्म्यप्रतीत्युपपादनेपिवस्तुतस्तदभावात्कथमुपमालक्षणसमन्वयइतिवाच्यं।चमत्कारविशेषप्रयोजकसाधारणत्वाध्यवसायविषयधर्मत्वस्यैवोपमालक्षणत्वमिसभिप्रायादिति। लोकेविंबप्रतिविंबभावव्यपदेशस्यगगनजलाशयादिगतचंद्रादिविषयतयाप्रसिद्धेः कथंप्रकृतेतद्व्यपदेशइसाशंकायामाह वस्तुतइसादि ।अभिन्नयोस्तथाध्यवसितयोःपृथगितिभिन्नशब्देनेसर्थः । विंबप्रतिविंबभावइति । विंबप्रतिविंबभावपदवाच्यमिसर्थः। समयइति संकेतइसर्थः ॥ ६ ॥

वर्ण्योपमानधर्माणामुपमावाचकस्यच ॥एकद्वित्र्यनु
पादानैर्भिन्नालुप्तोपमाष्टधा ॥ ७ ॥ तडिद्गौरींदुतु

ल्यास्याकर्पूरंतीदृशोर्मम ॥ कांत्यास्मरवधूयंतीदृष्टा तन्वीरहोमया॥ ८ ॥ यत्तयामेलनंतत्रलाभोमेयश्चतद्रतेः ॥ तदेतत्काकतालीयमवितर्कितसंभवं ॥ ९ ॥

उपमेयादीनांचतुर्णांमध्येएकस्यद्वयोस्त्रयाणांवाप्रतिपादकशब्दाभावेनलुप्तोपमेत्युच्यते । साचाष्टधा । यथा । वाचकलुप्ता १ धर्मलुप्ता २ धर्मवाचकलुप्ता ३ वाचकोपमेयलुप्ता ४ उपमानलुप्ता ५ वाचकोपमानलुप्ता ६ धर्मोपमानलुप्ता ७ धर्मोपमानवाचकलुप्ताचेति ८। तत्रोपमानलोपरहिताश्चत्वारोभेदास्तडिद्गौरीत्यादिश्लोकेनप्रदर्शिताः । तद्भिन्नोभेदाउत्तरश्लोकेनदर्शिताः। तत्रतडिद्गौरीत्यत्रवाचकलोपस्तडिदिवगौरीत्यर्थेउपमानानिसामान्यवचनैरितिसमासविधायकशास्त्रकृतः । इंदुतुल्यास्येत्यत्रधर्मलोपःसत्वैच्छिकोनशास्त्रकृतः । कांत्याइंदुतुल्यास्येत्यपिवक्तुंशक्यत्वात् । कर्पूरंतीत्यत्रधर्मवाचकलोपः । कर्पूरमिवाचरंतीत्यर्थेविहितस्यकर्पूरवदानंदात्मकाचारार्थकस्य क्विपइवशब्देनसहलोपात् । अत्रधर्मलोपऐच्छिकः । नयनयोरानंदात्मकतयाकर्पूरंतीतितदुपादानस्यापिसंभवादिति । कांत्यास्मरवधूयंतीत्यत्रवाचकोपमेयलोपः । अत्रकांत्येतिविशेषणसामर्थ्यात्स्वात्मानंकामवधूमिवाचरंतीत्यर्थस्यगम्यमानतयास्वात्मनउपमेयस्यसहोपमावाचकेनानुपादानात्सत्वैच्छिकः । स्वात्मानंस्मरवधूयंतीत्युपमेयोपादानस्यापिसंभवात् । काकतालीयमित्यत्रकाकतालशब्दौवृत्तिविषयेकाकतालसमवेतक्रियावर्तिनौ । तेनकाकागमनमिवतालपतनमिवकाकतालमितीवार्थेसमासाच्चताद्विषयादितिज्ञापकात्समासः । उभयत्रोपमेयंस्वस्यक्वचिद्गमनंतत्रैवरहसितन्व्याअवस्थानंच । तेनस्वस्यतस्याश्चसमागमःकाकतालसमागमसदृशइतिफलति । ततः काकतालमिवकाकतालीयमितिद्वितीयस्मिन्निवार्थेसमा

साच्चतद्विषयादितिसूत्रेणइवेप्रतिकृतावित्यधिकारस्थेनछप्रत्ययः । तथाचपतनदलितंतालफलंयथाकाकेनोपभुक्तमेवं रहोदर्शनक्षुभितहृदयातन्वीत्वेनोपभुक्तेतितदर्थः । ततश्चात्र काकागमनतालपतनसमागमरूपस्यकाककृततालफलोपभोगरूपस्यचोपमानस्यानुपादानात्प्रत्ययार्थोपमायामुपमानलोपः । समासार्थोपमायांवाचकोपमानलोपः । सर्वोप्ययंलोपश्छप्रत्ययविधायकशास्त्रकृतः । अवितर्कितसंभवमितिसाधारणधर्मस्यानुपादानेप्रत्ययार्थोपमायांधर्मोपमानलोपः । समासार्थोपमायांधर्मोपमानवाचकलोपइतिसूक्ष्मयादृष्ट्यावधारितव्यम् । एतेषामुदाहरणांतराणिविस्तरभयान्न लिख्यन्ते ॥ ७ ॥ ८ ॥ ९ ॥

पूर्णायामुपमानादिसमग्रतानियमप्रसिद्धेस्तद्विपरीतायांलुप्तोपमायांसर्वलोपनियमाशंकानिरासायलक्षणपूर्वकंतांविभजते वर्ण्येत्यादिना । चकारोवाशब्दार्थे । तदनंतरंच लोपेइत्यध्याहार्यं । एवंचेतरेतरयोगाविवक्षयावर्ण्यस्योपमानस्यधर्मस्योपमावाचकस्यवा लोपेअन्यतमानुपादानेलुप्तोपमा । साचएकद्वित्र्यनुपादानैरष्टधाभिन्नेतिपूर्वापराभ्यामुक्तंभवति । तद्दिदिक्षानुदाहरणानि । अर्थतोव्याचष्टे । उपमेयादीनामिति । वस्तुतोलाघवात्पूर्णाभिन्नत्वंलक्षणंवोध्यम् । लक्षणवाक्यगतंक्रममुपेक्ष्योदाहरणक्रमानुसारेणविभागंदर्शयतियथेत्यादि । वाचकलुप्तेति । वाचकत्वंचात्रानुपूर्वीविशेषवत्तयोपमावोधनेनिरूढत्वम् । तच्चशक्त्यानिरूढलक्षणयावा । तत्राद्यमिवादेर्द्वितीयंतु सुहृत्पदादेरितितदभावात्तडिद्गौरीत्यादौवाचकलोपः । समासानुशासनेननिरूढलक्षणावगमेप्यानुपूर्वीविशेषवत्तयाशब्दविशेषस्यतदवोधनात् । शास्त्रकृतइतिशास्त्रप्रयुक्तइत्यर्थः । कर्पूरंतीत्यत्रेति । अत्रसर्वप्रातिपदिकेभ्यःक्विप्वावक्तव्यइत्यनेनविहितः क्विप्लुप्तोपिस्मर्यमाणोधर्ममात्ररूपमाचारंवोधयति । कर्पूरपदंचलक्षणयाकर्पूरसादृश्यम् । तस्यचातिरिक्तत्वेपूर्ववत्प्रयोजकतासंसर्गेणाचारेऽन्वयोधर्मरूपत्वेत्वभेदेन । वस्तुतस्तुक्विप्लोपाप्रतिसंधानेपितथावोधात्कर्पूरादिशब्दाएवकर्पूरादिसादृश्यप्रयोजकाभिन्नंतत्सादृश्याभिन्नंवाचारंलक्षयंतीतियुक्तम् । ननु वाचकस्येवादेरनुपादानाल्लोपोयुक्तः । साधारणधर्मस्यत्वाचाररूपस्यक्विवुपात्ततयाकथंलोपस्तत्राह । कर्पूरवदानंदात्मकाचारार्थस्यक्विपइतिकर्पूरस्येवेतीवार्थेवतिः । आनंदात्मकोजनकतासंवंधे

न। वस्तुगत्या आनंदस्वरूपोयआचारस्तद्बोधकस्येत्यर्थः। ननुक्विप्लोपाज्ञानेप्याचारप्रतीतेःकर्पूरादिपदानामेवतद्बोधकत्वपक्षेकथंधर्मलोपःसंगमनीयइतिचेत्। अत्रप्रांचः। एवमपि तद्वाचकतयाविहितस्यक्विपोलोपात्तल्लोपव्यपदेशः। अतएवात्रसमानार्थकःक्यच्नोपात्तस्तस्यालुप्तत्वादित्याहुः। नव्यास्तु धर्ममात्ररूपस्याचारस्योपादानेप्यानंदत्वादिनाविशेषरूपेणानुपादानाद्धर्मलोपोयुक्तएव। अन्यथाइंदुतुल्यास्येत्यादेर्धर्मलुप्तोदाहरणस्यासंगतत्वापत्तेः। नचैवंक्यजादावपिधर्मलुप्तास्यादितिवाच्यं। इष्टापत्तेरित्याहुः। स्मरवधूयंतीत्यत्रेति। ननूपमानादाचारइतिकर्मभूतादुपमानादाचारेक्यचोविधानात्स्मरवधूंरतिमिवाचरंतीत्यवगमेप्यात्मानमन्यांवेतिकथंनिर्णयस्तत्राह। विशेषणेति। रत्यनुरूपाचरणस्यकांतिकरणत्वरूपविशेषणसामर्थ्यादित्यर्थः। कांतेःस्वरसतःस्वीयत्वावगमादितिभावः। नचात्मनउपमेयस्यतन्वीपदेनोपादानात्कथंलोपइतिवाच्यम्। तस्याद्वितीयांततयाकर्मभूतोपमेयासमर्पकत्वादात्मानमित्यध्याहृतेनैवतद्बोधात्। अत्रचस्मरवधूपदेनस्मरवधूसादृश्यंलक्ष्यते। तस्यचप्रयोजकत्वसंसर्गेणाभेदेनवाऽऽचारेऽन्वयः। तथाचस्मरवधूसादृश्याभिन्नआत्मकर्मकोयआचारस्तदाश्रयस्तन्वीतिबोधः। काकतालीयेति। वृत्तिविषयेसमासविषये। ज्ञापकादिति। इवार्थेसमासाभावेतद्विषयादित्यनेनेवार्थविषयसमासानुवादोऽनुपपन्नस्तज्ज्ञापकइत्यर्थः। उभयत्रकाकागमनतालपतनयोः। उपमेयमित्यनंतरंक्रमेणेतिशेषः। तेनेति। काकतालसमवेतक्रियापरयोःकाकतालपदयोरिवार्थेसमासेनेत्यर्थः। काकतालसमागमेति। अयंभावः। काकागमनतालपतनयोरुपमानत्वेतदुपमेययोःस्वीयगमनतन्व्यवस्थानयोःपृथगनुपात्तत्वेनोपमेयतयान्वयायोगात्काकतालसमागमएवोपमानम्। इत्थंचकाकतालसमागमसदृशंकाकतालपदार्थस्तस्यचाभेदेनस्वीयतन्वीसमागमरूपउपमेयेऽन्वयइति। ततइति। तादृशसमासोत्तरमित्यर्थः। इतितदर्थइति। काकतालपदलक्षितस्यकाककृततालफलोपभोगसदृशस्याभेदेनतन्वीरतिलाभरूपेणोपमेयेनान्वयादितिभावः। अत्रपतनदलितमितिरहोदर्शनक्षुभितहृदयेतिचबिंबप्रतिबिंबभावापन्नधर्मस्वरूपकथनंनत्वेवमन्वयाकारइतिबोध्यं। नचसकृदुच्चारिताभ्यांकाकतालपदाभ्यांकथमुपमानद्वयावगमइतिवाच्यं। अनुभवानुसार्यनुशासनेनव्युत्पत्तिवैचित्र्यस्यस्फुटंप्रतिपत्तेरिति। एवंदुरूहत्वात्पद्यंव्याख्यायतत्रोपमानलुप्तादींश्चतुरोपिभेदान्प्रदर्शयितुमाह। ततश्चेति। काकागमनेत्यादि। काकागमनतालपतनरूपोयःसमागमस्तद्रूपस्येत्यर्थः। इदंचकाकागमनमिवतालपतनमिवेतिमहाभाष्यगतविग्रहवाक्यविरोधशंकापरिहारायोक्तं। समागमस्यतादृशक्रियाद्वयाभिन्नत्वेनोक्तयुक्त्यातस्योक्तार्थएवपर्यवसानात्। विशिष्टोपमायांविशेषणोपमावगतिवत्समागमोपमायामपितदवयवक्रिययोर्यथायोगंगम्यमानामुपमामभिप्रे

त्यमहाभाष्यकृतांतादृशविग्रहवाक्यप्रणयनमित्याशयः। धर्मस्यानुपादानइति । तत्स्थाने 'अभवींत्कअब्रवीमिते' इतिपाठइतिभावः ॥७॥८॥ ९ ॥ इतिश्रीमत्तत्सदुपाख्यरामभट्ट सूरिवरात्मजवैद्यनाथविरचितायामलंकारचंद्रिकाख्यायांकुवलयानंदटीकायामुपमाप्रकरणंसंपूर्णम् ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

उपमानोपमेयत्वंयदेकस्यैववस्तुनः ॥ इंदुरिं
दुरिवश्रीमानित्यादौतदनन्वयः ॥ १० ॥

एकस्यैववस्तुनउपमानोपमेयत्ववर्णनमनन्वयः । वर्ण्यमानमपिस्वस्यस्वेनसाधर्म्येणान्वेतीतिव्युत्पत्तेः । अनन्वयिनोप्यर्थस्याभिधानंसदृशांतरव्यवच्छेदेनानुपमत्वद्योतनार्थंदुरिं दुरिवश्रीमानित्युक्तेश्रीमत्त्वेनचंद्रस्यनान्यःसदृशोस्तीतिसदृशांतरव्यवच्छेदोलक्ष्यते । ततश्चस्वेनापिसादृश्यासंभवादनुपमेयत्वेपर्यवसानं । यथावा ॥ गगनंगगनाकारंसागरःसागरोपमः ॥ रामरावणयोर्युद्धंरामरावणयोरिव ॥ पूर्वोदाहरणेश्रीमत्त्वस्यधर्मस्योपादानमस्ति । इहतुगगनादिषुवैपुल्यादेर्धर्मस्यतन्नास्तीतिशेषः ॥ १० ॥

यद्यप्युपमाननिरूपणानंतरंतन्मूलालंकारेपुसंभवत्सादृश्याउपमेयोपमैवप्रथमंनिरूपयितुमुचिता नत्वारोपितसादृश्यनिबंधनोनन्वयस्तथापितंद्वितीयसदृशव्यवच्छेदफलकतयातृतीयसदृशव्यवच्छेदफलिकामुपमेयोपमामपेक्ष्यशीघ्रोपस्थितिकमभिप्रेत्यप्रथमंनिरूपयति ।उपमानोपमेयत्वमिति ।उपमानत्वमुपमेयत्वंचेत्यर्थः। द्वंद्वांतेश्रूयमाणत्वात् विवक्ष्यतइतिचशेषः । एवंचैकस्यैववस्तुनोयदुपमानत्वमुपमेयत्वंचविवक्ष्यतेतदनन्वयइत्यन्वयः।असंभवशंकानिरासायमध्येउदाहरणोक्तिः।ननूक्तलक्षणस्य'भणितिरिवमतिर्मतिरिवचेष्टे'त्यादिरशनोपमायामतिव्याप्तिः।तत्रमत्यादेरेकस्यैववस्तुनउपमानत्वस्योपमेयत्वस्यचवर्णनात् । अथैकस्यवस्तुनोयदेकनिरूपितमुपमानत्वमुपमेयत्वंचेतिविवक्षितं एकपदस्यावृत्तिकल्पनात् । इत्थंच रशनोपमायांमत्यादेश्चेष्टादिनिरूपितमुपमानत्वंभणित्यादिनिरूपितंतूपमेयत्वमित्येकनिरूपितोपमानोपमेयत्व विरहान्नातिव्याप्तिरित्युच्यते।तदा'खमिवजलंजलमिवखं'इत्युपमेयोपमायामतिव्याप्तिः। तत्रैकस्यैववस्तुनोगगनस्यैकजलनिरूपितस्योपमानत्वस्योपमेयत्वस्यचवर्णनादितिचेन्मैवं । एकस्यैवेतिविरोधद्योतकैवकारबलेनस्वाश्रयनिरूपितयोरुपमानोपमेयत्वयोर्लाभेनक्काप्य

निप्रसंगाभावात् । अस्तिहि 'इंदुरिंदुरिवे' त्यनन्वयेउपमानत्वमुपमेयत्वंचस्वाश्रयेंदुनिरूपितं नतुरशनोपमायामुपमेयोपमायांवेतिसंक्षेपः । अनन्वयपदप्रवृत्तिनिमित्तमाह । वर्ण्यमानमपीति । नान्वेतीति । नसंवध्यतइत्यर्थः । साधर्म्यस्यभेदघटितत्वादितिभावः । नन्वेवंसत्यसंवद्धप्रलापत्वापत्तिरित्यतआह । अनन्वयिनोपीति । वाधितस्यापीत्यर्थः । अर्थस्यसाधर्म्यस्य अभिधानमाहार्यारोपरूपतयाप्रतिपादनं सदृशांतरव्यवच्छेदेनसदृशांतरव्यावृत्तिवोधद्वारेण । एतदेवविशदयति इंदुरित्यादिना । इत्थंचसदृशांतरव्यावृत्तिसूचनद्वाराऽनुपमत्वद्योतनरूपप्रयोजनवत्त्वादापाततोरुद्ररोदनार्थवादवत् द्वारमात्रतयासादृश्यप्रतिपादनेपिनासंवद्धप्रलापतापत्तिरितिभावः । उदाहरणांतरमाह यथावेति । गगनाकारंगगनसदृशं । इवेसतःप्राक्युद्धमित्यध्याहार्यम् । उदाहरणांतरप्रदर्शनेबीजमाह पूर्वोदाहरणेति । वैपुल्यादेरित्यादिपदाद्गांभीर्यदारुणत्वयोःसंग्रहः ॥ १० ॥ इत्यनन्वयप्रकरणम् ॥

पर्यायेणद्वयोस्तच्चेदुपमेयोपमानता ॥ धर्मोर्थइवपूर्णश्रीरर्थोधर्मइवत्वयि ॥ ११ ॥

द्वयोःपर्यायेणोपमानोपमेयत्वकल्पनंतृतीयसदृशव्यवच्छेदार्थम् । धर्मार्थयोःकस्यचित्केनचित्सादृश्येवर्णितेतस्याप्यन्येनसादृश्यमर्थसिद्धमपिमुखतोवर्ण्यमानंतृतीयसदृशव्यवच्छेदंफलति । यथावा ॥ खमिवजलंजलमिवखंहंसइवचंद्रश्चंद्रइवहंसः ॥ कुमुदाकारास्तारास्ताराकाराणिकुमुदानि ॥ पूर्वत्रपूर्णश्रीरितिधर्मउपात्तःइहनिर्मलत्वादिधर्मोनोपात्तइतिभेदः ॥ उदाहरणद्वयेपिप्रकृतयोरेवोपमानोपमेयत्वकल्पनं । राज्ञिधर्मार्थसमृद्धेःशरदिगगनसलिलादेर्नैर्मल्यस्यचवर्णनीयत्वात् । प्रकृताप्रकृतयोरप्येषासंभवति । यथा ॥ गिरिवगजराजोयंगजराजइवोच्चैर्विभातिगिरिः ॥ निर्झरइवमदधारामदधारेवास्यनिर्झरःस्रवति ॥ ११ ॥

अथोपमेयोपमांलक्षयति । पर्यायेणेति । अयौगपद्येनेत्यर्थः । वाक्यभेदेनेतियावत् । तत् उपमानोपमेयत्वं विवक्ष्यतइतिशेषोत्रापिवोध्यः । उपमेयोपमेतिलक्ष्यनिर्देशः । उपमेयेनोपमेतिव्युत्पत्तेः । धर्मोर्थइवेत्युदाहरणं । अर्थोधनं । पूर्णश्रीःपूर्णसमृद्धिः अत्रच धर्मार्थयोर्द्वयोर्वाक्यभेदेनोपमानत्वमुपमेयत्वंचवर्णितं । तत्राद्यवाक्येर्थस्योपमानत्वंधर्म

स्योपमेयत्वं । द्वितीयेतु तद्विपर्यासेनधर्मस्योपमानत्वमर्थस्योपमेयत्वमितिलक्षणसमन्वयः । उपमानोपमेयत्वमात्रोक्तावनन्वयेऽतिव्याप्तेर्द्वयोरित्युक्तम् । एवमपि 'समत्वंशरदिप्रापुरह्नोकुमुदतारका' इत्युभयविश्रांतसादृश्यायामुपमायामतिव्याप्तिः । तत्रद्वयोः कुमुदतारकयोःसादृश्याश्रयत्वरूपोपमेयत्वस्यैवतत्प्रतियोगित्वरूपस्योपमानत्वस्याप्यर्थतःप्रतीतेरतःपर्यायेणेत्युक्तम् । ननु 'भणितिरिवमतिर्मतिरिवचेष्टाचेष्टेवकीर्तिरतिविमलेति' रशनोपमायामतिव्याप्तिः तत्रद्वयोर्मतिचेष्टयोर्वाक्यभेदेनोपमानोपमेयत्ववर्णनादितिचेन्न । द्वयोरित्यनेनपरस्परमुपमानोपमेयत्वस्यविवक्षितत्वात् । अन्यथापर्यायपदेनैवानन्वयवारणेतद्वैयर्थ्यापत्तेरितिसंक्षेपः । ननूपमाप्रतीपोभयरूपायाउपमाद्वयरूपायावाउपमेयोपमायाअलंकारांतरत्वेकिंबीजमित्यतआह द्वयोरिति । तथाचार्थविशेषद्योतकतयाचमत्कृतिवैलक्षण्यमेवतत्रबीजमितिभावः । कथंतृतीयसदृशव्यवच्छेदलाभस्तत्राह धर्मार्थयोरिति । धर्मार्थयोर्मध्यइत्यर्थः । मुखतःशब्देन । तथाचप्राप्तस्यपुनर्वचनंतदितरपरिसंख्यार्थमितिन्यायादिहापितृतीयसदृशव्यावृत्तिलाभइतिभावः । खमिवेति । शरद्वर्णनमिदम् । खमाकाशमिवजलं कालुष्यापगमेननिर्मलत्वातिशयात् । शेषंस्पष्टं । निर्मलत्वादीत्यादिपदेनशैत्यातिशयपरिग्रहः । गिरिरिवेति । अत्रगजःप्रकृतः । अयमितिप्रकृतपरामर्शि सर्वनामनिर्दिष्टत्वात् । अतएवोपक्रमादग्रेप्ययमदधारेत्यन्वयोबोध्यः । अत्रपूर्वार्धेउच्चैर्विभातीतिसमानधर्मउपात्तः । उत्तरार्धेचस्रवतीतिसउक्तइतिदिक् ॥ ११ ॥ इत्युपमेयोपमाप्रकरणं ॥

प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् ॥ त्व
ल्लोचनसमंपद्मंत्वद्वक्त्रसदृशोविधुः॥ १२ ॥

प्रसिद्धोपमानोपमेयभावःप्रातिलोम्यात्प्रतीपम् । यथवा ॥ यत्वन्नेत्रसमानकांतिसलिलेमग्नंतदिंदीवरं मेघैरंतरितःप्रियेतवमुखच्छायानुकारीशशी ॥ येपित्वद्गमनानुसारिगतयस्तेराजहंसागतास्त्वत्सादृश्यविनोदमात्रमपिमेदैवेननक्षम्यते॥१२॥

प्रतीपमितिलक्ष्यनिर्देशः । ननूपमानोपमेयभावस्यैवविवक्षितत्वतयामुखादेरप्युपमानत्वसंभवाच्चंद्रइवमुखमित्युपमायामतिव्याप्तिरित्यतआह । प्रसिद्धेति । प्रसिद्धोपमानस्योपमेयभावउपमेयत्वंप्रतीपंप्रतीपपदवाच्यं । कुतःप्रातिलोम्यात्प्रसिद्धोपमानप्रतिकूलत्वात् । उपमेयभावप्रातिलोम्यादित्यविसर्गपाठेऽपिप्रसिद्धोपमानस्ययउपमेयभावस्तस्यप्रातिलोम्यादुपमानप्रतिकूलत्वादुपमानस्योपमेयत्वकल्पनंप्रतीपमित्युच्यतइतिव्याख्येयं।

ननुप्रसिद्धस्योपमानोपमेयभावस्यवैपरीत्यादितियथाश्रुतरीत्याएवंविधप्रातिलोम्यस्य तृतीयपंचमप्रतीपभेदाव्याप्तत्वेनप्रतीपपदप्रवृत्तिनिमित्तत्वायोगादिति।एवंचोक्तप्रकारेणोपमानप्रातिकूल्यस्यप्रतीपपदप्रवृत्तिनिमित्तत्वकथनेनप्रसिद्धोपमानप्रतिकूलधर्मःप्रतीपमितिप्रतीपपंचकसाधारणंसामान्यलक्षणमितिसूचितं । अतएवपंचमप्रतीपव्याख्यानावसरेवक्ष्यति।उपमानप्रातिलोम्यादिति । प्रतिकूलत्वंचतिरस्कारप्रयोजकत्वं। एतस्यचसकलप्रतीपभेदसाधारण्यंतत्रतत्रस्फुटीकरिष्यते। यथावेति। प्रोषितस्यप्रियांप्रतिवियोगवेदनानिवेदनमिदं।अयिप्रियेत्वदीयसादृश्येनविनोदनं विनोदो विरहयापनं तन्मात्रमपिममदैवेननक्षम्यते। एतदेवदर्शयतिर्यदित्यादिना। त्वन्नेत्रयोःसमानासाधारणीकांतिःशोभायस्यतथाविधंयादिंदीवरंतत्सलिलेमग्नं । वर्षर्तुनाजलवृद्धेः । तवमुखस्य छाययाकांत्या अनुकारीसदृशःशशी।मेघैरंतरिततस्तिरोहितः । येपीत्यपिभिन्नक्रमः त्वद्गमनसदृशगतयोयेराजहंसास्तेपिगताइति। अत्रकांतीत्यादिधर्मोपादानात्पूर्वोदाहरणवैलक्षण्यंबोध्यं। ननूपमानादुपमेयस्याधिक्यवर्णनारूपाद्व्यतिरेकालंकारादस्यकोभेदः। उच्यते। तत्रवैधर्म्यप्रयुक्तमुपमेयस्याधिक्यंविवक्षितमिहतूपमानतामात्रप्रयुक्तत्वात्साधर्म्यप्रयुक्तमिति ॥ १२ ॥

अन्योपमेयलाभेनवर्ण्यस्यानादरश्चतत् ॥ अलंगर्वेणतेवक्रकांत्याचंद्रोपिताहृशः ॥ १३ ॥

अत्युत्कृष्टगुणतयावर्ण्यमानस्यान्यत्र स्वसादृश्यमसहमानस्योपमेयंकिंचित्प्रदर्श्यतावतातस्यतिरस्कारोद्वितीयंप्रतीपंपूर्वस्मादपिविच्छित्तिविशेषशालि। यथावा ॥ गर्वमसंवाह्यमिमंलोचनयुगलेनकिंवहासिभद्रे ॥ संतीदृशानिदिशिदिशिसरस्सुननुनीलनलिनानि ॥ १३ ॥

प्रतीपांतरमाह । अन्योपमेयेति । अन्यदवर्ण्यमुपमानंतद्रूपंयदुपमेयंतस्यलाभेनवर्णनीयस्यमुखादेरनादरोगर्वपरिहारोपितत्प्रतीपमित्यर्थः । तस्यगर्वप्रसक्तिपूर्वकत्वेनोपमेयतायाअपिपूर्वमप्राप्त्याउपमानतिरस्कृतिविशेषप्रयोजकत्वादितिभावः । अतएव लाभेनेत्युक्तं नतुसत्त्वेनेति । अप्राप्तप्राप्तेर्लाभशब्दार्थत्वात् । विच्छित्तिविशेषेति । चमत्कारोत्कर्षइत्यर्थः ।उक्तरीत्योपमानतिरस्कारातिशयप्रतीतेरितिभावः । गर्वमिति। असंवाह्यंसंवहनायोग्यमपरिमितमितियावत् । भद्रेशोभनेइतिसंबोधनं । नन्वितिहेत्वर्थे । अव्ययानामनेकार्थत्वात् । पूर्वोदाहरणेकांत्येतिसमानधर्मोपादानमिहतुनेतिभेदः ॥ १३ ॥

वर्ण्योपमेयलाभेनतथान्यस्याप्यनादरः । कःक्रौ
र्यदर्पस्तेमृत्योत्वत्तुल्याःसंतिहिस्त्रियः ॥ १४ ॥

अत्युत्कृष्टगुणतयाक्वचिदप्युपमानभावमसहमानस्यावर्ण्ये
स्यवर्ण्युपमेयंपरिकल्प्यतावतातस्यतिरस्कारः । पूर्वप्रतीपवैप
रीत्येनतृतीयंप्रतीपम् । यथावा ॥ अहमेवगुरुःसुदारुणानामि
तिहालहलमास्मताततृप्यः ॥ ननुसंतिभवादृशानिभूयोभुव
नेस्मिन्वचनानिदुर्जनानाम् ॥ १४ ॥

वर्ण्योपमेयेति । अन्यस्यावर्ण्यस्य । अनादरोपितथाप्रतीपमित्यर्थः । अहमेवेति । सुदारुणानामतितीव्राणाम् । गुरुःश्रेष्ठः । तातेतिसानुकंपसंबोधने । मास्मतृप्यइतिदर्पं माकृथाइत्यर्थः ॥ १४ ॥

वर्ण्येनान्यस्योपमायाअनिष्पत्तिवचश्चतत् ॥ मु
धापवादोमुग्धाक्षित्वन्मुखाभंकिलांबुजम् ॥ १५ ॥

अवर्ण्येवर्ण्योपमित्यनिष्पत्तिवचनंपूर्वेभ्यउत्कर्षशालिचतुर्थं
प्रतीपम् । उदाहरणेमुधापवादत्वोक्त्योपमित्यनिष्पत्तिरुद्घा
टिता । यथावा ॥ आकर्णयसरोजाक्षिवचनीयमिदंभुवि ॥
शशांकस्तववक्त्रेणपामरैरुपमीयते ॥ १५ ॥

वर्ण्येनान्यस्येति । निरूपितत्वंतृतीयार्थः । वर्ण्यनिरूपितायाऽन्यस्यावर्ण्यस्योपमातस्याइत्यर्थः । अनिष्पत्तिवचः । उच्यमानाअनिष्पत्तिः 'कृदभिहितइतिन्यायात्' तत्प्रतीपम् । मुधेति । किलेतिवार्तायाम् । त्वन्मुखाभमंबुजमितिवार्त्तामुधा निष्प्रयोजनोऽपवादः । अलीकार्थकत्वेनापवादस्यनिष्प्रयोजनत्वं । उत्कर्षेति । उपमानतिरस्कारातिशयप्रयोजकत्वरूपेत्यर्थः । मुधापवादत्वोक्त्येति । उक्तार्थमेतत् । आकर्णयेति । वचनीयमलीकतयानिंदितम् । अतएवभुवीत्युक्तम् । लोकांतरेमुखासन्निधानेनविशेषादर्शनादलीकत्वग्रहायोगात् । संनिधानेऽपिविशेषाग्रहणात्पामरैरित्युक्तं । अत्रवचनीयपामरैरित्येताभ्यामुपमितेरनिष्पत्तिःप्रकाश्यते ॥ १५ ॥

प्रतीपमुपमानस्यकैमर्थ्यमपिमन्वते ॥ दृष्टं
चेद्वदनंतस्याः किंपद्मेनकिमिंदुना ॥ १६ ॥

उपमेयस्यैवोपमानप्रयोजनधूर्वहत्वेनोपमानकैमर्थ्यमुपमा

नप्रातिलोम्यात्पंचमंप्रतीम् । यथावा ॥ तदोजसस्तद्यशसः स्थिताविमौवृथेतिचित्तेकुरुतेयदायदा ॥ तनोतिभानोःपरिवेषकैतवात्तदाविधिः कुंडलनांविधोरपि ॥ केचिदनन्वयोपमेयोपमाप्रतीपानामुपमाविशेषत्वेनतदंतर्भावंमन्यंते । अन्ये तुपंचमंप्रतीपप्रकारमुपमानाक्षेपरूपत्वादाक्षेपालंकारमाहुः १६

प्रतीपमिति । कअर्थःप्रयोजनंयस्यतत्तथा । अनर्थकमितियावत्तस्यभावःकैमर्थ्यं । तदपिप्रतीपंमन्वते आलंकारिकाइतिशेषः । ननूपमानस्यपद्मचंद्रादेराल्हादविशेषरूपप्रयोजनसत्त्वात्कथमनर्थकत्वमतआह । उपमेयस्यैवेति । उपमानधूर्वहत्वेनोपमानकार्यकारित्वेन । अयंचोपमानकैमर्थ्येहेतुः । अतश्चोपमानकैमर्थ्यमित्यध्याहार्यं । आल्हादविशेषादेरन्यलभ्यत्वेनप्रयोजनत्वासंभवात्कैमर्थ्यमितिभावः । उपमानप्रयोजकधूर्वहत्वेनेतिपाठेउपमानंप्रयोजकंयस्याइतिबहुव्रीहिः । ननूपमानकैमर्थ्यस्योपमानाक्षेपश्चाक्षेपइतिवामनसूत्रेणाक्षेपालंकारत्वेनोक्तत्वात्कथंप्रतीपत्वमतआह । उपमानप्रातिलोम्यादिति । उपमानप्रतिकूलत्वादित्यर्थः । प्रतिकूलत्वंचतिरस्कारप्रयोजकत्वमित्युक्तम् । तथाचप्रतीतसामान्यलक्षणाक्रांतत्वात्प्रतीपांतर्भावएवोचितइतिभावः । तदोजसइति । नैषधीयेनैषधवर्णनमिदं विधिर्ब्रह्मातस्यनलस्यौजसःप्रतापस्यतद्यशसश्चस्थितौसत्यामिमौसूर्यचंद्रौवृथा प्रतापज्योत्स्नादेःकार्यस्यताभ्यामेवोपपत्तेर्निरर्थकाविति चित्तेयदायदाकुरुतेतदाभानोर्विधोश्चपरिवेषस्यपरिधेःकैतवाच्छलात्कुंडलनांवैयर्थ्यसूचिकांरेखावेष्टनांकरोतीत्यन्वयः । अत्रचनायंपरिवेषः किंतुकुंडलनेत्यपन्हुतौ कैमर्थ्यरूपप्रतीपस्यांगत्वात्तयोरंगांगीभावलक्षणःसंकरः । यद्यत्पापमित्यादिवच्चतत्पदेवीप्सायाअकरणंनदोषइतिबोध्यम् । केचिद्दंडिप्रभृतयः अनन्वयोपमाप्रतीपानामितिप्रतीपपदेनचात्राद्यभेदत्रयमेवगृह्यते नत्वंत्यभेदद्वयमपि । तत्रोपमितिक्रियानिष्पत्तेरभावेनोपमांतर्भावस्यासंभवात् । वस्तुतस्त्वाद्यभेदत्रयस्यापिनोपमांतर्गतिर्युक्ता । चमत्कारंप्रतिसाधर्म्यस्यप्राधान्येनाप्रयोजकत्वात् । सामर्थ्यनिबंधनउपमानतिरस्कार एवहितत्रचमत्कृतिप्रयोजकतयाविवक्षितः नतुसाधर्म्यमेवमुखतश्चमत्कारितयाविवक्षितमितिसहृदयसाक्षिकम् । एवमनन्वयोपमेयोपमयोरपिनसादृश्यस्यचमत्कारितया प्राधान्येनविवक्षा किंतुद्वितीयतृतीयसदृशव्यवच्छेदोपायतयेतिनतयोरप्युपमांतर्गतिर्युज्यते । अन्यथासादृश्यवर्णनमात्रेणोपमांतर्भावे ॥ 'धैर्यलावण्यगांभीर्यप्रमुखैस्त्वमुदन्वतः ॥ गुणैस्तुल्योसिभेदस्तुवपुषैवेदृशेनत' इतिव्यतिरेकालंकारस्याप्युपमांतर्गतिःस्यात् । तत्र साधर्म्यसमानाधिकरणवैधर्म्यमेवचमत्कारप्रधानं नतुसाधर्म्यमितिचेत्तुल्यमिदंप्रतीपा

दिष्वपीतिसहृदयैराकलनीयम्। एतवदेवास्वरसबीजमभिसंधायोक्तंकेचिदिति। अन्ये वामनादयः। अत्रचास्वरसबीजंप्रागेवावेदितं ॥ १६ ॥ इतिप्रतीपप्रकरणम्

विषय्यभेदताद्रूप्यरंजनं विषयस्य यत् ॥ रूपकंतत्त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः ॥ १७॥ अयंहिधूर्जटिः साक्षाद्येनदग्धाःपुरःक्षणात् ॥ अयमास्तेविनाशंभुस्तार्तीयीकंविलोचनम् ॥ १८ ॥ शंभुर्विश्वमवत्यद्यस्वीकृत्यसमदृष्टिताम् । अस्यामुखेंदुनालब्धेनेत्रानंदेकिमिंदुना ॥ १९ ॥ साध्वीयमपरालक्ष्मीरसुधासागरोदिता ॥ अयंकलंकिनश्चंद्रान्मुखचंद्रोतिरिच्यते ॥ २० ॥

विषय्युपमानभूतंपद्मादि विषयस्तदुपमेयंवर्णनीयंमुखादि विषयिणोरूपेणविषयस्यरंजनंरूपकं। अन्यरूपेणरूपवतःकरणात् तच्चक्वचित्प्रसिद्धविषय्यभेदपर्यवसितंक्वचिद्भेदेप्रतीयमानएवतदीयधर्मारोपमात्रपर्यवसितं । ततश्चरूपकंतावद्विविधं। अभेदरूपकंताद्रूप्यरूपकंचेति । द्विविधमपिप्रत्येकं त्रिविधं । प्रसिद्धविषय्याधिक्यवर्णनेनन्यूनत्ववर्णनेनानुभयोक्त्याचैवंरूपकंषड्विधं । अयंहीत्यादिसार्धश्लोकेनाभेदरूपकाणि । अस्यामुखेंदुनेत्यादिसार्धश्लोकेनताद्रूप्यरूपकाणि। आधिक्यन्यूनत्वानुभयोक्त्युद्देशक्रमप्रातिलोम्येनोदाहृतानि । येनदग्धाइतिविशेषणेनवर्णनीयेराज्ञिप्रसिद्धशिवाभेदानुरंजनाच्छिवस्य पूर्वावस्थातोवर्णनीयराजभावावस्थायांन्यूनत्वाधिक्ययोरवर्णनाच्चानुभयाभेदरूपकमाद्यम्। तृतीयलोचनप्रहाणोक्त्यापूर्वावस्थातोन्यूनताप्रदर्शनान्न्यूनाभेदरूपकंद्वितीयम् । न्यूनत्ववर्णनमप्यभेददार्ढ्यापादकत्वाच्चमत्कारिविषमदृष्टित्वपरित्यागेनजगद्रक्षकत्वोक्त्याशिवस्य पूर्वावस्थातोवर्णनीयराजभावावस्थायामुत्कर्षविभावनादधिकाभेदरूपकंतृतीयं ॥ एवमुत्तरेषुताद्रूप्यरूपकोदाहरणेष्वपिक्रमेणानुभभूयन्यूनाधिकभावाउन्नेयाः। अनेनैवक्रमे

णोदाहरणांतराणि॥ चंद्रज्योत्स्नाविशदपुलिनेसैकतेस्मिन्नश
रय्वावादद्यूतंचिरतरमभूत्सिद्धयूनोःकयोश्चित् ॥ एकोवक्तिप्र
थमनिहतंकैटभंकंसमन्यस्तत्त्वंसत्वं कथयभगवन्कोहतस्तत्रपू
र्वं॥ अत्रसत्वमित्यनेनयःकंसकैटभयोर्हंतागरुडध्वजस्तत्तादा
त्म्यंवर्णनीयस्यराज्ञःप्रतिपाद्यतंप्रतिकंसकैटभवधयोःपौर्वाप
र्यप्रश्नव्याजेनतत्तादात्म्यदार्ढ्यकरणात्पूर्वावस्थातउत्कर्षाप
कर्षयोरविभावनाच्चानुभयाभेदरूपकं ॥ वेधाद्वेधाभ्रमंचक्रेकां
तासुकनकेषुच ॥ तासुतेष्वप्यनासक्तःसाक्षाद्भर्गोनराकृतिः॥
अत्रसाक्षादितिविशेषणेनविरक्तस्यप्रसिद्धशिवतादात्म्यमुप
दिश्यनराकृतिरितिदिव्यमूर्त्तिवैकल्यप्रतिपादनान्न्यूनाभेदरू
पकं॥त्वय्यागतेकिमितिवेपतएषसिंधुस्त्वंसेतुमंथकृदतःकिम
सौबिभेति ॥द्वीपांतरेपिनहितेस्त्यवशंवदोद्यत्वांराजपुंगवनिषे
वतएवलक्ष्मीः॥अत्रत्वंसेतुमंथकृदितिसेतोर्मंथनस्यचकर्त्रापु
रुषोत्तमेनसहवर्णनीयस्यतादात्म्यमुक्त्वा तथापि त्वदागमनंसे
तुबंधायमंथनायवेतिसमुद्रेणनभेतव्यं।द्वीपांतराणामपित्वद्व
शंवदत्वेनपूर्ववद्द्वीपांतरेजेतव्याभावात् प्राप्तलक्ष्मीकत्वेनमंथ
नप्रसक्त्यभवाच्चेतिपूर्वावस्थातउत्कर्षविभावानादधिकाभेदरू
पकं ॥ किंपद्मस्यरुचिंनहंतिनयनानंदंविधत्तेनकिंवृद्धिंवाझष
केतनस्यकुरुतेनालोकमात्रेणकिं ॥ वक्त्रेंदौतवसत्ययंयदपरः
शीतांशुरुज्जृंभतेदर्पःस्यादमृतेनचेदिहतदप्यस्त्येवबिंबाधरे॥
अत्राऽपरःशीतांशुरित्यनेनवक्त्रेंदोःप्रसिद्धचंद्राद्भेदमाविष्कृत्य
तस्यचप्रसिद्धचंद्रकार्यकारित्वमात्रप्रतिपादनेनोत्कर्षाऽपकर्ष
योरप्रदर्शनादनुभयंताद्रूप्यरूपकं॥अचतुर्वदनोब्रह्माद्विबाहुर
परोहरिः ॥ अभाललोचनःशंभुर्भगवान्बादरायणः॥ अत्रहरा
वपरइतिविशेषणात्त्रिष्वपिताद्रूप्यमात्रविवक्षाविभाविता ।
चतुर्वदनत्वादिवैकल्यंचोक्तमितिन्यूनताद्रूप्यरूपकम् । इदं

विशेषोक्त्युदाहरणमितिवामनमतं।यदाह॥एकगुणहानौगुण साम्यदार्ढ्यैविशेषोक्तिरिति॥ किमसुभिर्ग्लपितैर्जडमन्यसेम यिनिमज्जतुभीमसुतामनः॥ ममकिलश्रुतिमाहतदर्थिकांन लमुखेंदुपरांविबुधःस्मरः॥ अत्रदमयंतीकृतचंद्रोपालंभेप्रसि द्धचंद्रोननिर्याणकालिकमनःप्रवेशश्रुतितात्पर्यविषयः।किंतु नलमुखचंद्रएवेति। ततोस्याधिक्यप्रतिपादनादधिकताद्रूप्य रूपकं। रूपकस्यसावयवत्वनिरवयवत्वादिभेदप्रपंचनंतुचि त्रमीमांसायांद्रष्टव्यम्॥ १७॥ १८॥ १९॥

रूपकंलक्षयति। विपय्यभेदेति। रूप्यतेइतरव्यावृत्ततयाज्ञायतेधर्मीअनेनेतिरूपंत द्रूपमस्यासौतद्रूपस्तस्यभावस्ताद्रूप्यंचंद्रकार्यकारित्वादि। विषयिणउपमानस्याभेदता द्रूप्याभ्यांविपयस्योपमेयस्ययद्रंजनमिवरंजनंस्वोपरक्तबुद्धिविषयीकरणमितियावत्। तद्रूपकमित्यर्थः। रूपकंतदित्येवपाठः। रूपकंत्वितिपाठेतुतदित्यध्याहार्यम्। उपात्त विंवाविशिष्टविपयधर्मिकाहार्यारोपनिश्चयविपयीभूतमुपमानाऽभेदताद्रूप्याऽन्यतररू पकमितितुनिष्कर्षः। मुखंचंद्रइत्यादौनामार्थयोरभेदान्वयव्युत्पत्तिवशादाहार्यचंद्राभे दनिश्चयाल्लक्षणसमन्वयः। मुखमपरश्चंद्रइत्यत्रतुनचंद्राभेदोविपयः। अपरइतिभेदस्य विवक्षितत्वात्। अपितुचंद्रकार्यकारित्वरूपंताद्रूप्यमितितत्रापिलक्षणसंगतिः। नचत स्यमुखेसत्वात्कथमारोपइतिवाच्यम्। चंद्रकार्यसजातीयकारित्वस्यैवमुखेसत्वादिति। यद्यपिनामार्थयोरभेदान्वयानुरोधादिहापिचंद्रपदलक्षितस्यतत्कार्यकारिणोऽभेदसंस र्गेणैवमुखेऽन्वयादभेदरूपकमेव तथाप्युपमानतावच्छेदकरूपेणाभेदभानेएवाभेदरूप कत्वं तत्कार्यकारित्वादिरूपेणा भेदभानेतुताद्रूप्यरूपकत्वमितितात्पर्यम्। अत्रकमलम नम्भसिकमलेचकुवलयेतानिकनकलतिकायामूइमित्याद्यतिशयोक्तिवारणायोपात्तेति विषयविशेपणम्। आरोपश्चनिषेधानंगकत्वेनविशेषणीयः। तेनापन्हुतौनातिव्या प्तिः। भ्रांतिवारणायाहार्येति॥ 'त्वत्पादनखरत्नानांयदलक्तकमार्जनम्। इदंश्रीखंडलेपेनपाण्डुरीकरणंविधोः'। इतिनिदर्शनावारणायविंवाविशिष्टेति। सं शयोत्प्रेक्षयोर्निरासायनिश्चयेत्युक्तमितिसंक्षेपः। आधिक्येत्यादि। आधिक्यमु पमानस्यस्वाभाविकीमवस्थामपेक्ष्योपमेयतादात्म्यावस्थायांवोध्यम्। एवंन्यूनत्व मपि। अनुभयमाधिक्यन्यूनत्वोभयरहितमभेदताद्रूप्यान्यतरमात्रम्। अयंहीत्यादि। अयंवर्ण्यमानोराजा येनहेतुना पुरोनगर्यः। शिवस्यापित्रिपुरदग्धृत्वात्सएवाय मितिभावः। तार्तीयीकमिति। तृतीयमेवतार्तीयीकम्। तीयादीकक्स्वार्थे

वावाच्यइतिवार्तिकानुसारात् । विलोचनंत्रिनेसन्वयः । शंभुरिति । अत्राप्य यमित्यनुपंजनीयम् । अन्यथाऽतिशयोक्त्यापत्त्यारूपकोदाहरणत्वासंगतेः । अघराज भावावस्थायांसमदृष्टितांसमसंख्यलोचनतामेकरूपलोचनवत्तांच । मुखेंदुनेति अत्रें दुपदमिंदुकार्यकारिपरम् । किमिंदुनेतिप्रसिद्धचंद्राद्भेदविवक्षणात् । अतश्चंद्रताद्रू प्यरूपकमिदम् । नचान्नोत्तरपदार्थप्राधान्यादिंदुकार्यकारिणिमुखाभेदभानान्मुखाभेद रूपकंस्यान्नतुचंद्रताद्रूप्यरूपकमितिवाच्यं । व्युत्पत्तिवैचित्र्येणमुखस्यस्वनिष्ठाभेदप्रति योगित्वसंसर्गेणान्वयाभ्युपगमाद्विशेषणानुयोगिकस्यापिविशेषणसंबंधतायाःस्वामित्व स्यपष्ठ्यर्थत्ववादिभिःप्राचीनैश्चैत्रस्यधनमित्यादावंगीकारात् । एवंचमुखनिष्ठाभेदप्रति योगीचंद्रस्तत्कार्यकारीवेतिबोधान्नमुखाभेदरूपकापत्तिर्मुखप्रतियोगिकाभेदस्याभाना दित्येवमन्यत्राप्यूह्यम् । असुधेति । सुधासागरादुदिताउत्पन्ना प्रसिद्धालक्ष्मीरियंतुनतथे तिन्यूनत्वोक्तिः । अतिरिच्यतइति । निष्कलंकतयाअधिकोभवतीत्यर्थः । लक्षणश्लो कंव्याचष्टे । विषय्युपमानेत्यादि । विषयिणोऽभेदेनरूपेणचेतिपाठः । रूपेणआल्हा दकत्वादिनाताद्रूप्येण । क्वचित्ताद्रूप्येणचेत्येवपाठः । परमार्थतस्तु । प्रामाणिकपुस्तकेषु विषयिणोरूपेणविषयस्यरंजनमितियुक्ततरःपाठः । तेनतच्चेत्यादेर्नपौनरुक्त्यमितिध्ये यं । हरिद्रादिनापटादिरंजनेप्रयुक्तस्यरंजनशब्दस्येहप्रवृत्तौबीजमाह । अन्यरूपेणेति । रूपंरक्तपीतादिकं । अभेदताद्रूप्येचतथाचान्यदीयधर्मेणान्यस्यतद्वत्त्वासंपादनत्वसामा न्यादिहगौणरंजनशब्दप्रयोगइतिभावः । तच्चेति । रंजनंचेत्यर्थः । प्रसिद्धेति । कवि संप्रदायप्रसिद्धोपमानाभेदेनलब्धात्मकमित्यर्थः । रूपपदस्याभेदताद्रूप्योभयसाधारण त्वादितिभावः । अभेदेनरूपेणचेतिपाठेतुतच्चेत्यत्रचशब्दोहेत्वर्थकः । तेनपूर्वोक्तस्यैवस मर्थनमितिनपौनरुक्त्यं । तावद्विधांतरोक्तेःप्रागुद्देशक्रमप्रातिलोम्येनेति । निर्देशक्रम वैपरीत्येनेत्यर्थः । एतदेवविशदयति । येनेत्यादि । विशेषणेनेतिहेतौतृतीया । पुरदग्धृ त्वविशेषणहेतुकशिवाभेदानुरंजनादित्यर्थः । ननुन्यूनत्ववर्णनेभेदापकर्षयोःप्रतीतेःकथं चमत्कारितेत्यतआह । अभेददार्ढ्योपादकत्वादिति । विशेषनिषेधस्यशेषाभ्यनुज्ञानफ लकतयानिषिद्धव्यतिरिक्तसकलगुणशालिताप्रतीतावेकदेशविकृतमनन्यवद्भवतीति न्यायेनाभेदनिश्चयसंपादकत्वादित्यर्थः । विभावनात्प्रकाशनात् । चंद्रज्योत्स्नेति । राजा नंप्रतिकस्यचिदुक्तिः । हेभगवन् चंद्रज्योत्स्नावद्विशदंश्वेतंपुलिनंयस्यतथाभूतेस्मिन्शर य्वाःशरयूनामकनद्याःसैकतेसिकतामयदेशेकयोश्चित्सिद्धतरुणयोश्चिरतरमतिचिरका लंवादरूपंद्यूतमभूत । कीदृक्तत्राह । एकःसिद्धयुवाकैटभंदैत्यविशेषंप्रथमंनिहतंवक्तिवदति अन्यःकंसंप्रथमंनिहतंवक्ति सकंसकैटभयोर्निहंतात्वंतत्रतयोर्मध्येपूर्वंकोहतइतितत्त्वंकथ येत्यन्वयः । यद्यपिमुनिप्रभृतावेवभगवन्नित्यामंत्रणमुचितंनराजादौतथापिराज्ञोभगवत्ता

दात्म्यवर्णनादनौचित्यंपरिहरणीयं। क्वचित्तुभवतेतिपाठः।अत्रज्योत्स्नापदेनैवचंद्रिकालभेपिचंद्रपदंशारदपूर्णचंद्रपरतयानापुष्टार्थं।पुष्पमालेत्यत्रपुष्पपदमिवोत्कृष्टपुष्पपरतयेतिबोध्यं। वादयोग्यतासूचनाययूनोरित्युक्तं।अयंहीत्युदाहरणेऽभेदारोपहेतुभूतंपुरदाहकत्वरूपंसाधर्म्यमुपात्तमिहतुजगद्रक्षकत्वादिकंतद्गम्यमानमितिभेदः। वेधाइति। द्वेधाकांताधर्मिकत्वकनकधर्मिकत्वरूपविधाद्वययुक्तंभ्रमंवलवदनिष्टाननुबंधिसुखसाधनत्वभ्रमं। सर्वेषामपिभ्रमाणांवेधसानिर्माणेपिप्राधान्यविवक्षयेत्थमभिधानं। अयमास्तइत्युदाहरणेशंभुसादृश्यंगम्यमानमिहत्वनासक्तिरूपंतदुपात्तमितिभेदः।त्वय्यागतइति। राजानंप्रतिकवेरुक्तिः।सेतुश्चमंथश्चेतिद्वंद्वः।मंथनंमंथोमृतमंथनं।द्वीपांतरेपीत्यपिनाद्युतरामेतत्द्वीपेनास्तीतिसूच्यते। अद्यराजभावावस्थायांशंभुर्विश्वमित्यत्रविश्वसंरक्षकत्वंसादृश्यमुपात्तमिहतुनेतिभेदः। किंपद्मस्येतिदर्यितांप्रतिनायकोक्तिः। तववक्त्ररूपेंदुकार्यकारिणिसत्ययमपरःप्रसिद्धःशीतांशुश्चंद्रोयदुज्जृंभतेउदितोभवतितस्मात्तववक्त्रेंदुःपद्मस्यरुचिंकांतिंकिंनहंति। 'प्रयोजनमनुद्दिश्यनमंदोपिप्रवर्तते' इतिन्यायात्प्रयोजनस्यान्यतःसंभवेतदुज्जृंभणस्यासंगतेरिति। किंनहंतीतिकाकु। अपितुहंत्येवेतिपर्यवसानेतदुज्जृंभणंवृथेतिप्रतीतिपर्यवसानं।एवमग्रिमवाक्ययोरपि झषोमकरःकेतनंचिन्हमस्यतथाभूतस्यसमुद्रस्यकामस्यच आलोकमालोकःप्रकाशश्च तन्मात्रेणअमृतेनदर्पोभिमानउज्जृंभणहेतुःस्याच्चेदयुक्तमेतत् । यतइहवक्त्रेंदौबिम्बाधरेतदप्यस्त्येवेतिसमुचितपदाध्याहारेणयोजनीयम् । यच्छब्दस्योत्तरवाक्यगतत्वेनतच्छब्दाक्षेपक्षमत्वान्नतदनुपादानेपिन्यूनपदत्वदोषः। कार्यकारित्वमात्रेत्यनेनाभेदव्यावृत्तिः। अस्यांमुखेंदुनेत्यत्रकिमिंदुनेतिपुनरुपादानमात्रंभेदविवक्षाज्ञापकम् इहत्वपरशब्दस्याप्युपादानमितिविशेषः। अचतुर्वदनइति। बादरायणोव्यासः। भालेलोचनंयस्येतिव्याधिकरणत्वेपिगमकत्वाद्बहुव्रीहिः। ननु हरावपरइतिविशेषणात्तदंशेएवताद्रूप्यरूपकंस्यात् इतरांशेत्वभेदरूपकमेवेत्याशंक्याह। अत्रेति। त्रिष्वपीति। एकत्रानेकारोपरूपायां रूपकमालायामवैरूप्यायतात्पर्यग्राहकस्यैकत्रास्थितस्यापिसाधारण्यमेवोचितमितिभावः। अयमेवचसाध्वीत्यादिपूर्वोदाहरणाद्विशेषः। न्यूनरूपकस्यचमत्कारित्वंपूर्वमुक्तंतद्बद्धसंमत्यादृढयति। इदमिति। यदाहेत्यनंतरंसइतिशेषः। एकगुणहानौअभिहितायामितिशेषः। गुणसाम्यदार्ढ्यंशेषगुणप्रयुक्तसाम्यायययोगव्यवच्छेदः। चतुर्वदनत्वाद्येकगुणव्यतिरेकस्यप्रमाणान्तरसिद्धस्यपुनर्वचनंशेषगुणाभावपरिसंख्यार्थंपर्यवस्यतीतिभावः। अत्रचरूपकप्रभेदत्वेनैवचमत्कारोपपत्तौ नाऽलंकारांतरत्वंन्यूनत्ववर्णनस्ययुक्तम्। सामग्रीकालीनकार्याभावस्यत्वलंकारांतरासंभिन्नस्यतद्वक्ष्यमाणंयुक्तमित्यस्वरसोमर्तामित्यनेनसूचितः। किमसुभिरिति। जडेतिमूर्ख

जलमयसाधारणंचंद्रसंबोधनं । ग्लपितैर्नष्टैरसुभिर्निमित्तैभूतर्मामसुतायादमयंत्वामनो मयिनिमज्जतुनिलीयतामितिमन्यसे। किमितिसोपहासकाकुः । तेनमैवंमंस्थाइत्यर्थः। अत्रहेतुमाह । किलनिश्चितं । ममविबुधःपंडितःस्मरः । तदर्थिकांसःप्राणनिर्गमकालीनमनःप्रवेशअर्थोयस्यास्तांश्रुतिम् । नलमुखेंदुपरां मनःप्रवेशाधिकरणत्वेननलमुखचंद्रतात्पर्यवतीमाहेति । अयंकलंकिनइत्युदाहरणे दोषशून्यत्वप्रयुक्तंशाब्दमाधिक्यं इहतुगुणविशेषप्रयुक्तंगम्यमानंतदितिविशेषः । सावयवत्वनिरवयवत्वादीति । आदिनासमस्तवस्तुविषयत्वादिरूपैतत्प्रभेदानाम्परंपरितत्वरूपभेदांतरस्यचपरिग्रहः । तथाहि सावयवंनिरवयवंपरंपरितंचेतित्रिविधंरूपकम् । प्रत्येकंक्रमेण द्विविधम् । समस्तवस्तुविषयमेकदेशविवर्तिच केवलम्मालाच श्लिष्टवाचकमश्लिष्टवाचकंचेति । श्लिष्टाश्लिष्टभेदयोःकेवलमालारूपत्वाभ्यामंसंचतुर्विधमित्यष्टौभेदाः । तत्र ‘ ज्योत्स्नाभस्मच्छुरणधवलाबिभ्रतीतारकास्थीन्यंतर्धानव्यसनरसिकारात्रिकापालिकीयम्॥ द्वीपाद्द्वीपंभ्रमतिदधतीचंद्रमुद्राकपालेन्यस्तंसिद्धांजनपरिमलंलांछनस्यछलेन’ ॥इतिपद्ये रात्रौकापालिकीत्वारोपस्यप्रधानतयाऽवयविनोऽवयवरूपाणिज्योत्स्नाभस्मेत्यादिरूपकाणीतिसावयवत्वं समस्तस्यवस्तुनआरोप्यमाणस्यशब्दविषयत्वंचद्रष्टव्यम् । ‘प्रौढमौक्तिकरुचःपयोमुचांबिंदवःकुटजपुष्पबंधवः ॥ विद्युतांनभसिनाट्यमंडलेकुर्वतेस्मकुसुमांजलिश्रियम्’ ॥ इत्यत्रप्रधानस्यनभसिनाट्यमंडलत्वारोपस्यावयवभूतंविद्युतांनर्तकीत्वरूपणमार्थं नशाब्दमित्येकदेशेविशेषेणशाब्दतयावर्तनादेकदेशविवर्तित्वम् । ‘ कुरंगीवांगानिस्तिमितयतिगीतध्वनिषुयत्सखींकांतोदंतंश्रुतमपिपुनःप्रश्नयतियत् ॥ अनिद्रंयच्चांतःस्वपितितदहोवेद्म्यभिनवांप्रवृत्तोस्याःसेक्तुंहृदिमनसिजःप्रेमलतिकां ॥’ इत्यत्रप्रेमलतिकामित्यमालारूपंनिरवयवं। ‘ सौंदर्यस्यतरंगिणीतरुणिमोत्कर्षस्यहर्षोद्गमःकांतेःकार्मणकर्मनर्मरहसामुल्लासनावासभूः॥ विद्यावक्रगिरांविधेरनवधिप्रावीण्यसाक्षात्क्रियाबाणाःपंचशिलीमुखस्यललनाचूडामणिःसाप्रिया॥’ इत्यत्रचमालारूपंनिरवयवंबोध्यं। एवं ‘अलौकिकमहालोकप्रकाशितजगत्त्रयः॥ स्तूयतेदेवसद्वंशमुक्तारत्नंनकैर्भवान् ॥’ इत्यत्रवेणुकुलयोःश्लिष्टेनवंशपदेनकुलेवेणुत्वारोपपूर्वकएवराज्ञिमुक्तारत्नत्वारोपइतिश्लिष्टवाचकंकेवलपरंपरितरूपकंविद्वन्मानसेत्यादावेतदेवमालारूपम् । चतुर्दशलोकवल्लिकंदइत्यत्राश्लिष्टवाचकंकेवलपरंपरितं। पर्यंकोराज्यलक्ष्म्याइत्यादावालानंजयकुंजरस्येत्यादौचाश्लिष्टवाचकंमालापरंपरितंचद्रष्टव्यं। विस्तरभयान्नेहप्रपंच्यते । इत्यलंकारचंद्रिकायांरूपकप्रकरणम् ॥ १७ ॥ १८॥ १९ ॥

परिणामःक्रियार्थश्चेद्विषयीविषयात्मना ॥

प्रसन्नेनदृगब्जेनवीक्षतेमदिरेक्षणा ॥ २० ॥
यत्रारोप्यमाणोविषयीकिंचित्कार्योपयोगित्वेननिबद्ध्यमानः स्वतस्तस्यतदुपयोगित्वासंभवात्प्रकृतात्मतापरिणतिमपेक्ष तेतत्रपरिणामालंकारः । अत्रोदाहरणंप्रसन्नेनेति । अत्रहि अब्जस्यवीक्षणोपयोगित्वंनिबद्ध्यतेनतुदृशः।मयूरव्यंसकादि समासेनउत्तरपदार्थप्राधान्यात् । नचोपमितसमासाश्रयणे नदृगब्जमिवेतिपूर्वपदप्राधान्यमस्तीतिवाच्यं । प्रसन्नेनेतिसा मान्यधर्मप्रयोगादुपमितंव्याघ्रादिभिःसामान्याप्रयोगइतित दप्रयोगएवोपमितसमासानुशासनात् ।अब्जस्यवीक्षणोपयो गित्वंनस्वात्मनासंभवत्यतस्तस्यप्रकृतदृगात्मतापरिणत्यपे क्षणात्परिणामालंकारः । यथावा ॥ तीर्त्वाभूतेशमौलिस्रजम मरधुनीमात्मनासौतृतीयस्तस्मैसौमित्रिमैत्रीमयमुपकृतवा नातरंनाविकाय ॥ व्यामग्राह्यस्तनीभिःशबरयुवतिभिः कौतु कोदंचदक्षंकृच्छ्रादन्वीयमानःक्षणमचलमथोचित्रकूटंप्रतस्थे ॥ अत्रारोप्यमाणआतरःसौमित्रिमैत्रीरूपतापत्त्यागुहोपका रलक्षणकार्योपयोगीनस्वात्मना गुहस्यरघुनाथप्रसादैकार्थि त्वेनवेतनार्थित्वाभावादितिपरिणामालंकारः ॥ २० ॥

परिणामंलक्षयति । परिणामइति । विषयिनिष्ठायाःप्रकृतकार्योपयोगिताया अवच्छेदिकाविषयतात्मतापरिणतिःपरिणामः।साचविषयतादात्म्याध्यवसायविषय ता । एवंचविषयाभेदस्यैवविषयिणिविवक्षणादृगभिन्नेऽब्जेनेतिस्वारसिकएववोधो नतुरूपकइवदृङ्निष्ठाभेदप्रतियोगिनाऽब्जेनेत्यनुयोगित्वमुखइतिरूपकाद्भेदोवोध्यः।अ समासेप्युदाहरति । तीर्त्वेति । मुरारिनाटकगतमेतत्पद्यम् । आत्मनातृतीयःसीता लक्ष्मणसहितइतियावत् । असौप्रक्रांतोरामोभूतेशस्यशंभोर्मौलिमालारूपाममरनदींग ांतीर्त्वातस्मैनाविकायगुहसंज्ञायनिषादपतयेसौमित्रेर्लक्ष्मणस्यमैत्रीरूपमातरंतरणमू ल्यमुपकृतवानुपकाररूपतयादत्तवान् । अथोऽनंतरंचित्रकूटंप्रतिप्रतस्थेप्रस्थितवान् । कदृशः । व्यामेनतिर्यक्प्रसारितभुजद्वयांतरालेनग्राह्यौतावत्परिणाहौस्तनौयासांत थाभूताभिःशबराणांव्याधानांयुवतीभिःकौतुकेनोदंचंतिविकसंत्यक्षीणियत्रक्रियायांत थाकृच्छ्रात्क्लेशादतएवक्षणमन्वीयमानोऽनुगम्यमानइत्यर्थः॥इतिपरिणामप्रकरणं॥२०॥

वहुभिर्वहुधोल्लेखादेकस्योल्लेखइष्यते ॥ स्त्रीभिः कामोर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षिसः ॥ २१ ॥

यत्रनानाविधधर्मयोग्येकंवस्तुतत्तद्धर्मयोगरूपनिमित्तभेदेनानेकेनग्रहीत्राऽनेकधोल्लिख्यतेतत्रोल्लेखः । अनेकधोल्लेखनेरुच्यर्थित्वभयादिकंयथार्हंप्रयोजकं । रुचिरभिरतिः ।आर्थित्वं लिप्सा । स्त्रीभिरित्याद्युदाहरणम् । अत्रैकएवराजासौंदर्यवितरणपराक्रमशालीतिकृत्वास्त्रीभिरर्थिभिःप्रत्यर्थिभिश्च रुच्यर्थित्वभयैःकामकल्पतरुकालरूपोदृष्टः । यथावा ॥ गजत्रातेतिवृद्धाभिःश्रीकांतइतियौवतैः । यथास्थितश्चवालाभिर्दृष्टः शौरिः सकौतुक ॥ अत्रयस्तथाभीतंभक्तंगजंत्वरयात्रायतेस्मसोयमादिपुरुषोत्तमइतिवृद्धाभिः । संसारभीत्यातदभयार्थिनीभिःकृष्णोयंमथुरापुरंप्रविशन्दृष्टः ॥ यस्तथाचंचलत्वेनप्रसिद्धायाः श्रियोपिकामोपचारवैदग्ध्येननित्यंवल्लभःसोऽयंदिव्ययुवतियुवतिसमूहैःसोत्कंठैर्दृष्टः । बालाभिस्तद्बाह्यगतरूपवेषालंकारदर्शनमात्रलालसाभिर्यथास्थितवेषादियुक्तोदृष्टइतिबहुधोल्लेखः । पूर्वकामत्वाद्यारोपरूपकसंकीर्णः । अयंतुशुद्धइतिभेदः ॥ २१ ॥

अथोल्लेखालंकारंलक्षयति । वहुभिरिति । एकस्यवहुधोल्लेखादिसन्वयः । उल्लेखनं विषयीकरणमुल्लेखः । हेतौपंचमी । तथाचैवंविधोल्लेखाद्धेतोरुल्लेखइष्यते उल्लेखइतिव्यवह्रितइत्यर्थः । व्यवहारंप्रतिलक्षणस्यप्रयोजकत्वात् । स्त्रीभिरिति । स्वर्द्रुःस्वर्गसंबंधिद्रुमःकल्पतरुः । कालोयमः । सप्रकृतोराजा । श्लोकंव्याचष्टे । यत्रेति । नानाविधेति सौंदर्यदातृत्वशूरत्वादिरूपेत्यर्थः । तत्तद्धर्मेतिरुच्यर्थित्वभयादिरूपेत्यर्थः । एतच्चस्वरूपकथनंनतुलक्षणांतर्गतम् । ननुद्वाभ्यांग्रहीतृभ्यांनिमित्तद्वयवशात्प्रकारद्वयेनोल्लेखेऽव्याप्तिरतआह । अनेकेत्यादि । तथाचलक्षणेवहुपदमनेकपरमितिभावः । एवंचग्रहीतृविषयाद्यन्यतमानेकत्वप्रयुक्तमेकस्योल्लिख्यमानानेकप्रकारत्वमुल्लेखइतिलक्षणंवोध्यं । सौंदर्यस्यतरंगिणीत्यादिमालारूपकवारणायाद्यंविशेषणं । तत्रग्रहीतृभेदप्रयुक्तंनानेकप्रकारत्वमितिनातिव्याप्तिः । वक्ष्यमाणोल्लेखप्रभेदसाधारण्यायान्यतमत्वप्रवेशः । तद्विवेचनंतद्व्याख्यानावसरेकरिष्यामः । अन्यतमानेकत्वप्रयुक्तमेकस्योल्लिख्य

मानत्वमित्येतावदुक्तौ ' विद्याविक्रमसौंदर्यतपसांनिधिमागतम् ॥ पश्यंतिविबुधाः शूराःस्त्रियोवृद्धाश्चकौतुकात् ॥' इत्यत्रातिव्याप्तिरतोऽनेकप्रकारत्वमित्युक्तम् । नचो ल्लिख्यमानप्रकारत्वमित्येवास्तु । उक्तोदाहरणेप्रकारस्यकस्याप्यनुल्लेखादेवानतिप्रसं गादितिवाच्यम् । एवमपि ' नृपत्वद्वाजिराजिप्रसरखुरपुटप्रोद्धतैर्धूलिजालैरालोका लोकभूमीधरमतुलनिरालोकभावंप्रयाते ॥ विश्रांतिंकामयंतेरजनिरितिधियाभूतलेस र्वेलोकाःकोकाःक्रंदंतिशोकानलविकलतयाकिंचनंदंत्युलूकाः ॥' इत्यत्रधूलिजालरूप स्यैकवस्तुनोऽनेकैर्लोककोकोलूकैर्ग्रहीतृभिरेकेनैवरजनीत्वेनप्रकारेणोल्लेखनादतिव्या प्तेर्वारणायप्रकारेऽनैकत्वोपादानस्यावश्यकत्वात् । ' सिंजानैर्मंजिरीतिस्तनकलशयु गंचुंबितंचंचरीकैस्तत्रासोल्लासलीलाकिसलयमनसापाणयःकीरदृष्टाः॥ तल्लोपायालपं त्यःपिकनिनदधियाताडिताःकाकलोकैरित्थंचोलेंद्रसिंहत्वदरिमृगदृशांनाप्यरण्यंशर ण्यम् ॥' इत्यनेकगतभ्रांतिपरंपरायामतिप्रसंगवारणार्थमेकस्येत्युक्तमितिसंक्षेपः । य थार्हमिति । स्त्रीभिःकामत्वोल्लेखेतासांरुचिरनुरागःप्रयोजकः । अर्थिभिःकल्पतरु त्वोल्लेखेतेषांलिप्साप्रयोजिकाशत्रुभिर्यमत्वोल्लेखेतेषांभयंप्रयोजकमित्येवंयथायोग्यमि त्यर्थः । उदाहरणांतरमाह यथावेति । श्रीकृष्णस्यमथुराप्रवेशवर्णनं । शौरिःश्रीकृष्णोवृ द्धाभिर्जगत्त्रातेतिदृष्टइत्याद्यन्वयाः । सकौतुकंसोत्कंठमितिदर्शनक्रियाविशेषणंसर्वत्र संबध्यते । श्लोकंव्याचष्टेयइति।तथामहाग्राहग्रहणेनयुवतिसमूहैस्तरुणीसमूहैः । पूर्व मिति । उदाहृतइतिशेषःउल्लेखइत्यनुपज्यते । आरोपरूपकसंकीर्णइतिपाठेआरोपस्व रूपंयद्रूपकंतत्संकीर्णइत्यर्थः । आरोपरूपकेतिपाठस्तुस्पष्टर्थएव ॥ २१ ॥

एकेनबहुधोल्लेखेप्यसौविषयभेदतः ॥ गुरुर्व
चस्यर्जुनोयंकीर्त्तौभीष्मःशरासने ॥ २२ ॥

ग्रहीतृभेदाभावेपिविषयभेदाद्बहुधोल्लेखनादसावुल्लेखः । उदा हरणंश्लेषसंकीर्णं । वचोविषयेमहान्पटुरित्यादिवबृहस्पाति रित्याद्यर्थांतरस्यापिक्रोडीकरणात् । शुद्धोयथा । अकृशंकुच योःकृशंविलग्नेविपुलंचक्षुषिविस्तृतंनितंबे ॥ अधरेऽरुणमा विरस्तुचित्तेकरुणाशालिकपालिभागधेयं ॥

उल्लेखप्रभेदांतरमाह । एकेनेति । व्याचष्टेग्रहीत्रिति । विषयभेदादित्यनंतरमेक स्येतिशेषः । विषयपदमाश्रयसंबंधिनोरुपलक्षणं । अतएवलक्षणेग्रहीतृविषयादीत्या दिपदेनतत्संग्रहःकृतः । तत्रविषयसप्तमीनिर्दिष्टोविषयइत्युच्यते । अधिकरणसप्तमीनि र्दिष्टस्त्वाश्रयःपष्ठ्यादिनिर्दिष्टःसंबंधीतिविवेकः । गुरुरित्यस्यार्थकथनंमहानिति । गु

रुर्महतिवाच्यवदितिविश्वकोशात् । पटुरितितुतत्पर्यवसितार्थकथनंपटुर्दक्षइत्यादीत्यादिनाकीर्तिविषयेऽर्जुनोधवलइतिवत्पार्थइत्यर्थांतरस्यधनुर्विषयेभीष्मोभीषणइतिवद्गांगेयइत्यर्थांतरस्यचसंग्रहः । भीष्मस्तुभीषणेरुद्रेगांगेयेचनिशाचरइतिविश्वः । क्रोडीकरणादेकवृंतगतफलद्वयन्यायेनसंग्रहात् । अकृशमिति । कपालिनोहरस्यभागधेयंभाग्यंतत्त्वेनाध्यवसितंपार्वतीस्वरूपंचित्तआविरस्तुप्रकटीभवत्वितिसंबंधः। किंभूतं । कुचयोः कुचविषये अकृशंस्थूलम् । एवमग्रेपि । विलग्नोमध्यः । विलग्नोमध्यलग्नयोरितिविश्वः । विपुलमायतम् । अधरेअधरोष्ठे । अरुणमारक्तम् । अरुणाधरमितिपाठस्तुप्रक्रमभंगादयुक्तः । चित्तेइतिकरुणाशालीत्यत्रापिमध्यमणिन्यायेनसंबध्यते । एवम् 'तुषारास्तापसव्रातेतामसेषुचतापिनः ॥ दृगंतास्ताडकाशत्रोर्भूयासुर्ममभूतये' इत्यादावधिकरणानेकत्वप्रयुक्तः 'यमःप्रतिमहीभृतांहुतवहोसितत्वीदृतांसतांखलुयुधिष्ठिरोधनपतिर्धनाकांक्षिणां ॥ गृहंशरणमिच्छतांकुलिशकोटिभिन्निर्मितंत्वमेकइहभूतलेबहुविधोविधात्राकृतः ॥' इत्यादौसंबंधिभेदप्रयुक्तश्चोल्लेखोद्रष्टव्यइतिदिक् ॥ २२ ॥ इत्यलंकारचंद्रिकायामुल्लेखप्रकरणम् ॥

स्यात्स्मृतिभ्रांतिसंदेहैस्तदंकालंकृतित्रयं ॥ पं
कजंपश्यतःकांतामुखंमेगाहतेमनः ॥ २३ ॥
अयंप्रमत्तमधुपस्त्वन्मुखंवेत्ति पंकजम् ॥ पंक
जंवासुधांशुर्वेत्यस्माकंतुननिर्णयः ॥ २४ ॥

स्मृतिभ्रान्तिसन्देहैःसादृश्यान्निबद्ध्यमानैःस्मृतिमान्भ्रान्तिमान्ससंदेहइतिस्मृत्यादिपदांकितमलंकारत्रयंभवति । तच्चक्रमेणोदाहृतम् । यथावा ॥ दिव्यानामपिकृतविस्मयांपुरस्तादंभस्तःस्फुरदरविंदचारुहस्तां ॥ उद्वीक्ष्यश्रियमिवकांचिदुत्तरंतीमस्मार्षीज्जलनिधिमंथनस्यशौरिः ॥ पूर्वत्रस्मृतिमदुदाहरणेसदृशस्यैवस्मृतिरत्रसदृशलक्ष्मीस्मृतिपूर्वकन्तत्सम्बंधिनोजलनिधिमंथनस्यापिस्मृतिरितिभेदः। पलाशमुकुलभ्रांत्याशुकतुंडेपतत्यलिः॥ सोपिजंबूफलभ्रांत्यातमलिंधर्तुमिच्छति ॥ अत्रान्योन्यविषयभ्रांतिनिबंधनःपूर्वोदाहरणाद्विशेषः । जीवनग्रहणेनम्राग्गृहीत्वापुनरुन्नताः ॥ किंकनिष्ठाःकिमुज्ये

ष्ठाघटीयंत्रस्यदूर्जनाः ॥ पूर्वोदाहृतसंदेहोऽप्रसिद्धकोटिकोऽयंतुकल्पितकोटिकइतिभेदः ॥ २३ ॥ २४ ॥

अथज्ञानप्राधान्यसाम्यात्स्मृत्यादीनलंकारान्लक्षयति । स्यादिति । स्मृतिभ्रांतिसंदेहैर्व्यवहर्तव्यतयाहेतुभूतैस्तदंकंतेषामंकस्तदंकः तदंकोविद्यतेऽस्मिन्तथाभूतं मत्वर्थीयाच्प्रत्ययात् । अंकश्चिन्हंसंज्ञेतियावत् । तेनतत्संज्ञासंज्ञितमित्यर्थः । अलंकृतित्रयंव्यवहारविषयःस्यादितियोजना । एवंचस्मृतित्वभ्रांतित्वसंदेहत्वानित्रीणिलक्षणानि । तत्रस्मृतित्वंतावत्स्मरामीत्यनुभवसाक्षिकोजातिविशेषः । भ्रांतित्वंविशेष्यावृत्तिप्रकारकज्ञानत्वं । संदेहत्वंतुनिश्चयभिन्नत्वेसतिसंभावनाभिन्नज्ञानत्वंपारिभाषिकं। स्मृतिभ्रांत्यादिवारणायसत्यंतं । उत्प्रेक्षावारणायसंभावनाभिन्नेति । चमत्कारित्वंपुनरखिलालंकारसाधारणंलक्षणत्रयेपिनिवेशनीयं । तेनसघटइतिस्मृताविदंरजतमितिभ्रांतावयंस्थाणुःपुरुषोवेतिसंशयेनातिप्रसंगइतिध्येयम् । गाहतेआकलयतिस्मरतीतियावत्। साहश्यान्निवध्यमानैरितिचमत्कारित्वोपलक्षकम् । नत्वेतस्यापिस्वातंत्र्येणलक्षणेप्रवेशः।साहश्यामूलकानामपिस्मृत्यादीनांचमत्कारित्वेलंकारतायाअनिवार्यत्वाच्चमत्कारितैकजीवातुत्वात्तस्याः । अचमत्कारित्वेतुतेनैववारणमितिव्यर्थंसाहश्यहेतुकत्वविशेषणं । नचैतदेवोपादीयतांनतुचमत्कारित्वविशेषणमितिवाच्यं । उदाहृतेषुसाहश्यमूलकस्मृत्यादिष्वतिप्रसंगवारणार्थंतस्यावश्यकत्वादितिसंक्षेपः ॥ दिव्यानामिति । माघेजलक्रीडावर्णनप्रस्तावेपद्यमिदम् । शौरिःश्रीकृष्णोंभस्तोजलादुत्तरंतींनिर्गच्छंतीश्रियमिवश्रीसदृशींकांचित्पुरस्तादग्रेउद्वीक्ष्यजलनिधिमंथनस्यअस्मार्षीत्स्मृतवान् । अधीगर्थेतिकर्मणिषष्ठी । किंभूताम् । दिविभवादिव्यास्तेषांदेवानामपिसौंदर्यातिशयेनकृताश्चर्यां । तथास्फुरताअरविंदेनकमलेनचारूरमणीयोहस्तोयस्यास्तथाभूतां । तथाचैवंविधनायिकासदृशलक्ष्मीस्मरणात्तत्संबंधिजलनिधिमंथनस्मरणमितिभावः । अत्रश्रियमेवेत्युपमायाःस्मृत्यंगत्वात्तयोरंगांगित्वलक्षणःसंकरः । पलाशेति । वक्रिमलौहित्यरूपसाहश्याद्भ्रांतिः । अलिर्भ्रमरः । सोपिशुकोपि । भ्रांतिनिबंधनइतिभ्रांतिप्रयुक्तइत्यर्थः । जीवनेति । जीवनंजलंप्राणसंयोगश्च । अथवाजीवंतेऽनेनेतिजीवनंधनम् । नम्राअधोमुखाविनीताश्च । उन्नताऊर्ध्वमुखाउद्धताश्च । घटीयंत्रमेकरज्जुसंबद्धघटमालारूपम् । भाषायांराहाटइतिप्रसिद्धम् । कल्पितेति । घटीयंत्रसंबंधिनोर्ज्येष्ठकनिष्ठयोःकोट्योरप्रसिद्धेरितिभावः ॥ २३ ॥ २४ ॥ इत्यलंकारचंद्रिकायांस्मृतिभ्रांतिसंदेहप्रकरणम् ॥

शुद्धापन्हुतिरन्यस्यारोपार्थोधर्मनिन्हवः ॥ नायंसुधांशुःकिंतर्हिव्योमगंगासरोरुहम् ॥ २५ ॥

वर्णनीयेवस्तुनितत्सदृशधर्मारोपफलकस्तदीयधर्मेनिन्हवःक विमतिविकासोत्प्रेक्षितधर्मान्तरस्यापिनिन्हवःशुद्धापन्हुतिः। यथा चंद्रेवियन्नदीपुंडरीकत्वारोपफलकस्तदीयधर्मस्यचंद्रत्व स्यापन्हवः। यथावा ॥ अंकेकेपिशशंकिरेजलनिधेःपंकंपरे मेनिरेसारंगंकतिचिच्चसंजगदिरेभूच्छायमैच्छन्परे। इंदौयद्द लितेंद्रनीलशकलश्यामंदरीदृश्यतेतत्सांद्रंनिशिपीतमंधतम संकुक्षिस्थमाचक्ष्महे ॥ अत्रोत्प्रेक्षिकधर्माणामप्यपन्हवःपर पक्षत्वोपन्यासादर्थसिद्धः ॥ २५ ॥

अथापन्हुतिः। तत्रतावदभेदप्रतिपत्तिनिरूपितांगांगित्वान्यतरवान्निषेधोऽपन्हुतिरि त्यपन्हुतिसामान्यलक्षणं। निषेधश्चनञादिसत्वेवाच्यः। क्वचित्तुतदभावात्कैतवादिप दैःपरमतत्वोपन्यासादिभिश्चव्यंग्यः। तथाक्वचिदभेदप्रतिपत्तिसमानाधिकरणःक्वचि त्तुतद्व्यधिकरणइतिविवेकः। एवमभेदःक्वचिदारोप्यमाणःक्वचित्तुस्वाभाविकः। एवं तत्प्रतिपत्तिरपिक्वचित्व्यंजनयाप्रायशस्तुवाच्यत्वस्येतिबोध्यं। निषेधोऽपन्हुतिरित्ये तावदुक्तौ 'नद्यूतमेतत्कितवक्रीडनंनिशितैःशरैरिति॥' प्रसिद्धनिषेधानुवादरूपेप्रति षेधालंकारेतिव्याप्तिरतोऽभेदप्रतिपत्तिनिरूपितेत्यादिविशेषणमुपात्तं। तत्रहियुद्धमत्त त्वंकितवंप्रतियुद्धेद्यूतत्वाभावोनिर्ज्ञातोपिक्रीयमानोद्यूतएवतवप्रागल्भ्यंनतुयुद्धेइत्युपहा सार्थोनतुयुद्धाभेदप्रतिपत्त्यंगं। तस्यास्तदुपन्यासंविनापिसिद्धत्वात्। नाप्यंगिभूतः। निर्ज्ञातत्वेनतदुपायानपेक्षणादितितद्वारणम्। अभेदप्रतिपत्तिनिरूपितांगित्वमात्रोक्तौ शुद्धापन्हुतिहेत्वपन्हुतिपर्यस्तापन्हुतिकैतवापन्हुतिष्वव्याप्तिःतत्रसर्वत्रनायंसुधांशुरि त्यादेर्निषेधस्यव्योमगंगासरोरुहाद्यभेदप्रतिपत्त्यर्थत्वेनतदंगतयांगित्वाभावात्। अभेदप्र तिपत्तिनिरूपितांगत्वमात्रोक्तौचभ्रांतापन्हुतिच्छेकापन्हुत्योरव्याप्तिःतयोर्भ्रांतिशंका निवारणरूपनिषेधस्यप्राधान्येनाभेदप्रतिपत्त्यंगत्वाभावादतस्तदन्यतरवत्त्वनिवेशःतदा हुः'साम्यायापन्हवोयत्रसाविज्ञेयात्वपन्हुतिः॥अपन्हवायसादृश्यंयस्मिन्नेपाप्यपन्हुति रिति॥' सर्वंचैतत्तत्तदुदाहरणव्याख्यानावसरेव्यक्तीभविष्यतीतिनप्रपंचितम्। एवंसामान्यलक्षणंमनसिनिधायशुद्धापन्हुत्यादीस्तद्भेदान्वक्तुमुपक्रमते। शुद्धापन्हुति रिति। लक्षणंव्याचष्टे वर्णनीयइति। कविमतेर्विकासःस्फूर्तिशालिता। तथाचोपमे येऽपमानारोपफलकउपमेयधर्मत्वाभिमतनिषेधःशुद्धापन्हुतिरितिलक्षणमितिभावः। अत्रचानुक्तनिमित्तत्वंकैतवादिपदाव्यंग्यत्वंचनिषेधविशेषणंबोध्यं। तेनहेत्वपन्हुतौकैत वापन्हुतौचनातिप्रसंगः। कांतःकिंनहिनूपुरइतिछेकापन्हुतावुपमेयधर्मस्यकांतत्वस्यनिषे

धसत्त्वादतिप्रसंगवारणायाद्यंविशेषणं । तत्रहिनकांतत्वनिषेधोनूपुरारोपार्थोपितुनूपुरारोपएवशंकितकांतत्वनिषेधार्थइतितद्व्यावृत्तिः ।पर्यस्तापन्हुतिवारणायोपमेयधर्मेत्युक्तं। तत्रोपमानधर्मस्यैवसुधांशुत्वादेर्निषेधइतिनातिव्याप्तिरितिसर्वंसुस्थम् । पुंडरीकेति । पुंडरीकंसिताम्भोजमित्यमरः । एवंचसरोरुहपदंविशेषपरमितिभावः । अंकमिति । इंदौदलितस्यस्फुटितस्येंद्रनीलमणेःशकलवच्छयामंयद्दरीदृश्यतेतत्केपिकवयोऽकम्कलंकंशशंकिरेशंकितवन्तः । परेऽन्येजलनिधेःपंकंमेनिरे कतिचित्पुनःसारंगंसंजगदिरे अब्रुवन् । परेइतरे भुवोभूमेश्छायाभूच्छायंऐच्छन् । विभाषासेनासुराच्छायेत्यादिनाक्लीबत्वं । वयंतुसांद्रंघनंनिशिरात्रौपीतमतएवकुक्षिस्थमंधतमसंगाढध्वान्तमाचक्ष्महेब्रूमहइत्यन्वयः । औत्प्रेक्षिकाउत्प्रेक्षामात्रविषयाःकलंकादयः । अपिनास्वाभाविकस्यभूच्छायत्वस्यसमुच्चयोऽर्थसिद्धइति। नायंसुधांशुरित्यत्रनेतिशब्दोपात्तत्वाच्छाब्दः । इहतुपरमतत्वोत्कीर्तनेनस्वानभिमतत्वसूचनादर्थगम्यइत्यर्थः । एकत्रानेकापन्हवरूपतयाप्यत्रवैचित्र्यंबोध्यम् ॥ २५ ॥

सएवयुक्तिपूर्वश्चेदुच्यतेहेत्वपन्हुतिः ॥ नेंदुस्तीव्रोनानिश्यर्कःसिंधोरौर्वोयमुत्थितः॥२६॥

अत्रचंद्रएवतीव्रत्वनैशत्वयुक्तिभ्यांचंद्रत्वसूर्यत्वापन्हवोवडवानलत्वारोपार्थः। यथावा ॥ मंथानभूमिधरमूलशिलासहस्रसंघट्टनव्रणकिणःस्फुरतींदुमध्ये ॥ छायामृगःशशकइत्यतिपामरोक्तिस्तेषांकथंचिदपितत्राहिनप्रसक्तिः॥ अत्रचंद्रमध्येमंथनकालिकमंदराशिलासंघट्टनव्रणकिणस्यैवछायादीनां संभवोनास्तीतिछायात्वाद्यपन्हवःपामरवचनत्वोपन्यासेनाविष्कृतः ॥ २६ ॥

हेत्वपन्हुतिमाह ॥ सएवेति । शुद्धापन्हवएवेत्यर्थः । युक्तिपूर्वइति । योज्यतेसाध्यमनेनेतियुक्तिर्हेतुस्तत्पूर्वस्तत्सहितइत्यर्थः । तथाचशुद्धापन्हवलक्षणएवानुक्तनिमित्तइत्यस्यस्थानेउक्तनिमित्तइत्युक्तौहेत्वपन्हुतिलक्षणंसंपद्यतइतिभावः । नेंदुरित्यादिर्विरहाकुलोक्तिः । तीव्रोदारुणोयतोऽतोनेंदुः । निशिरात्रौसत्वान्नार्कः । और्वस्तुवडवानलइत्यमरः । नैशत्वेति । निशिभवोनैशस्तत्त्वमित्यर्थः । अत्रापिचंद्रत्वंस्वाभाविकोधर्मः सूर्यत्वंत्वौत्प्रेक्षिकमितिध्येयम् । मंथानेति । मंथानोमंथनदंडःसचासौभूमिधरःपर्वतोमंदरस्तस्यमूलभारोयच्छिलासहस्रंतेनसंघट्टनाद्योव्रणस्तस्यकिणश्चिन्हमिन्दुमध्येस्फुरतिप्रकाशते । छायाभूमेः । मृगोहरिणः । शशकःशशःइत्येषामतिपामराणांमूर्खतमाना

मुक्तिः । हियस्मात्तेषांछायादीनांतत्रैद्रुमध्यभागेकथंचिदपिकेनापिप्रकारेणप्रसक्तिर्नास्तीत्यन्वयः । वैशाखमंथमंथानमंथानोमंथदंडकेइत्यमरः । नास्तीतीति । इति हेतोरित्यर्थः ॥ २६ ॥

अन्यत्रतस्यारोपार्थःपर्यस्तापन्हुतिस्तुसः ॥ नायंसुधांशुःकिंतर्हिसुधांशुःप्रेयसीमुखम् ॥ २७ ॥

यत्रक्वचिद्वस्तुनितदीयधर्मनिन्हवः अन्यत्रवर्णनीयेवस्तुनितस्यधर्मस्यारोपार्थःपर्यस्तापन्हुतिः । यथाचंद्रेचंद्रत्वनिन्हवो वर्णनीयेमुखेतदारोपार्थः । यथावा ॥ हालाहलोनैवविषंविषंरमाजनाःपरंव्यत्ययमत्रमन्वते ॥ निपीयजागर्तिसुखेनतं शिवःस्पृशन्निमांमुह्यतिनिद्रयाहरिः ॥ पूर्वोदाहरणेहेतूक्तिर्नास्त्यत्रतुसाऽस्तीतिविशेषः । ततश्चपूर्वापन्हुतिवदत्रापिद्वैविध्यमपिद्रष्टव्यम् ॥ २७ ॥

पर्यस्तापन्हुतिमाह ॥ अन्यत्रेति । सःअपन्हवः । तथाचतदारोपार्थस्तस्यापन्हवइतिलक्षणम् । निषेधस्यचनस्वाधिकरणेप्रतियोग्यारोपार्थत्वसंभवोनवास्वाधिकरणेस्वारोपइत्यर्थसिद्धमेवारोपस्यान्याधिकरणत्वमन्यत्रेत्यनेनोक्तं । अतएवपर्यस्तापन्हुतिरित्युच्यते । पर्यस्ताआरोपविपरीताआरोपन्यधिकरणेतितदर्थात् । नचचंद्रेचंद्रत्वनिषेधस्यकथंमुखेतदारोपार्थत्वमितिवाच्यं । आरोपदार्ढ्यसंपादकत्वेननिषेधस्यतदर्थतायाअनुभवसिद्धत्वात् । अतएवदृढारोपरूपकमेवेदंनापन्हुतिरितिप्राचांसिद्धांतस्तदनुसारेणैवचचित्रमीमांसायांप्रकृतस्यनिषेधेनयदन्यत्वप्रकल्पनमित्यपन्हुतिलक्षणमुक्तं । इहत्वलंकाररत्नाकराद्यनुसारेणायम्प्रभेदउपदर्शितसामान्यलक्षणाभिप्रायेणापन्हुतित्वेनोक्तइति निरवद्यं । हालाहलइति । हालाहलोविषंनैवभवतिकिंतुरमालक्ष्मीर्विषं । जनाःपरंकेवलमत्रास्मिन्विषयेव्यत्ययंवैपरीत्यंमन्वतेअभ्युपगच्छंति । कुतस्तत्राह । यस्माच्छिवस्तंहालाहलंनिपीयसुखेनजागर्ति । हरिस्तुइमांरमांस्पृशन्त्सन्निद्रयामुह्यति । स्मरन्नितिपाठेस्मरन्नपिमुह्यति । किमुस्पृशन्नित्यर्थः । तथाचरमायाविषरूपत्वेमोहजनकत्वंहेतुः । हालाहलस्यतत्वापन्हवेचजागरसुखप्रयोजकत्वमितिबोध्यं । हालाहलोविषेइतिविश्वः । अत्रस्पृशन्मुह्यतीतिकार्यकारणयोःपौर्वापर्यविपर्ययरूपातिशयोक्तिरलंकारःसाहेतूक्तिः । ततश्चेति । हेतूक्तितदनुक्तिरूपभेदादित्यर्थः । पूर्वापन्हुतिवच्छुद्धापन्हुतिवत् । द्वैविध्यंशुद्धपर्यस्तापन्हुतिर्हेतुपर्यस्तापन्हुतिरित्येवंद्विप्रकारत्वम् ॥ २७ ॥

भ्रांतापन्हुतिरन्यस्यशंकायांभ्रांतिवारणे ॥ ता

पंकरोतिसोत्कंपंज्वरःकिंनसखिस्मरः ॥ २८ ॥

अत्रतापंकरोतीतिस्मरवृत्तांतेकथितेतस्यज्वरसाधारण्यादृजुबुद्ध्यासख्याज्वरःकिमितिपृष्टे नसखिस्मरइतितत्त्वोक्त्याभ्रांतिवारणंकृतं । यथावा ॥ नागरिकसमधिकोन्नतिरिहमहिषःकोयमुभयतःपुच्छः ॥ नहिनहिकरिकलभोयंशुंडादंडोयमस्यनतुपुच्छम् ॥ इदंसंभवद्भ्रांतिपूर्विकायांभ्रांतापन्हुतावुदाहरणं । कल्पितभ्रांतिपूर्वायथा ॥ जटानेयंवेणीकृतकचकलापोनगरलंगलेकस्तूरीयंशिरसिशशिलेखानकुसुमम् ॥ इयंभूतिर्नांगेप्रियविरहजन्माधवलिमापुराराातिभ्रांत्याकुसुमशरकिंमांप्रहरसि ॥ अत्रकल्पितभ्रांतिर्जटानेयमित्यादिनिषेधमात्रोन्नेया पूर्वप्रश्नाभावात् । दंडीत्वत्रतत्त्वाख्यानोपमेत्युपमाभेदंमेने । यदाह ॥ नपद्मंमुखमेवेदंनभृंगौचक्षुषीइमे ॥ इतिविस्पष्टसादृश्यात्तत्त्वाख्यानोपमामतेति ॥ २८ ॥

भ्रांतापन्हुतिरिति ।·अन्यस्यप्रकृतस्य भ्रांतिवारणेवार्यतेऽनेनेतिवारणं । तथाचभ्रांतिवारकेतत्त्वाख्यानेसतीत्यर्थः । भ्रांतंभ्रमः । भावेक्तः । भ्रांत्यपन्हुतिरित्यर्थः । एवंचतत्वकथनहेतुकभ्रांतिविषयनिषेधोभ्रांतापन्हुतिरितिलक्षणंबोध्यं । तस्यतापकारित्वरूपस्मरवृत्तांतस्य । नागरिकेति । नगरेभवोनागरिकस्तंप्रतिग्रामीणस्यप्रश्नः । समधिकापरस्वंतरेभ्यउन्नतिरुच्चतायस्यैवंभूतउभयतोमुखपृष्ठभागयोः पुच्छंयस्यैवंभूतश्चकोयंमहिषइति नहिनहीत्युत्तरं । महिषइत्यनुषज्यते । अयंकरिकलभःकरिशावकः । कलभःकरिशावकइतिकोशात्कलभइत्येतावतैवसिद्धेकरिपदमुत्कृष्टकरिबोधार्थं । अयमस्यशुंडादंडोनतुपुच्छमिति । पुच्छइतिपाठोप्यर्द्धर्चादित्वात्साधुरेव । अप्रयुक्तत्वंतुतत्रपरंविचार्यमितिपूर्वोदाहरणेसंदेहरूपभ्रांतिविषयज्वरत्वापन्हवः । ज्वरःकिमितिप्रश्नेनतद्विषयसंदेहावगमात् । इहतुमहिषत्वनिश्चयरूपभ्रांतिविषयस्यमहिषत्वस्येतिततोभेदः । जटेति विरहिण्याइयमुक्तिः । हेकुसुमशरपुरारातेर्हरस्यभ्रांत्यामांकिंकुतःप्रहरसिपीडयसि । यतोनेयंजटाकिंतुवेणीकृतोऽवेणिर्वेणीसंपद्यतेतथाकृतःकचानांकालपः । तथागलेगरलंनैतदपित्वियंकस्तूरी । एवंशिरसिनैषाशशिलेखाकिंतुकुसुमं । तथाइयमंगेभूतिर्भस्मनभवतिपरंतुप्रियविरहाज्जन्मयस्यैवंभूतोधवलिमापांडिमेति । अवर्ज्योवहुव्रीहिर्व्यधिकरणोजन्माद्युत्तरपदइतिवामनसूत्राद्व्यधिकरणोपिवहुव्रीहिर्नदुष्टः । कल्पितेतिकुसुमप्रयरे

उत्प्रेक्षितेत्यर्थः। निषेधमात्रेणेन्येति। निषेधस्यप्रसक्तिपूर्वकत्वादितिभावः। मेनेइत्यस्व रसोद्भावनं। तद्बीजंतूपमाबोधकस्यैवादेरसत्त्वेपितदुपगमेरूपकस्याप्युपमात्वंस्यादिति स्पष्टमेव ॥ २८ ॥

छेकापन्हुतिरन्यस्यशंकातस्तथ्यनिन्हवे ॥ प्र
जल्पन्मत्पदेलग्नःकांतःकिंनहिनूपुरः ॥ २९ ॥

कस्यचित्कंचित्प्रतिरहस्योक्तावन्येनश्रुतायामुक्तेस्तात्पर्यांतरवर्णनेनतथ्यनिन्हवेछेकापन्हुतिः। यथा नायिकयानर्मसखीं प्रतिप्रजल्पन्मत्पदेलग्नइतिस्वनायकवृत्तांतेनिगद्यमानेतदाकर्ण्यकांतःकिमितिशंकितवतीमन्याम्प्रतिनूपुरइतिनिन्हवः। सीत्कारंशिक्षयतिव्रणयत्यधरंतनोतिरोमांचम् ॥ नागरिकः किंमिलितोनहिनाहिसखिहैमनःपवनः ॥ इदमर्थयोजनया तथ्यनिन्हवेउदाहरणं। शब्दयोजनयायथा ॥ पद्मेत्वन्नयने स्मरामिसततंभावोभवत्कुंतलेनीलेमुह्यतिकिंकरोमिमहितैः क्रीतोऽस्मितेविभ्रमैः ॥ इत्युत्स्वप्नवचोनिशम्यसरुषानिर्भत्सितोराधयाकृष्णस्तत्परमेवतद्व्यपदिशन्क्रीडाविटःपातुवः॥ सर्वमिदंविषयांतरयोजनेउदाहरणे। विषयैक्येप्यवस्थाभेदेनयोजनेयथा ॥ वदंतीजारवृत्तांतंपत्यौधूर्तासखीधिया ॥ पतिंबुद्ध्वासखिततःप्रबुद्धास्मीत्यपूरयत् ॥ २९ ॥

छेकापन्हुतिरिति। छेकोविदग्धस्तत्कृताऽपन्हुतिश्छेकापन्हुतिरितिलक्ष्यनिर्देशः वाक्यान्यथायोजनहेतुकःशंकिततात्त्विकवस्तुनिषेधइतिलक्षणम्। अन्यस्यशंकातइत्यन्यशंकायानिवर्त्तनीयत्वेनहेतुतयाव्यपदेशः। संतापात्स्नातीतिवत्। अत्रचशुद्धापन्हुतिवारणायाद्यंविशेषणं। ममकिलश्रुतिमाहतदर्थिकामित्यधिकताद्रूप्यरूपकवारणायशंकितेति। नचानेनैवशुद्धापन्हुतिवारणाद्वाक्येत्यादिव्यर्थमितिवाच्यम्॥ 'कस्यवानभवेद्रोषःप्रियायाःसव्रणेधरे॥सभृंगंपद्ममाघ्रासीर्वारितापिमयाधुना॥' इतिव्याजोक्तावतिप्रसंगवारकत्वेनतत्सार्थक्यात्। यद्वक्ष्यति। छेकापन्हुतेरस्याश्चायंविशेषोयत्तस्यांवचनस्यान्यथानयनेनापन्हवः। अस्यामाकारस्यहेत्वंतरवर्णनेनगोपनमिति। तथ्यनिन्हवेइति। तात्त्विकनिषेधेइत्यर्थः। नूपुरोमंजीरः। मंजीरोनूपुरोऽस्त्रियामित्यमरः। नर्मसखीक्रीडासखी। अत्रकान्तपरायाःप्रजल्पन्मत्पदेलग्नइत्युक्तेर्नूपुरस्तात्पर्यकत्ववर्णने

नकांतत्वापन्हवोमुख्योनूपुराभेदप्रतिपत्तिस्तुतदंगमितिबोध्यम् । सीत्कारमिति । सीत्कारंतदनुकारिमुखध्वनिंशिक्षयति। अधरंअधरोष्ठम्। व्रणयतिव्रणोस्यातीतिव्रणी व्रणिनंकरोतीत्यर्थेतत्करोतीतिणिच् । तथारोमांचंतनोतिविस्तारयतीतिवाक्यत्रयंना गरिकाभिप्रायेणप्रियसखींप्रतिकयाप्युक्तं तदाकर्ण्यनागरिकःकिंमिलितइतिशंकितव तीमन्यांप्रतितच्छंकानिवृत्तयेनह्रीत्यादिनाहैमन्तिकपवनपरत्ववर्णनेनतात्त्विकस्यनागरिकस्यापन्हवः। सीत्कारशिक्षादिकर्तृत्वस्यनागरिकइवपवनेपिसत्त्वात्। तदाह। अर्थयोजनयेति । विवक्षिताविवक्षितसाधारणस्यार्थस्याविवक्षितार्थसंबंधित्ववर्णनयेत्यर्थः। इदमित्युदाहरणमितिचजात्यभिप्रायेणैकवचनम्। हेमंतशब्दात्तत्रभवइत्यर्थेसर्वत्राण्चतलोपश्चेत्यणितलोपेचहैमनइतिरूपसिद्धिः । प्रजल्पन्नित्युदाहरणेएकस्यवाक्यस्यान्यथायोजनमिहत्वनेकेषामितिभेदः। शब्दयोजनयेति । अर्थभेदेपिशब्दश्लेषमात्रेणेत्यर्थः । पद्मेइति । क्रीडायाविटोभोक्ताकृष्णोवोयुष्मान्पातुरक्षत्वितिसंबंधः । कीदृशः । इत्युत्स्वप्नवचःस्वप्नेउद्गतमुत्स्वप्नंवचनमर्थात्कृष्णस्यानुभाष्यानूधराधयानिर्भर्त्सितःसन्तद्वचनंतत्परमेवराधापरमेवव्यपदिशन्कथयन्। इतिकिं। हेपद्मेरमेत्वन्नयनेसततंस्मरामि । नीलेभवत्याःकुंतलेकेशपाशेममभावोंतःकरणवृत्तिरूपः। मुह्यतिमोहंप्राप्नोति।ननुचित्तासंगोनिवर्त्यतांतत्राह । किंकरोमिअकिंचित्करोस्मियतस्तेतवमहितैःपूज्यैर्विभ्रमैर्विलासैःक्रीतोस्मिमूल्येनगृहीतोस्मीति। किंकरोस्मीतिक्वचित्पाठोयुक्ततरः। तत्र चास्मीत्यहमर्थकमव्ययं। अहंकिंकरोदासःक्रीतोस्मीत्यर्थः। राधापरत्वेतुहेराधेइत्यर्थात्संबोधनं। पद्मरूपेत्वन्नयनेस्मरामीतिविशेषः। शेषंपूर्ववत्। अत्ररमासंबोध्यकस्तन्नयनस्मरणरूपोनवाक्यार्थोऽपित्वसंबोध्यकः । पद्मरूपत्वन्नयनस्मरणरूपइत्यपन्हवस्तत्परमेवतद्व्यपदिशन्नित्यनेनप्रकाश्यते। नचात्रार्थस्यरमाराधासाधारणत्वमपितुपद्मेइतिलिंगवचनश्लिष्टशब्दयोजनैवेति । विषयांतरेति। विवक्षितविषयभिन्नेत्यर्थः । अवस्था जाग्रत्स्वप्नादिरूपा । वदंतीति। पत्यौभर्त्तरिसखीधियासखिभ्रमेणजारवृत्तांतंस्वकामुकवार्त्तांवदंतीधूर्ताकाचित्पतिंबुध्वासखीत्यादिवाक्यशेषमपूरयत्पूरितवती । सखीतिपुनःसंबोधनमप्रतार्यतासूचनाय । ततउक्तवृत्तांतानंतरंप्रबुद्धाजागरणवती । अत्र नासौजाग्रदवस्थावृत्तांतःकिंतुस्वाप्नकइत्यवस्थाभेदयोजनयापन्हवःसखीत्यादिवाक्यशेषेणप्रकाश्यते ॥ २९ ॥

कैतवापन्हुतिर्व्यक्तौव्याजाद्यैर्निन्हुतेःपदैः ॥ निर्यां
तिस्मरनाराचाः कांतादृक्पातकैतवात् ॥ ३० ॥

अत्रासत्यत्वाभिधायिनाकैतवपदेननेमेकांताकटाक्षाः किंतु

रमरनाराचाइत्यपन्हवःप्रतीयते ॥ रिक्तेषुवारिकथयाविपि नोदरेषुमध्यान्हजृंभितमहातपतापतप्ताः । स्कंधांतरोत्थित दवाग्निशिखाच्छलेनजिव्हांप्रसार्यतरवोजलमर्थयंते ॥ ३० ॥

कैतवापन्हुतिरितिलक्ष्यनिर्देशः । व्याजाद्यैःपदैर्निन्हुतेर्व्यक्तौअभिव्यक्तौसत्यां कैतवापन्हुतिरितिव्यवहर्तव्यमित्यर्थः । कैतवेनापन्हुतिरितिव्युत्पत्तेः । व्याजाद्यैरि त्यनेनमिषकपटछलछद्मकैतवादयोगृह्यंते । एवंचकैतवादिपदव्यंग्यापन्हुतिलक्षणं बोध्यम् । नाराचावाणाःदृक्पाताःकटाक्षाःअपन्हवोनिषेधः । प्रतीयतइति । असत्यत्व स्वविषयबाधाधीनत्वादितिभावः । रिक्तेष्वितिग्रीष्मवर्णनम् । तरवोवृक्षावारिणोजल स्यकथयावार्तयापिरिक्तेषुशून्येषुविपिनस्यारण्यस्योदरेषुमध्यप्रदेशेषुजलमर्थयंतेप्रार्थयं ते । कीदृशाः मध्यान्हेजृंभितःप्रवृद्धोयोमहानातपउष्णंतस्यतापस्तपनंतेनतप्ताःसंत प्ताः । किंकृत्वा स्कंधांतरात्प्रकांडाभ्यंतरादुत्थितोयोदवाग्निर्दावानलस्तस्ययाशिखा ज्वालातस्याःश्छलेनजिव्हांप्रसार्येति । अस्त्रीप्रकांडःस्कंधःस्यान्मूलाच्छाखावधिस्तरो रित्यमरः । अत्रनेयंदवाग्निशिखा अपितुजेव्हितिछलपदात्प्रतीयते । अत्रचानभिहित वाच्यतादोषनिरासायकथयापिवनोदरेष्वितिपठनीयं ॥ ३० ॥ इत्यपन्हुतिप्रकारणं ॥

संभावनास्यादुत्प्रेक्षावस्तुहेतुफलात्मना ॥ उक्तानु क्तास्पदाद्यात्रसिद्धासिद्धास्पदेपरे ॥ ३१ ॥ धूमस्तो मंतमःशंकेकोकीविरहशुष्मणां ॥ लिंपतीवतमोंगा निवर्षतीवांजनंनभः ॥ ३२ ॥ रक्तौतवांघ्रीमृदुलौभु विविक्षेपणाद्ध्रुवम् ॥ त्वन्मुखाभेच्छयानूनंपद्मैर्वैराय तेशशी ॥ ३३ ॥ मध्यःकिंकुचयोर्धृत्यैवद्धःकनकदा मभिः ॥ प्रायोब्जंत्वत्पदेनैक्यंप्राप्तुंतोयेतपस्यति ॥ ३४ ॥

अन्यधर्मसंबन्धनिमित्तेनान्यस्यान्यतादात्म्यसंभावनमुत्प्रे क्षा । सावस्तुहेतुफलात्मतागोचरत्वेनत्रिविधा । अत्रवस्तुनः क स्यचिद्वस्त्वंतरतादात्म्यसंभावनाप्रथमास्वरूपोत्प्रेक्षेत्युच्यते । अहेतोर्हेतुभावेनाफलस्यफलत्वेनोत्प्रेक्षाहेतूत्प्रेक्षाफलोत्प्रेक्षे त्युच्यते । अत्रआद्यास्वरूपोत्प्रेक्षाउक्तविषयानुक्तविषयाचेति द्विविधा । परेहेतुफलोत्प्रेक्षेसिद्धविषयाऽसिद्धविषयाचेतिप्रत्ये

कंद्विविधे।एवंषण्णामुत्प्रेक्षाणांधूमस्तोमेत्यादीनिक्रमेणोदाहरणानि ।

उत्प्रेक्षांलक्षयति॥ संभावनेति। अत्रोत्प्रेक्षेत्यनंतरंसाचत्रिधेत्यध्याहार्यं। तथाचसंभावनाउत्प्रेक्षापदवाच्यास्यात्साचवस्तुहेतुफलरूपेणत्रिधेत्यर्थः । वस्तुहेतुफलानांचसंभावनाधर्मत्वंस्वविधेयकत्वसंबंधेन । तेनवस्तुहेतुफलविधेयकत्वेनेतिपर्यवसितार्थः । वस्तुत्वंचहेतुत्वेनफलत्वेनवाविवक्षितंयत्तद्भिन्नत्वं । नातोवस्तुत्वस्यकेवलान्वयितयाविभागसंगतिः । उक्तेत्यादि । अत्रआसामुत्प्रेक्षाणांमध्येआद्यावस्तूत्प्रेक्षा । उक्तंचानुक्तंचोक्तानुक्तेआस्पदेयस्याइतिविग्रहः । आस्पदंचोत्प्रेक्षायाधर्मिरूपोविषयः । सिद्धासिद्धेत्यत्रविग्रहःपूर्ववत् । धूमेति। तमःकोकीविरहशुष्मणांधूमस्तोमंशंकेइत्यन्वयः। कोकस्यचक्रवाकस्यस्त्रीकोकीतस्याविरहरूपाणांशुष्मणामग्नीनांसंबंधिनंधूमसमूहमित्यर्थः । लिंपतीवेति। अत्रतमइतिनभइतिचकर्तृपदं। रक्ताविस्यादिदयितांप्रतिनायकस्योक्तिः। तवमृदुलौसुकुमारावंघ्रीचरणौध्रुवंभुविविक्षेपणाद्धेतोरक्तवर्णाविति । त्वन्मुखेति । पद्मंगतायास्त्वन्मुखकांतेरिच्छयाहेतुनेत्यर्थः । वैरायतइतिवैरंकरोतीत्यर्थेशब्दवैरकलहाभ्रकण्वमेघेभ्यःकरणइतिक्यङ् । मध्यइति । मध्यभागःकुचयोर्धृत्यैधारणार्थंकनकस्यदामभीरज्जुभिरितिनिगीर्याध्यवसानरूपातिशयोक्त्यावलीभिर्वद्धःकिमित्यर्थः। प्रायइति। अब्जंकर्तृप्रायोवहुधात्वच्चरणेनसहैक्यंप्राप्तुंतोयेजलेतपस्यातितपश्चरतीत्यर्थः। कर्मणोरोमंथतपोभ्यांवर्तिचरोरितिक्यङ् । तपसःपरस्मैपदंचेतिपरस्मैपदम् । लक्षणंपरिष्कुरुते अन्यधर्मेति । अन्यस्यविषयिणोयोधर्मस्तत्संबंधरूपेणनिमित्तेनान्यस्यान्यविषयकमन्यस्यविषयिणस्तादात्म्येनसंभावनमित्यर्थः । अन्यस्येतिषष्ठ्यर्थोविषयताधर्मितारूपा । विषयिणइतिषष्ठ्यर्थस्तुविशेषणतारूपाविषयता । अन्यत्वेनोत्कीर्तनंचसंभावनायाआहार्यतासूचनाय । तथाचविषयिनिष्ठधर्मसंबंधप्रयुक्तंविषयधर्मिकंतादात्म्यसंसर्गेणविषयिविधेयकमाहार्यसंभावनमुत्प्रेक्षेतिपर्यवसितम् । तन्निष्ठधर्मसंबंधप्रयुक्तमाहार्यतत्संभावनमितितुनिष्कर्षः । इतरांशस्यव्यावर्तकतयास्वरूपकथनमात्रपरत्वात् । मुखंचंद्रंमन्यइत्युत्प्रेक्षायांचंद्रनिष्ठाल्हादकत्वादिधर्मसंबंधप्रयुक्तंमुखेचंद्रसंभावनमाहार्यमस्तीतिलक्षणसमन्वयः । वाधाद्यभावदशायांतुजायमानामुखादौचंद्रादिसंभावनोत्प्रेक्षेतितद्वारणायाहार्येति। एतेन 'विरक्तसंध्यापरुषंपुरस्ताद्यथारजःपार्थिवमुज्जिहीते । शंकेहनूमत्कथितप्रवृत्तिःप्रत्युद्गतोमांभरतःससैन्यः' ॥ इत्यत्ररजोभरोद्गमनरूपससैन्यप्रत्युद्गंतृधर्मसम्बन्धप्रयुक्तायांभरतेतत्संभावनायामपिनातिव्याप्तिः। तस्याअनाहार्यत्वात् । 'संभावनंयदीत्थंस्यादित्यूहोन्यस्यसिद्धय' इतिवक्ष्यमाणसंभावनालंकारविषये । 'यदिशेषोभवेद्वक्ताकथिताःस्युर्गुणास्तवे ॥' इत्यादाव

तिव्याप्तिवारणायप्रयुक्तांतं । 'सर्वातिशायिसौंदर्यंशंकेसत्यवतोमुखं ॥ येनसामृगशावाक्षीसावित्रीतरलीकृता ॥' इत्यादावतिप्रसंगवारणायतन्निष्ठेतिसंभाव्यमानवृत्तित्वंधर्मविशेषणं। तत्रसावित्रीतरलीकारकत्वरूपोधर्मोमुखवृत्तिर्नतुसंभाव्यमानवृत्तिरितिनातिप्रसंगइतिदिक् । वस्तुहेतुफलात्मतावस्तुहेतुफलतादात्म्यम् । ननुसंबंधांतरेणोत्प्रेक्षायाअसंग्रहइतिचेन्न । सर्वत्राभेदेनैवोत्प्रेक्षणमितिप्राचीनमतानुसारेणेत्थमभिधानादेतत्सूचनायैवलक्षणेऽत्रचतादात्म्योपादानमिति। नन्वलंकारसर्वस्वकारादिभिःस्वरूपोत्प्रेक्षेतिव्यवहृतायास्तुरीयायाअपिसत्त्वात्त्रिविधत्वमयुक्तमित्याशंक्याहअत्रेति । आसांमध्येयाप्रथमावस्तूत्प्रेक्षासैवस्वरूपोत्प्रेक्षेत्युच्यतइत्यर्थः ।

रजनीमुखेसर्वत्रविसृत्वरस्यतमसोनैल्यदृष्टिप्रतिरोधकत्वादिधर्मसम्बन्धेनगम्यमानेननिमित्तेनसद्यःप्रियविघटितसर्वदेशस्थितकोकांगनाहृदुपगतप्रज्वालिष्यद्विरहाऽनलधूमस्तोमतादात्म्यसम्भावनास्वरूपोत्प्रेक्षातमसोविषयस्योपादानादुक्तविषया । तमोव्यापनस्यनभःप्रभृतिभूपर्यंतसकलवस्तुसान्द्रमलिनीकरणेननिमित्तेनतमःकर्तृकलेपनतादात्म्योत्प्रेक्षा।नभःकर्तृकांजनवर्पणतादात्म्योत्प्रेक्षाचानुक्तविपयास्वरूपोत्प्रेक्षा। उभयत्रापिविपयभूततमोव्यापनस्यानुपादानात्। नन्वत्रतमसोव्यापनेननिमित्तेनलेपनकर्तृतादात्म्योत्प्रेक्षानभसोभूपर्यंतंगाढनीलिमव्याप्तत्वेननिमित्तेनांजनवर्पणकर्तृतादात्म्योत्प्रेक्षाचेत्युत्प्रेक्षाद्वयमुक्तविपयमेवास्तु । मैवम् । लिम्पतिवर्षतीत्याख्यातयोःकर्तृवाचकत्वेपिभावप्रधानमाख्यातमितिस्मृतेर्धात्वर्थेक्रियायाएवप्राधान्येनतदुपसर्जनत्वेनान्वितस्यकर्तुरुत्प्रेक्षणीयतयाअन्यत्रान्वयासंभवात् । अतएवआख्यातार्थस्यकर्तुःक्रियोपसर्जनत्वेनान्यत्रान्वयासंभवादेवअस्योपमायामुपमानतयान्वयोपिदंडिनानिराकृतः । 'कर्तायद्युपमानंस्यान्न्यग्भूतोसौक्रियापदे॥ स्वक्रियासाधनव्यग्रोनालमन्यद्व्यपेक्षितुमिति ॥'

विसृत्वरस्येति। प्रसरणशीलस्येत्यर्थः । तमसइतिसंभावनेत्यनेनान्वेति । षष्ठ्यर्थां

विषयतातमो विषयेत्यर्थः । प्रतिरोधकत्वादीत्यादिपदात्प्रसरणशीलत्वस्य संग्रहः । प्रियं प
तिभिर्विघटिता वियुक्ताः । व्यापनस्योत्प्रेक्षणं तस्य पूर्ववदुत्प्रेक्षापदे नान्वयः । एवमग्रेत
नस्य तमसइत्यस्यापि । अनुपादानादिर्नोविषयायतावच्छेदकाभ्यां लेपनवर्षणाभ्यामन्ये
नानुपादानादित्यर्थः । यथाश्रुतेनाध्यापेवगाध्यवसानलक्षणयोपादानादसंगतेः ।
उक्तविषयभेदेति । सकृदुच्चारिताभ्यां लेपनवर्षणाभ्यां शक्त्या लेपनवर्षणयोःसाध्य
वसानलक्षणया साधारणधर्मपुरस्कारेण व्यापनस्य चोपस्थापनस्य युगपद्वृत्तिद्वयविरो
धेनासंभवादित्याशयः । स्मृतेनिरुक्तस्मृतेः । उत्प्रेक्षणीयतया उत्प्रेक्षाविषयतया ।
अन्यत्रोत्प्रेक्षायां । अन्वयसंभवादिति निराकांक्षत्वादितिभावः । अतएवाख्याना
र्थस्यकर्तुःक्रियोपसर्जनत्वेनान्यत्रान्वयासंभवादेवक्वचिदतएवेत्युत्तरग्रंथएवव्याख्यान
ग्रंथःप्रमादल्लिखितोदृश्यते । न्यग्भूतेतिगुणभूतइत्यर्थः । स्वक्रियेति । क्रियांप्रति
साधनत्वेनान्वितइत्यर्थः । व्यपेक्षितुमाकांक्षितुं । नालंनसमर्थः । तथाचनिराकांक्षत्वा
दुपमानत्वेनान्वयोनसंभवतीतिभावः । एतेनतमसिलेपनकर्तृत्वमुत्प्रेक्ष्यमित्यलंकारसर्व
स्वकारमतमपास्तम् । तस्यापिकर्तृविशेषणत्वाद्विनाकांक्षत्वविरहेण लेपनस्यैवोत्प्रेक्ष्यत्वा
त् । एवंचप्रधानभूतलेपनक्रियागोचरसाधर्म्यनिगीर्णव्यापनविषयेतिसिद्धं । ननुयु
गपद्वृत्तिद्वयविरोधः शंक्यस्तदनभ्युपगमात् ।

केचित्तुतमोनभसोर्विषयस्तत्कर्तृकलेपनवर्षणस्वरूपधर्मोत्प्रे
क्ष्यइत्याहुः । तन्मतेस्वरूपोत्प्रेक्षायांधर्म्युत्प्रेक्षाधर्मोत्प्रेक्षाचेत्ये
वंद्वैविध्यंद्रष्टव्यम् । चरणयोःस्वतःसिद्धरक्तिमनिवस्तुतोवि
क्षेपणंनहेतुरित्यहेतोस्तस्यहेतुत्वेनसंभावनाहेतूत्प्रेक्षाविक्षेप
णस्यविषयस्यसत्त्वात्सिद्धविषया । चंद्रपद्मविरोधेस्वाभावि
केनाधिकावदनकान्तिप्रसानहेतुरितितत्रतद्धेतुत्वसंभावना
हेतूत्प्रेक्षावस्तुतस्तदिच्छायाअभावादसिद्धविषया । मध्यः
स्वयमेवकुचौधरति नतुकनकदामबन्धत्वेनाऽध्यवसितायाव
लित्रयशालितायाबलात्इतिमध्यकर्तृककुचधृतेस्तत्फलत्वे-
नोत्प्रेक्षासिद्धविषयाफलोत्प्रेक्षा । जलजस्यजलावस्थितेरुद
वासतपस्त्वेनाऽध्यवसितायाःकामिनीचरणसायुज्यप्राप्तिर्न
फलमिति तस्या गगनकुसुमायमानायास्तपःफलत्वेनोत्प्रेक्ष
णादसिद्धविषयाफलोत्प्रेक्षा ।

केचिदितिमतइतिचास्वरसोद्भावनं । तद्बीजंतुतमोनभसोःकर्तृत्वेनविषयत्वेनचवा रद्वयमन्वयक्लेशः । तथाधर्म्युत्प्रेक्षासाधर्मप्रयुक्ताधर्मोत्प्रेक्षातुतत्सहचरितधर्मसंबंधप्रयु क्तेतिलक्षणाननुगमः। नचतन्निष्ठतत्समानाधिकरणान्यतरत्वेनधर्मेनिवेशान्नाननुगमइ तिवाच्यं । सर्वत्रसादृश्यनिमित्तायाएवोत्प्रेक्षायाःसंभवेनान्यतरत्वादिनिवेशप्रयुक्तगौ रवस्यानुपादेयत्वादिति । हेतुत्वेनेति हेतुरूपतयेत्यर्थः । हेतुसंभावनाहेतुरूपतासंभा वना । फलत्वेनफलरूपतया । एवमग्रेपिवोध्यं । अथोदाहृतासूत्प्रेक्षासुवोधप्रकारःप्र दर्श्यते । तत्रधूमस्तोममित्यादौकोकांगनाविरहानलसंबंधिधूमस्तोमाभिन्नतमोविषया संभावनेतिवोधः । नामार्थयोरभेदान्वयात् । एवंमुखंचंद्रंमन्यइत्यादावपि। नूनंमुखंचं द्रइत्यादौतुचंद्रप्रकारकसंभावनाविषयोमुखमितिवोधः । मुखविषयाचंद्रप्रकारिकाचसं भावनातादात्म्यसंसर्गिकैव।तथानुभवाच्चमत्कारप्रयोजकस्यसंसर्गांतरस्याभावाच्च। नचै वंचंद्रत्वप्रकारिकातस्यचंद्रोपसर्जनत्वात् । एवंध्रुवेवादिशब्दसमभिव्याहारेपिवोध्यम्। लिंपतीवेत्यनुक्तविषयोत्प्रेक्षोदाहरणेतुलिंपतिनासाध्यवसानलक्षणयालेपनव्यापनोभ यसाधारणेनसांद्रमलिनीकारकत्वादिनारूपेणोपस्थापितेतमोव्यापनेलेपनसंभावनान्व यात्सांद्रमलिनीकारकंतमःकर्तृकांगकर्मलेपनप्रकारकसंभावनाविषयइतिवोधः । व्यं जनयोपस्थितेव्यापनेतादृशसंभावनान्वयइतिप्रदीपकृतः । एवंवर्षतीत्यादावपिवोध्य म् । विक्षेपणाद्ध्रुवमित्यादिहेतूत्प्रेक्षोदाहरणेहेतुःपंचम्यर्थः । तत्रचाभेदेनप्रकृत्यर्था न्वयः । हेतोश्चस्वप्रयोज्याश्रयत्वसंबंधेनरक्तत्वविशिष्टेतस्यप्रकारतासंबंधेनसंभावना यांतस्याश्चविषयतयाचरणयोरन्वयः । तथाचभूम्यधिकरणकविक्षेपणाभिन्नहेतुकर क्तप्रकारकसंभावनाविषयावंघ्रीइतिवोधः । नचतादात्म्यसंबंधेनहेतुविधेयकत्वाभावा न्नेयंहेतूत्प्रेक्षास्या।त्किंतुतादात्म्येनतथाविधरक्तस्वरूपोत्प्रेक्षैवेतिवाच्यम् । विवक्षित विवेकेनविक्षेपणेहेत्वभेदस्योत्प्रेक्षणीयतयाविक्षेपणंप्रतिविशेष्यभूतस्यापिहेतोर्विधेयत्वो पगमात् ।मुखंचंद्रइत्यारूपकइवानुयोगित्वमुखस्याभेदस्यविक्षेपणसंसर्गत्वाभ्युपगमेनच विक्षेपणेहेत्वभेदभानसंभवात्।हेतुविशिष्टस्वरूपोत्प्रेक्षायामुखतःप्रतीतावपिविवक्षावशे नहेतूत्प्रेक्षात्वेनैवव्यपदेशः। यथादध्नाजुहोतीत्यत्रमुखतोदधिविशिष्टहोमप्रतीतावपिवि वक्षितविवेकेनहोमेदधिविधित्वव्यपदेशइतिवोध्यं।नचस्वप्रयोज्यत्वसंबंधेनस्वप्रयोज्या श्रयत्वसंबंधेनवाहेतुरूपधर्मोत्प्रेक्षैवरक्तादौस्वीक्रियतांकृतमीदृशकल्पनाक्लेशेनेतिवाच्य म् । धर्मोत्प्रेक्षांगीकारेदूषणस्यप्रागेवावेदितत्वात् । अतएव'हर्षाल्लग्नामन्येललिततनु तेपादयोःपद्मलक्ष्मीः' इतिहेतूत्प्रेक्षामुदाहृतवतःप्रकाशकृतोपितत्रहर्षहेतुकलगनतादा त्म्यसंभावनमेवास्वाभाविकेलगनेऽभिमतम् । अस्मदुक्तरीत्यातुलक्ष्मीरूपेविषयेयथो क्तहर्षहेतुकलगनतादात्म्यसंभावनमुचितं। लगनस्यधर्म्युपसर्जनत्वेनसंभावनायामन्व

यायोगादिनिरस्येयं । एवंतन्तुत्वाभेदस्येतत्प्रसिद्धविषयहेतूत्प्रेक्षायामपिबोध्यं । विषय सिद्धत्वासिद्धत्वाभ्यांतयोर्विशेषाभावात् । मध्यःकिमितादिफलोत्प्रेक्षास्यत्वेफलंचतु ष्टयंथः । तत्रचाभेदेनमकृत्यर्थान्वयःपूर्ववत्। फलस्यचमयोजककलमसंसर्गेणचन्द्रत्वेतद्वा रेकणैनन्त्ववर्द्धान्वयस्तत्तादात्म्यसंसर्गकसंभावनायामध्येविषयतया । एवंचकुचध रणाभिन्नफलककनकदामकरणकवद्धताश्रयसंभावनाविषयोमध्यइतिबोधः। एवंमा योऽन्नामितादावपिफलंनुमुनेर्थइतिपूर्ववदेवबोधः।फलोत्प्रेक्षासंचोपदर्शिततरीसोपपाद नीयमानित्वकुत्वक्ष्येपिविस्तरभयादुपरम्यते ।

अनेनैवक्रमेणोदाहरणांतराणि॥बालेंदुवक्राण्यविकासभावा द्बभुःपलाशान्यतिलोहितानि॥सद्योवसंतेनसमागतानांनखक्ष तानिवनस्थलीनां ॥ अत्रपलाशकुसुमानांवक्रत्वलोहितत्वे नसंबंधेननिमित्तेनसद्यःकृतनखक्षततादात्म्यसंभावनाउक्त विषयास्वरूपोत्प्रेक्षा । पूर्वोदाहरणेनिमित्तभूतधर्मसंबंधोग म्यइहतूपात्तइतिभेदः । नन्विवशब्दस्यसादृश्यपरत्वेनप्र सिद्धतरत्वादुपमैवास्तु। लिंपतीवेत्युदाहरणेलेपनकर्तुरुपमा नत्वार्हस्यक्रियोपसर्जनत्ववदिहनखक्षतानामन्योपसर्जनत्व स्योपमाबाधकस्याभावात्।उच्यते। उपमायायत्रक्वचित्स्थ तैरपिनखक्षतैःसहवक्तुंशक्यतयावसंतनायकसमागतवनस्थ लीसंबंधित्वस्यविशेषणस्यानपेक्षितत्वादिहतदुपादानंपला शकुसुमानांनखक्षततादात्म्यसंभावनायामिवशब्दमवस्थाप यति। तथात्वएवतद्विशेषणसाफल्यात्। अस्तिचसंभावनाया मिवशब्दोदूरेतिष्ठन्देवदत्तइवाभातीति॥ पिनष्टीवतरंगाग्रैः समुद्रःफेनचंदनम् ॥ तदादायकरैरिंदुर्लिंपतीवदिगंगनाः॥ अत्रतरंगाग्रैःफेनचंदनस्यप्रेरणंपेषणतयोत्प्रेक्ष्यते । समुद्रादु त्थितस्यचन्द्रस्यप्रथमंसमुद्रपूरेप्रसृतानांकराणांदिक्षुव्यापनं चसमुद्रोपांतफेनचंदनकृतलेपनत्वेनोत्प्रेक्ष्यते । उभयत्रक्र मेणसमुद्रप्रांतगतफेनचंदनपुंजीभवनंदिशांधवलीकरणंचानि मित्तमितिफेनचंदनप्रेरणकिरणव्यापनयोर्विषययोरनुपादाना

दनुक्तविषयेस्वरूपोत्प्रेक्षे। एषांतूपात्तयोःसमुद्रचंद्रयोरेवतत्कर्तृकपेषणलेपनरूपधर्मोत्प्रेक्षेतिमतं । तेषांमतेपूर्वोदाहरणेधर्मिणिधर्म्यंतरतादात्म्योत्प्रेक्षा।इहतुधर्मिणिधर्मसंसर्गोत्प्रेक्षेतिभेदोवगंतव्यः॥रात्रौरवेर्दिवाचेंदोरभावाद्दिवसप्रभुः॥भूमौप्रतापयशसीसृष्टवान्सततोदिते॥रात्रौरवेर्दिवाचंद्रस्याभावःसन्नपिप्रतापयशसोःसर्गेनहेतुरितितस्यतद्धेतुत्वसंभावनासिद्धविषयाहेतूत्प्रेक्षा ॥

बालेंदुवक्राणीति। नविद्यतेविकासोयेषांतान्यविकासानितेषांभावाद्विकासरहितत्वाद्धेतोर्वालेंदुवद्द्वितीयाचंद्रवद्वक्राणितथातिशयेनलोहितान्यारक्तानिपलाशानिपलाशकुसुमानिवसंतेननायकेनसमागमंप्राप्तानांवनस्थलीनामंगनानांसद्यस्तत्कालसंभूतानिनखक्षतानीवबभुःशुशुभिरइसन्वयः । पूर्वेति । धूमस्तोममिसत्रेसर्थः। ननु लोकेसंभावनायामिवशब्दोनदृष्टइस्यतआह । अस्तिचेति। पिनष्टीवेति। समुद्रस्तरंगाणामग्रभागैःफेनरूपंचंदनंपिनष्टीवइंदुस्तत्फेनचंदनमादायकरैःकिरणैर्दिग्रूपाअंगनालिंपतीवानुलिंपतीवेसर्थः। समुद्रोपांतेति। समुद्रस्योपांतेतटेयत्फेनचंदनंतत्कृतंयत्तासांदिशांलेपनंतत्त्वेनेसर्थः। उभयत्रउभयोरुत्प्रेक्षयोः। येषामलंकारसर्वस्वकारादीनां। रात्राविति । सप्रक्रांतःप्रभुर्भूपतिर्भूमौरात्रौरवेरभावाद्धेतोरिवदिवाचेंदोरभावाद्धेतोरिवसततंनिरंतरमुदितेप्रतापयशसीसृष्टवान्निर्मितवानिसर्थः। रक्ताविसुदाहरणेभावरूपोहेतुरिहत्वभावरूपइतिभेदः।

विवस्वतानायिषतेवमिश्राःस्वगोसहस्त्रेणसमंजनानां ॥ गावोपिनेत्रापरनामधेयास्तेनेदमांध्यंखलुनांधकारैः ॥ अत्रविवस्वताकृतंस्वकिरणैःसहजनलोचनानांनयनमसदेवरात्रावांध्यंप्रतिहेतुत्वेनोत्प्रेक्ष्यतइत्यसिद्धविषयाहेतूत्प्रेक्षा ॥ पूरंविधुर्वर्द्धयितुंपयोधेःशंकेयमेणांकमणिंकियंति ॥ पयांसिदोग्धिप्रियविप्रयोगेसशोककोकीनयनेकियंति ॥ अत्रचंद्रेणकृतंसमुद्रस्यबृंहणंसदेवतदातेनकृतस्यचन्द्रकांतद्रावणस्यकोकांगनाबाष्पस्रावणस्यचफलत्वेनोत्प्रेक्ष्यतइतिसिद्धविषयाफलोत्प्रेक्षा ॥ रथस्थितानांपरिवर्तनायपुरातननामिववाहनानाम्॥ उत्पत्तिभूमौतुरगोत्तमानांदिशिप्रतस्थेरविरुत्तरस्यां॥ अ

त्रोत्तरायणस्याश्वपरिवर्त्तनमसदेवफलत्वेनोत्प्रेक्ष्यतइत्यासि द्धविषयाफलोत्प्रेक्षा । एताएवोत्प्रेक्षा'मन्येशंकेध्रुवंप्रायोनून मित्येवमादिभिः॥उत्प्रेक्षाव्यज्यतेशब्दैरिवशब्दोपिताद्दशः'इ त्युत्प्रेक्षाव्यंजकत्वेनपरिगणितानांशब्दानांप्रयोगेवाच्याः । ते षामप्रयोगेगम्योत्प्रेक्षायथा ॥ त्वत्कीर्तिर्भ्रमणश्रांताविवेशस्व र्गनिम्नगाम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

विवस्वतेति। विवस्वतासूर्येणस्वस्यगोसहस्रेण किरणसहस्रेणसमंमिश्रामिश्रिताजनानां नेत्रापरनामधेयागावोप्यनायिषतेवनीताइव।यथागोपालेनपरकीयाभिर्गोभिर्मिश्राःस्वी यागावोनीयंते तथागोपदवाच्यत्वसाजात्येनमिश्रिताविवस्वतापिनीताइवेत्यर्थः।खलुसंभा वनायां।तेननयनेनहेतुनाइदमांध्यंनत्वंधकारैरित्यन्वयः।गौःस्वर्गेचबलीवर्देरश्मौचकुलि शेपुमान्। स्त्रीसौरभेयीदृग्बाणदिग्वाग्भूष्वप्सुभूम्निचेतिमेदिनी । अत्रचानायिषतेवेति विषयोत्प्रेक्षणपूर्वकंतस्यहेतुत्वेनोत्प्रेक्षणमितिपूर्वस्माद्भेदः । एवंपूर्वत्रइच्छयेतिगुणरू पोहेतुरिहतुक्रियारूपइत्यपिद्रष्टव्यं । अत्रचोत्प्रेक्षाद्वयसत्त्वेपिहेतूत्प्रेक्षायाःप्राधान्यात्त त्त्वेनैवव्यपदेशोनतुस्वरूपोत्प्रेक्षात्वेन तस्याअंगत्वात् ।एवमन्यत्रापिबोध्यं। पूरमिति। अ यंविधुश्चंद्रःपयोधेःपूरंवर्धयितुमेणांकमणिंचंद्रकांतंकियंतिलोकोत्तयाअपरिमितानिप यांसिदोग्धीतिशंके। तथाप्रियैःपतिभिर्विप्रयोगेवियोगेसतिसशोकानांकोकांगनानां नयनेकर्मभूतेकियंतिपयांसिदोग्धीतिशंकेइत्यन्वयः। दुहेर्द्विकर्मकत्वादेणांकमणिमिति द्वितीया। एवंनयनेइत्यत्रापिमध्यःकिमित्यत्रैकस्यवद्धत्वस्यफलत्वेनकुचधृतेरुत्प्रेक्षणमिह तुद्रावणस्रावणयोर्द्वयोःफलत्वेनपूरवर्धनस्यतदितिभेदः। बृंहणंवर्द्धनं । तदावर्धनकाले तेनचंद्रेण।रथस्थितानामिति।रविःरथेस्थितानांनियुक्तानांपुरातनानांवाहनानामश्वा नांपरिवर्तनायेवतुरगोत्तमानामुत्पत्तिभूमावुत्तरस्यांदिशिप्रतस्थइत्यन्वयः। प्रायोऽजमि त्यत्रैक्यस्यगुणस्यफलत्वेनोत्प्रेक्षणमिहतुपरिवर्तनक्रियायाइतिभेदः। नन्वलंकारसर्वस्व कारादिभिरन्येषामपिजात्यादिभेदानामुक्तत्वात्कुतस्तेनप्रदर्शिताइत्याशंक्याह। एताए वेतिउक्तभेदाएवेत्यर्थः। उत्प्रेक्षाइत्यनंतरंचमत्कारविशेषप्रयोजिकाइतिशेषः। तथा चजात्यादिभेदानांचमत्कारविशेषानाधायकत्वादप्रदर्शनमितिभावः। इत्युत्प्रेक्षेति। इ त्यनेनोत्प्रेक्षाबोधकत्वेनेत्यर्थः। त्वत्कीर्तिरिति। अत्रानुपात्तस्वर्गगमनविषयास्वर्गंगाप्रवे शतादात्म्योत्प्रेक्षाविशेषणीभूतभ्रमणश्रांतत्वरूपहेतूत्प्रेक्षावाप्रतीयतइतिबोध्यं॥३१॥ ॥ ३२ ॥ ३३ ॥ ३४ ॥ इतिश्रीमत्तत्सदुपाख्यवैद्यनाथकृतायामलंकारचंद्रिकायां श्रीमत्कुवलयानंदीयटीकायामुत्प्रेक्षाप्रकरणम् ॥ ॥ ॥ ॥

रूपकातिशयोक्तिःस्यान्निगीर्याध्यवसानतः । पश्य नीलोत्पलद्वंद्वान्निःसरंतिशिताःशराः ॥ ३५ ॥

विषयस्यस्वशब्देनोल्लेखनंविषयिवाचकेनैवशब्देनग्रहणंविषयनिगरणंतत्पूर्वकंविषयस्यविषयीरूपतयाध्यवसानमाहार्यनिश्चयस्तस्मिन्सतिरूपकातिशयोक्तिः। यथा नीलोत्पलशरशब्दाभ्यांलोचनयोःकटाक्षाणांचग्रहणपूर्वकंतद्रूपताध्यवसानम्। यथावा ॥ वापीकापिस्फुरतिगगनेतत्परंसूक्ष्मपद्यासोपानालीमधिगतवतीकांचनीमैंद्रनीली ॥ अग्रेशैलौसुकृतिसुगमौचंदनछन्नदेशौतत्रत्यानांसुलभममृतंसन्निधानात्सुधांशोः ॥ अत्रवाप्यादिशब्दैर्नाभिप्रभृतयोनिगीर्णाः ॥

अतिशयोक्तिलक्षयति ॥ रूपकातिशयोक्तिरिति । ग्रहणमुपस्थापनं। विषयिरूपतयेति। विषयिणोरूपमस्यतस्यभावस्तत्तातयेसर्थः। रूपंचाभेदताद्रूप्यान्यतरत्। तस्मिन्सतीति। सप्तमीसमर्थात्तसिरिसभिप्रायेण। एवंचानुपात्तविषयधर्मिकाहार्यनिश्चयविषयीभूतंविषय्यभेदताद्रूप्यान्यतरद्रूपकातिशयोक्तिरितिलक्षणंबोध्यं । अत्ररूपकवारणायानुपात्तेति । अयमेवचरूपकादस्याविशेषोऽतिशयइत्युच्यते। भ्रांतिवारणायाहार्येति । उत्प्रेक्षावारणायनिश्चयेति। नीलोत्पलेति। अत्रनीलोत्पलपदात्साध्यवसानलक्षणयाशक्यलक्ष्योभयानुगतकांतिविशेषादिपुरस्कारेणोपस्थितेकामिनीनयनेशक्त्युपस्थितस्यनीलोत्पलत्वविशिष्टस्याभेदसंसर्गेणान्वयः । शक्त्युपस्थितयोःकृतीष्टसाधनतयोरिवशक्तिलक्षणाभ्यामुपस्थितयोरप्येकपदार्थयोस्तात्पर्यवशेनान्वयांगीकारेबाधकाभावात् । एवंच नीलोत्पलाभिन्नकांतिविशेषवद्द्वंद्वादितिबोधादियमभेदातिशयोक्तिरित्युच्यते । नयैवंसतिरूपकादवैलक्षण्यमितिवाच्यम् । रूपकेविषयिभेदव्याप्यस्यविषयतावच्छेदकस्यभानेनवैलक्षण्यस्यस्फुटत्वात् । यदात्वभेदभानेनतात्पर्यं किंतुभेदभानेतदाकांतिविशेषादिरूपताद्रूप्यस्यैवबोधात्ताद्रूप्यातिशयोक्तिर्वक्ष्यतेइतिबोध्यं । वापीति । मध्यभागमारभ्यमुखपर्यंतंनायिकांगवर्णनमिदम् । गगनेसूक्ष्मतयातद्दुर्लक्ष्येमध्येकाप्यनिर्वचनीयशोभावापीतद्द्गंभीरानाभिःस्फुरतिशोभते तत्परंतदूर्ध्वभागेऐन्द्रनीलीइन्द्रनीलघटितासूक्ष्मपद्यासरणिस्तद्वच्छ्यामारोमावलिःस्फुरतीसनुपज्यते। किंभूता कांचननिर्मितांसोपानपंक्तितत्सदृशींत्रिवलीमधिगतवतीप्राप्तवती । तथाअग्रेतदूर्ध्वदेशेशैलौतद्वत्तुंगविशालौकुचौस्फुरतइतिविभक्तिपरिणामेनसंबध्यते । कीदृ

शौ सुकृतिनांपुण्यकृतांसुगमौसुलभगमनौसुलभौच । पुनःकीदृशौ चंदनतरुभिश्चं दनपकेनचाच्छन्नोन्याप्तोदेशोययोस्तथाभूतौ । तत्रस्नानांतदाश्लिष्टानांचसुधांशोस्तद्व दाल्हादकस्यमुखस्यसन्निधानादमृतंतद्वदास्वाद्यमधरमाधुर्यंसुलभमित्यन्वयः ॥–

अत्रातिशयोक्तौरूपकविशेषणंरूपकेदर्शितानांविधानामिहा पिसंभवोस्तीत्यतिदेशेनप्रदर्शनार्थम् । तेनात्राप्यभेदातिशयो क्तिस्ताद्रूप्यातिशयोक्तिरितिद्वैविध्यंद्रष्टव्यं । तत्राप्याधिक्य न्यूनताविभागश्चेतिसर्वमनुसंधेयं । यथावा ॥ सुधाबद्धग्रासै रुपवनचकोरैरनुसृतांकिरज्ज्योत्स्नामच्छांलवलिफलपाकप्र णयिनीं ॥ उपप्राकाराग्रंप्रहिणुनयनेतर्कयमनागनाकाशेको यंगलितहरिणःशीतकिरणः॥इत्यत्रकोयमित्युक्त्याप्रसिद्धचं द्राद्भेदस्ततउत्कर्षश्चगर्भितः ॥ एवमन्यत्राप्यूहनीयम्॥३५॥

विधानांभेदानां।इतीत्यस्यप्रदर्शनार्थमित्यनेनान्वयः।अतिदेशेनेतिसादृश्येनेत्यर्थः। मुख्यरूपकाभेदस्यातिशयोक्तावभावाद्रूपकसदृशपरं । षण्मासमग्निहोत्रंजुव्हतीत्यत्रा ग्निहोत्रपदवद्धर्मातिदेशकमित्याशयः । आधिक्यन्यूनतेत्यत्रानुभयोक्तेरुक्तोदाहरणेषु प्रसिद्धतरत्वादनुपादानंवोध्यम् । यत्त्वत्रकैश्चिदुक्तं विषयिवाचकपदस्यविषयेसा ध्यवसानलक्षणायाःशक्यतावच्छेदकमात्रप्रकारकलक्ष्यविशेष्यकबोधत्वंकार्यतावच्छेद कं एवंचनिगरणेसर्वत्रविषयतावच्छेदकधर्मरूपेणैवविषयस्यभानंनविषय्यभिन्नत्वेनेति स्थितेऽभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरितिद्वैविध्यमयुक्तमितितत्प्रौढिविलसि तम् । शक्यतावच्छेदकस्यलक्ष्येपूर्वमप्रीतत्वेनतद्विशिष्टतयालक्षणायाअसम्भवात् । यद्धर्मविशिष्टेशक्यसंबंधग्रहस्तद्धर्मप्रकारकलक्ष्योपस्थितेःसमानप्रकारकशाब्दबोधेहेतु त्वाल्लक्षणापरिहार्यायाअनुपपत्तेस्तदवस्थत्वाच्च । एवमपितात्पर्यवशात्तादृशबोधांगी कारेतद्वशादेवशक्याभेदप्रकारकबोधेपिबाधकाभावान्मात्रपदेनविषयतावच्छेदकस्यैव व्यावर्तनादितिदिक् । सुधाबद्धेति । विद्धशालभंजिकाख्यायांनाटिकायांस्फटि कमाकारशिखरगतांमृगांकावलीमालोकयतोराज्ञोविदूषकंप्रत्युक्तिरियम् । प्राकारा ग्रसमीपेनयनेप्रहिणुप्रेरय मनाक्ईषत्तर्कय अनाकाशे अनंतरिक्षेकोयंशीतकिरणश्चंद्र इतिमुखेचंद्रगताल्हादकारित्वरूपताद्रूप्याध्यवसानम् । कीदृशः गलितश्च्युतोहरि णोयस्मात्तथाभूतस्तेननिष्कलंकतयोत्कर्षाभिव्यक्तिः । पुनःकीदृक् । सुधायांब द्धोग्रासस्तदभिलाषोयैस्तैरुपवनसंबन्धिभिश्चकोरैरनुसृतांलवल्याःफलपाकस्यप्रणयि नींसदृशीमच्छांस्वच्छांज्योत्स्नान्तरत्वेनाध्यवसितांकान्तिप्रभांकिरन्प्रसारयन्नित्यर्थः ।

लवलीलताविशेषोहरफारेवडीतिभाषाप्रसिद्धः । प्राकारोवरणःशालइत्यमरः । स मावद्धप्रासैरितिकचित्पाठस्तत्राप्युक्तएवार्थः । नवलवलीतिपाठेनवश्चासौलवलिपा कश्चेत्यन्वयोवोध्यः । नन्विहाभेदविवक्षैवार्किनस्यादतआह अत्रेति । कोयमित्यनेना निर्ज्ञातत्वप्रकाशनात्प्रसिद्धस्यनिर्ज्ञातत्वात्तद्वैलक्षण्यावगतिरितिभावः । गर्भितोगलितत्वे त्यादिविशेषणव्यंग्यत्वेनाभिमेतः । अन्यत्रापीति । 'अनुच्छिष्टोदेवैरपरिदलितोराहुदश नैःकलंकेनाश्लिष्टोनखलुपरिभूतोदिनकृता ॥ कुहूभिर्नोलिप्तोनचयुवतिवक्रेणविजितः कलानाथःकोयंकनकलतिकायामुदयते॥' इत्यादावित्यर्थः । अथवान्यत्रापिन्यूनतायाम पीत्यर्थः । कोयंभूमिगतश्चंद्रइत्यादावदिव्यत्वरूपन्यूनताप्रकाशनमूहनीयमितिभावः । ननूक्तोदाहरणेष्वयमितिविषयस्योपादानात्कथमतिशयोक्तिरितिचेदत्राहुः । इदंत्वस्य विषयिविशेषणत्वेनविवक्षायामतिशयोक्तिरेव यदातुविषयविशेषणत्वविवक्षातदारूप कमितिव्यवस्था । अतएवप्रकाशकृतादशमेरूपकातिशयोक्त्यादिसंदेहसंकरेनयनानंद दायींदोर्बिंवमेतत्प्रसीदतीत्युदाहृतमिति ॥ ३५ ॥

यद्यपन्हुतिगर्भत्वंसैवसापन्हवामता ॥ त्वत्सू
क्तिषुसुधाराजन्भ्रांताःपश्यंतितांविधौ ॥३६॥

अत्रत्वत्सूक्तिमाधुर्यमेवामृतमित्यतिशयोक्तिश्चंद्रमंडलस्थममृतंनभवतीत्यपन्हुतिगर्भा । यथावा॥मुक्ताविद्रुममंतरामधुरसःपुष्पंपरंधूर्वहंप्रालेयद्युतिमंडलेखलुतयोरेकासिकानार्णवे॥तच्चोदंचतिशंखमूर्ध्निनपुनःपूर्वाचलाभ्यंतरेतानीमानिविकल्पयंतितइमेयेषांनसाहृक्पथे॥ अत्राधररसएवमधुरसइत्याद्यतिशयोक्तिःपुष्परसोमधुरसोनभवतीत्यपन्हुतिगर्भा ।अलंकारसर्वस्वकृतास्वरूपोत्प्रेक्षायांसापन्हवत्वमुदाहृतं।'गतासुतीरंतिमिघट्टनेनससंभ्रमंपौरविलासिनीषु।यत्रोल्लसत्फेनततिच्छलेनमुक्ताट्टहासेवविभातिशिप्रा'इतितत्तस्त्वियानत्रभेदः। एततुशुद्धापन्हुतिगर्भं । यत्रफेनततित्वमपन्हुतंतत्रैवाट्टहासत्वोत्प्रेक्षणादिहतुपर्यस्तापन्हुतिगर्भत्वमिंदुमंडलादावपन्हुतस्यामृतादेःसूक्त्यादिषुनिवेशनात् । इदंचपर्यस्तापन्हुतिगर्भत्वमुत्प्रेक्षायामपिसंभवति । तत्रस्वरूपोत्प्रेक्षायांयथा॥जानेतिरागादिदमेवबिंबंबिंबस्यचव्यक्तमितोऽधरत्वं ॥ द्वयोर्विशेषा

वगमाक्षमाणानान्निभ्रमोभूदनयोर्जनानां ॥ अत्रप्रसिद्धफले बिंबतामपन्हुत्यातिरागेणानिमित्तेनदमयंत्यधरेतदुत्प्रेक्षापर्यस्तापन्हुतिगर्भा । हेतूत्प्रेक्षायांतद्गर्भत्वंप्राग्लिखितेहेतूत्प्रेक्षोदाहरणेएवदृश्यते । तत्रचांधकारेष्वांध्यहेतुत्वमपन्हुत्यान्यत्र तन्निवेशितम् । फलोत्प्रेक्षायांयथा ॥ रवितप्तोगजःपद्मांस्तद्गृह्यान्बाधितुंध्रुवं॥सरोविशतुनस्नातुंगजस्नानंहिनिष्फलं ॥ अत्रगजस्यसरःप्रवेशंप्रतिफलेस्नानेफलत्वमपन्हुत्यपद्मबाधनेतन्निवेशितं ३६ अलमनयाप्रसक्तानुप्रसक्त्याप्रकृतमनुसरामः—

एनांविभजते ॥ यद्यपन्हुतीति ।अपन्हुतिगर्भत्वंपर्यस्तापन्हुतिगर्भत्वं सैवरूपकातिशयोक्तिरेव । तथाचसापन्हववत्वनिरपन्हववत्वभेदेनद्विविधाऽतिशयोक्तिरितिभावः । मुक्तेति । तान्यनुभवैकवेद्यानीमानिवस्तूनितेइमेजनाःविकल्पयंतिसदसद्वेतिविकल्पविषयाणिकुर्वंति । येषांजनानांसाप्रक्रांतासुंदरीदृक्पथेलोचनमार्गेनास्तीत्यन्वयः । तादृशसुंदरीदर्शनशालिनस्तुविकल्पयंतीतिभावः । तानिकानिवस्तूनितत्राह । मुक्तामौक्तिकंविद्रुमंप्रवालंचांतराअनयोर्मध्येमधुरसः । अंतरांतरेणयुक्तेइतिद्वितीया । पुष्पपरंकेवलंधूर्वहंभारवाहकंनतुमधुरसयुक्तं । तयोर्मुक्ताविद्रूमयोःखलुनिश्चितंप्रालेयद्युतिमंडलेचंद्रमंडलेएकासिकाएकस्मिन्नासिकाअवस्थितिरैकाधिकरण्यमित्यर्थः । नत्वर्णवेसमुद्रेतच्चचंद्रमंडलंचशंखस्यमूर्ध्निमस्तकेउदंचतिउदयंप्राप्नोति नपुनःपूर्वाचलस्योदयगिरेरभ्यंतरेउदंचति । अत्रमुक्ताविद्रुममधुरसप्रालेयद्युतिमंडलशंखशब्दैःक्रमेणदंताधरतन्माधुर्यमुखकंठानिगीर्णाः।पूर्वोदाहरणेभ्रांतत्वोक्त्यास्पष्टोऽपन्हवः इहतुपरंधूर्वहमित्युक्त्यागूढइतिभेदः । प्रालेयंमिहिकाचेत्यमरः । गतास्विति । पुरेभवाःपौर्यस्तासुविलासिनीषु तिमीनांमत्स्यानांसंघट्टनेनससंभ्रमंसभयंतीरंप्रतिगतासुसतीषु यत्रनगर्यांशिप्रानदीउल्लसंतीनांफेनततीनांछलेनमुक्तःकृतोऽट्टहासउद्धतहास्यंयथातथाभूतेवविभातीत्यन्वयः । इतीतिइत्यत्रेत्यर्थः । इंदुमंडलादावित्यादिपदात्पुष्परसादिपरिग्रहः । सूक्त्यादिष्विति सूक्तिमाधुर्यादिष्वित्यर्थः । आदिनाअधरमाधुर्यपरिग्रहः । निवेशनादभेदाध्यवसानात् । जानेइति दमयंतींवर्णयतोनलस्योक्तिः। अतिशयितात्प्रागाढ्यौहित्यादिदमधरस्वरूपमेवबिंबमितिजाने नतुबिंबफलमित्येवकारार्थः । बिंबस्यबिंबफलस्यातोस्मादोष्ठादधरत्वंनिकृष्टत्वंव्यक्तंस्फुटं । कथंतर्हिविपरीतालोकेप्रसिद्धिस्तत्राह ।द्वयोरनयोर्विशेषस्यतारतम्यस्यावगमेबोधेऽक्षमाणामसमर्थानांजनानांनाम्निभ्रमोविपर्यासोभूदिति। अन्यत्रेति। सूर्यकर्तृकेनेत्रापरपर्यायगोनयनेइत्यर्थः । निवेशितमुत्प्रेक्षितं । रवी

ति । रविणासंतप्तोगजस्तस्यरवेर्गृह्यान्पक्ष्यान्वंधूनितियावत् । ध्रुवंमायोवाधितुंसरःप्र विशतिनतुस्नातुंस्नानार्थीहियस्माद्गजस्यस्नानंनिष्फलंनिष्प्रयोजनमित्यन्वयः । प्रसक्ता नुप्रसक्त्येति । अतिशयोक्तेःसापन्हवत्वकथनप्रसंगादलंकारसर्वस्वकृदुक्तस्वरूपोत्प्रेक्षा यांशुद्धापन्हुतिगर्भत्वदर्शितंतदनुप्रसक्त्याचत्रिविधास्वप्युत्प्रेक्षासुपर्यस्तापन्हुतिगर्भत्व मित्यर्थः ॥ ३६ ॥

भेदकातिशयोक्तिस्तुतस्यैवान्यत्ववर्णनं ॥ अ
न्यदेवास्यगांभीर्यमन्यद्धैर्यंमहीपतेः ॥ ३७ ॥

अत्रलोकप्रसिद्धगांभीर्याद्यभेदेपिभेदोवर्णितः । यथावा ॥ अन्येयंरूपसंपत्तिरन्यावैदग्ध्यधोरणी ॥ नैषानलिनपत्राक्षी सृष्टिःसाधारणीविधेः ॥ ॥३७॥

भेदकेति । तस्यैवतज्जातीयस्यैवान्यत्ववर्णनंतज्जातीयभिन्नत्वेनवर्णनंतच्चाहार्यबोध्य मेवमग्रेपितेनभ्रांतौनातिव्याप्तिः । इदंचलोकोत्तरत्वप्रतिपत्त्यर्थम् । अन्यदेवेति । अ स्यमहीपतेर्गांभीर्यमन्यदेवप्रसिद्धगांभीर्यभिन्नमेवेत्यर्थः । अन्येयमिति । रूपंसौंदर्यंवै दग्ध्यंचातुर्यंधोरणीपरिपाटीएपानलिनपत्राक्षीविधेःसाधारणीसृष्टिर्नैवेत्यन्वयः । अ त्रोत्तरार्धेनञ्भंग्याऽन्यत्ववर्णनंविशेषः ॥ ३७ ॥

संबंधातिशयोक्तिःस्यादयोगेयोगकल्पनम् ॥ सौ
धाग्राणिपुरस्यास्यस्पृशंतिविधुमंडलं ॥ ३८ ॥

यथावा ॥ कतिपयदिवसैःक्षयंप्रयायात्कनकगिरिःकृतवासरावसानः ॥ इतिमुदमुपयातिचक्रवाकीवितरणशालिनिवीररुद्रदेवे ॥ अत्रचक्रवाक्याःसूर्यास्तमयकारकमहामेरुक्षयसंभावनाप्रयुक्तसंतोषासंबंधेपितत्संबंधोवर्णितः ॥ ३८ ॥

संबंधेति । अयोगेअसंबंधेयोगकल्पनंसंबंधवर्णनम् । संबंधश्चाभेदभिन्नत्वेसत्यन्य त्वाद्यनिरूपितोग्राह्यः । तेनरूपकातिशयोक्त्यादिप्रभेदेपुनातिव्याप्तिः । सौधेति । सौधो स्त्रीराजसदनमित्यमरः । नन्वत्रैवस्पृशंतीवेंदुमंडलमितीवपदप्रयोगेउत्प्रेक्षाप्रतीतेस्तद प्रयोगेगम्योत्प्रेक्षात्वमुचितं । इवादिसत्वेयावाच्योत्प्रेक्षासैववाद्यभावेगम्योत्प्रेक्षेतिनिय मात् । अन्यथात्वत्कीर्तिर्भ्रमणश्रांतेत्यादिपूर्वोदाहृतपद्येपिगम्योत्प्रेक्षानस्याद्विशेषाभावा दितिचेन्नैवम् । उपदर्शितनियमस्यालंकारांतराविषयएवाभ्युपगमात् । अन्यथानूनंमुखं चंद्रइत्यादौनूनमित्यप्रयोगेगम्योत्प्रेक्षापत्तेः । एवंचप्रकृतेऽसंबंधेसंबंधवर्णनरूपातिशयो

त्त्यलंकारविषयेनगम्योत्प्रेक्षावसरः । त्वत्कीर्तिरित्युदाहरणेतुभ्रमणश्रांतस्वरूपहेत्वंशे गम्योत्प्रेक्षाभिप्रेता नतुस्वर्गगाप्रवेशांशइतिसर्वमवदातं । असंदिग्धमुदाहरणांतरमाह । यथावेति । कतिपयेति । वीररुद्रदेवाख्येनृपेवितरणशालिनिदानशालिनिसतिचक्रवाकीइतिमुदंसंतोषमुपयातिप्राप्नोति । इतिकिम् । कृतंवासरस्यावसानंनाशोयेनसकनकगिरिःसुमेरुःकतिपयैरल्पैर्दिवसैःक्षयंप्रयायादिति । संभावनायांलिङ् ॥ ३८ ॥

योगेप्ययोगोऽसंबंधातिशयोक्तिरितीर्यते ॥ त्वयिदातरिराजेंद्रस्वर्द्रुमान्नाद्रियामहे ॥ ३९ ॥

अत्रस्वर्द्रुमेष्वादरसंबंधेपितदसंबंधोवर्णितइत्यसंबंधातिशयोक्तिः । यथावा ॥ अनयोरनवद्यांगिस्तनयोर्जृंभमाणयोः॥ अवकाशोनपर्याप्तस्तवबाहुलतांतरे ॥ ॥ ३९ ॥

योगेपीति । योगेसत्यप्ययोगवर्णनमित्यर्थः । स्वर्गस्थाद्रुमाःकल्पवृक्षादयः स्वर्द्रुमेष्विितिविषयसप्तमी स्वर्द्रुमविषयेयआदरस्तस्यसंबंधेप्यर्थादर्थिषु यद्वा अर्थिषुस्वर्द्रुमविषयादरसंबंधाभावप्रतीतौतत्समानवित्तिवेद्यतयास्वर्द्रुमेष्वत्यादरविषयत्वाभावावगमाद्यथाश्रुतमेवसाधु । अनयोरिति । अनवद्यानिनिर्दुष्टान्यंगानियस्यास्तथाभूनेइतिसंबोधनं । जृंभमाणयोर्वर्द्धमानयोरनयोःस्तनयोस्तववाहुलतयोरंतरेमध्येपर्याप्तोऽवकाशो नास्तीत्यन्वयः । अत्रबाहुलतयोरंतरेस्तनपर्याप्तावकाशसंबंधेपितदसंबंधउक्तः ॥ ३९॥

अक्रमातिशयोक्तिःस्यात्सहत्वेहेतुकार्ययोः ॥ आलिंगंतिसमंदेवज्यांशराश्चपराश्चते ॥ ४० ॥

अत्रमौर्व्यांयदाशरसंधानंतदानीमेवशात्रवःक्षितौपतंतीतिहेतुकार्ययोःसहत्वंवर्णितं । यथावा ॥ मुंचतिमुंचतिकोशंभजतिचभजतिप्रकंपमरिवर्गः ॥ हंमीरवीरखड्गेत्यजतित्यजतिक्षमामाशु ॥ अत्रखड्गस्यकोशत्यागादिकालएवरिपूणांधनगृहत्यागादिवर्णितः ॥४० ॥

अक्रमेति । क्रमःपौर्वापर्यंतदभावोऽक्रमस्तद्रूपस्यातिशयोक्तिरित्यर्थः । सहत्वेसमकालत्वे आलिंगंतिसमंयुगपज्ज्यांमौर्वीपृथ्वींच पराःशत्रवः । मुंचतीति । हंमीरसंज्ञकस्यवीरस्यखड्गेकोशंपिधानंमुंचतिसतिसरीणांवर्गःसमूहोपिकोशंभांडारंमुंचति । तथाखड्गेप्रकंपमुल्लासनंभजतिसतिसप्रकृष्टंकंपंभजति । एवंखड्गेक्षमांक्षांतिंत्यजतिसति सोपिक्षमांपृथ्वींत्यजतीत्यर्थः । कोशोस्त्रीकुड्मलेखड्गपिधानेऽर्थौघदिव्ययोरित्यमरः अत्रशतृप्रत्ययभंग्यायौगपद्यवर्णनंविशेषः । धनगृहेतिधनसंबंधिगृहेत्यर्थः ॥ ४० ॥

चपलातिशयोक्तिस्तुकार्येहेतुप्रसक्तिजे ॥ या
स्यामीत्युदितेतन्व्यावलयोभवदूर्मिका ॥४१॥

अत्रनायकप्रवासप्रसक्तिमात्रेणयोपितोतिकार्श्यंकार्यमुखेन दर्शितम् । यथावा ॥आदातुंसकृदीक्षितेपिकुसुमेहस्ताग्रमालोहितंलाक्षारंजनवार्तयापिसहसारक्तंतलंपादयोः ॥ अंगानामनुलेपनस्मरणमप्यत्यंतखेदावहंहंताधीरदृशःकिमन्यदलकामोदोपिभारायते॥यामिनयामीतिधवेवदतिपुरस्तात्क्षणेनतन्वंग्याः॥गलितानिपुरोवलयान्यपराणितथैवदलितानि॥४१॥

चपलेति । हेतोःप्रसक्तिर्ज्ञानंतज्जन्येकार्येसतीत्यर्थः । यास्यामीति । उदितेउक्ते प्रियेणेतिशेषः । तन्व्याऊर्मिकाअंगुलीयकंवलयःकंकणमभवदित्यर्थः । ऊर्मिकात्वंगुलीयेस्याद्वस्त्रभंगतरंगयोरितिविश्वः । कार्यमुखेनेति । अंगुलीयकस्यकंकणपदप्राप्तिरूपकार्यवर्णनद्वारेणेत्यर्थः । आदातुमिति । सहजसौकुमार्यवसाविरहदशायांतदतिशयवर्णनमिदम् । हंतेतिखेदे । आदातुंग्रहीतुंसकृदेकवारमपिकुसुमेईक्षितेसत्यधीरदृशोहस्ताग्रमालोहितंभवतीतिशेषः । अपिनाकिमुगृहीतेइतिगम्यते । लाक्षयायद्रंजनंतद्वार्तयापिसहसाअकस्मात्पादयोस्तलंरक्तंभवति किमुरंजनेनेतिपूर्ववत् । एवमंगानांचंदनादिनायदनुलेपनंतत्स्मरणमप्यत्यंतखेदकरं किमुतानुलेपनं किमन्यद्वाच्यमितिशेषः । अलकानामगुरुधूपाद्यामोदोपिभारायते भारइवाचरतीत्यर्थः । कर्तरिक्यङ् । अत्रादानादिरूपहेतुप्रसक्तिमात्रेणहस्ताग्रलौहित्यादिरूपकार्योत्पत्तेःसाक्षादेववर्णनं नतुकार्यमुखेनेतिपूर्वस्माद्भेदः । हेतुकार्ययोरिवहेतुप्रसक्तिकार्ययोरपिसमकालत्वंसंभवतीतिसूचयितुमुदाहरणांतरमाह । यामीति । धवेदयितेयामिनयामीतिवदति सतितत्क्षणेनतत्कालमेवतन्वंग्याःपुरोवलयान्यग्रिमकंकणानिपुरःप्रथमंगलितान्यपराण्यपितथैवतत्कालमेवदलितानिभग्नानीत्यन्वयः। पुरोग्रेप्रथमेचस्यादितिविश्वः । अत्र वदतिगलितानीतिशतृप्रत्ययेनसमकालतावगतिः ॥ ४१ ॥

अत्यंतातिशयोक्तिस्तुपौर्वापर्यव्यतिक्रमे ॥ अ
ग्रेमानोगतःपश्चादनुनीताप्रियेणसा ॥ ४२ ॥

यथावा ॥कवींद्राणामासन्प्रथमतरमेवांगणभुवश्चलद्भृंगासंगाकुलकरिमदामोदमधुराः ॥ अमीपश्चात्तेशामुपरिपतितारुद्रन्‍

पतेःकटाक्षाः क्षीरोदप्रसरदुरुवीचीसहचराः ॥ एतास्तिस्रो
प्यतिशयोक्तयःकार्यशैघ्र्यप्रत्यायनार्थाः ॥ ४२ ॥

अस्त्यंतेति । अत्रहेतुकार्ययोरित्यनुवर्तते तत्पौर्वापर्येतिक्वचित्पाठःसाधुरेव । व्यतिक्रमोऽत्रवैपरीत्यम् । अग्रेप्रथमं अनुनीतासमाहिता । कवींद्राणामिति । कविश्रेष्ठानामंगणसंबंधिन्योभूमयःप्रथमतरमेवप्रथममेवचलतांचपलानांभृंगाणांभ्रमराणामासंगेनाकुलानांकरिणांमदजलस्यामोदेनपरिमलेनमधुरारमणीयाआसन्नभवन्। पश्चादनंतरंतेषांकवीनामुपरिरुद्रसंज्ञकस्यनृपतेरमीदृश्यमानाःकटाक्षाःपतिताः । कीदृशाः क्षीरमुदकंयस्यतथाभूतस्यक्षीरार्णवस्यप्रसरंतीनामुरुवीचीनांवृद्धत्तरंगाणांसहचरास्तत्सदृशाइत्यर्थः । उदकस्योदःसंज्ञायामित्युदादेशः । अत्रयथोक्तकटाक्षरूपकार्यमुखेननृपतिप्रसादरूपहेतुकथनंपूर्वस्माद्विशेषः। एताअव्यवहितोक्ताः। अथोक्तेषुप्रभेदेष्वनुगतप्रवृत्तिनिमित्ताभावात्कथमतिशयोक्तिपदप्रयोगइतिचेदत्राहुः । तावत्प्रभेदान्यतमत्वमेवसर्वानुगतमतिशयोक्तिपदप्रवृत्तिनिमित्तं तदेवचसामान्यलक्षणमिति। नव्यास्तु निगीर्याध्यवसानमेवातियोक्तिः प्रभेदांतरंत्वनुगतरूपाभावादलंकारांतरमेव । नचान्यत्वादिप्रभेदेष्वन्यत्वादिभिरभेदादीनांनिगरणंसंभवतीतिवाच्यम् । अन्यत्वादिभिरभिन्नवस्तुप्रतीतेरेवचमत्कारित्वेनानुभवसिद्धतयान्यत्वादिभिरभेदप्रतीत्संगीकारेऽनुभवासंगतेः । अन्यतमत्वंतुनालंकारविभाजकोपाधितांभजते चमत्काराप्रयोजकत्वादिति वदंति। वस्तुतस्तु रूपकभिन्नत्वेसतिचमत्कृतिजनकाहार्यारोपनिश्चयविषयत्वमेवातिशयोक्तिसामान्यलक्षणं। रूपकवारणायसत्यंतं भ्रांतिवारणायाहार्येति उत्प्रेक्षानिरासायनिश्चयेति। रूपकातिशयोक्तावभेदस्यद्वितीयप्रभेदेऽन्यत्वस्यतृतीयेसंबंधस्यचतुर्थेऽसंबंधस्यपंचमेसहत्वस्यषष्ठेहेतुप्रसक्तिजन्यत्वस्यसप्तमेपूर्वापरत्वयोश्च तथाविधारोपविषयत्वसत्त्वात्सर्वत्रलक्षणसमन्वयः। नचैवंविधारोपस्यरूपकस्वभावोक्तिभिन्नेषुप्रायशःसर्वालंकारेषुसत्त्वादतिप्रसंगइतिवाच्यं। इष्टापत्तेः । अलंकारांतराणांचमत्कारेप्रधानतयातदंगत्वेनावस्थितायाअतिशयोक्तेरप्राधान्येनव्यपदेशानर्हत्वात्। प्राधान्येनव्यपदेशाभवंतीतिन्यायात्। अलंकारांतराणामेवप्रधानत्वेनव्यपदेशार्हत्वात् ।अतएवकाव्यप्रकाशकृताविशेषालंकारप्रसंगेऽभिहितं सर्वत्रैवंविधेविषयेऽतिशयोक्तिरेवप्राणत्वेनावतिष्ठते। तांविनाप्रायेणालंकारत्वाभावात् । अतएवोक्तं 'सैषासर्वत्रवक्रोक्तिरनयार्थोविभाव्यते ॥ यत्नोऽस्यांकविभिःकार्यःकोलंकारोनयाविना'इति ॥ दंडिनाप्युक्तं 'अलंकारांतराणामप्येकमाहुःपरायणम् ॥ वागीशसहितामुक्तिमिमामतिशयाव्हयामिति' ॥४२॥
इतिश्रीमत्तत्सदुपाख्यवैद्यनाथकृतायामलंकारचंद्रिकायांश्रीमद्रंगराजाध्वरींद्रसूनुश्रीमदप्पयदीक्षितकृतकुवलयानंदटीकायामतिशयोक्तिप्रकरणंसंपूर्णम् ॥ ॥ ॥ ॥

वर्ण्यानामितरेषांवाधर्मैक्यंतुल्ययोगिता ॥ संकुचंतिसरोजानिस्वैरिणीवदनानिच ॥ ४३ ॥ त्वदंगमार्दवेदृष्टेकस्यचित्तेनभासते ॥ मालतीशशभृल्लेखाकदलीनांकठोरता ॥ ४४ ॥

प्रस्तुतानामप्रस्तुतानांवागुणक्रियारूपैकधर्मान्वयस्तुल्ययोगिता। संकुचंतीतिप्रस्तुततुल्ययोगितायाउदाहरणं। तत्रप्रस्तुतचंद्रोदयकार्य्यतयावर्णनीयानांसरोजानांप्रकाशभीरुस्वैरिणीवदनानांचसंकोचरूपैकक्रियान्वयोदर्शितः। उत्तरश्लोकेनायिकासौकुमार्य्यवर्णनेप्रस्तुतेऽप्रस्तुतानांमालत्यादीनांकठोरतारूपैकगुणान्वयः। यथावा ॥ संजातपत्रप्रकरान्वितानिसमुद्वहंतिस्फुटपाटलत्वं॥ विकस्वराण्यर्ककराभिमर्शाद्दिनानिपद्मानिचवृद्धिमीयुः॥ नागेंद्रहस्तास्त्वचिकर्कशत्वादेकांतशैत्यात्कदलीविशेषाः ॥ लब्ध्वापिलोकपरिणाहिरूपंजातस्तदूर्वोरुपमानबाह्याः ॥ अत्रग्रीष्मवर्णनेतदीयत्वेनप्रस्तुतानांदिनानांपद्मानांचैकक्रियान्वयः। ऊरुवर्णनेऽप्रस्तुतानांकरिकराणांकदलीविशेषाणांचैकगुणान्वयः ॥ ४३ ॥ ४४ ॥

तुल्ययोगितांलक्षयति ॥ वर्ण्यानामिति। वर्ण्यत्वेनप्रस्तुतानामित्यर्थः। इतरेषांप्रस्तुतानाम्। एतच्चोभयमपिसावधारणं। वर्ण्यानामेवेतरेषामेववेत्यर्थः। बहुवचनमनेकार्थकम्। द्वयोर्धर्मैक्यस्यापिसंग्राह्यत्वात्। धर्मैक्यंधर्मस्यऐक्यमेकत्वं एकोधर्मइतियावत्। सचचमत्कारकारीबोध्यः। एवंचानेकप्रस्तुतमात्रसंबद्धैकचमत्कारिधर्मानेकाप्रस्तुतमात्रसंबद्धैकधर्मान्यतरत्वंलक्षणंबोध्यम्। मुखंविकसितस्मितमित्यादावतिप्रसंगवारणायानेकेति। अत्रचमुखप्रेक्षितादिरूपानेकवर्ण्यसंबंधोनैकोधर्मइतितन्निरासः। दीपकवारणायमात्रेति। प्रस्तुताप्रस्तुतप्रभेदसाधारण्यायान्यतरत्वनिवेशः। त्वदंगेति। प्रियांप्रतिदयितोक्तिः। तवांगस्यमार्दवेसौकुमार्येदृष्टेसतिकस्यचित्तेमालत्यादीनांकठोरतानभासतेअपितुसर्वस्यैवेत्यर्थः। शशंबिभर्तीतिशशभृच्चंद्रस्तस्यलेखाकला। गुणक्रियारूपेति। एतच्चतथाविधधर्मस्यप्रायशोगुणक्रियारूपत्वमित्यभिप्रेत्योक्तं नतुलक्षणे तेनरूपेणधर्मस्यनिवेशः। गौरवात्प्रयोजनाभावाच्च। यत्तुकैश्चिदेतद्ग्रंथदूषणलालसैर्धर्मस्यगुणक्रियारूपत्वेनलक्षणेनिवेशइत्याशयमारोप्याभिहितं। तदेतदापाततः ' शासतित्वयिहेराजन्नखंडावनिमंडलं ॥ नमनागपिनिश्चिंतेमंडलेशत्रुमि

त्रयोः ' इत्यत्राभावरूपधर्मस्यैवान्वयादितितदिदमापाततोपिनमनोरमम् । तथाहि । शासतीतित्वदुदाहृतपद्येनिश्चितेनेतिनिश्चितभेदःशत्रुमित्रमंडलधर्मतयोपात्तः सचगुण स्वरूपएव । चिंताभाववद्भेदस्यचिंतानातिरिक्तत्वात् । अन्यथाचिंताभावाभावस्या प्यतिरिक्तत्वापत्तेः । अथतत्रापिवैपरीत्यादिष्टापत्तिमालंबसे भवत्वेवंतुष्यतुभवान् एवम प्यभावस्यकथंगुणवद्भिर्भावः । जातिक्रियाद्रव्यातिरिक्तस्यैवचतुष्टयीशब्दानांप्रवृत्ति रितिवदद्भिर्वैयाकरणैस्तदनुसारिभिश्चालंकारिकैर्गुणत्वांगीकारात् । अतएवजातिगु णयोर्विरोधेप्रकाशकृद्भिरुदाहृतं गिरयोप्यनुन्नतियुजइति।तथाविद्यानाथेनापि अमदः सार्वभौमोपीति । वस्तुतस्तुलक्षणेनतेनरूपेणधर्मस्यनिवेशोऽभिप्रेतइत्यावेदितमतोनका प्यनुपपत्तिरिति । स्वैरिणीस्वेनईरितुंशीलमस्यास्तादृशीव्यभिचारिणीतियावत् । स्वादीरेरिणोरितिवृद्धिः । स्वैरिणीपांसुलाचस्यादित्यमरः । संजातेति । दिनानिपद्मा निचवृद्धिमीयुःप्रापुः । कीदृशानि संजातैःपत्राणांप्रकरैःसमूहैरन्वितानि । पूर्वेप त्राणांवसंतेनविगलनात् । तथास्फुटाविकासिताःपाटलावृक्षविशेषायेषुतानितेषांभा वस्तत्वं । समुद्वहंतीतिशत्रंतं । दधानानीत्यर्थः । पद्मपक्षेतु स्फुटानिविकासितानिच तानिपाटलानिपाटलवर्णानितेषांभावस्तत्त्वमित्यादिपूर्ववत् । एवमर्कस्यकरैःकिरणैर भिमर्शनाद्विकस्वराणिभास्वराणिदिनानि। पद्मानितुविकासशालीनि।नागेंद्रेति।नागेंद्रा णांगजश्रेष्ठानांहस्ताःशुण्डाःकदलीविशेषाश्च परिणाहोविशालता तच्छालिरूपंस्वरू पंलब्ध्वापियथाक्रमंत्वचिकर्कशत्वात्कठोरत्वादेकांतेननियमेनशैत्याच्चहेतोर्लोकेतस्याःपा र्वत्याऊर्वोरुपमानाद्बाह्याउपमानत्वरहिताजाताइत्यन्वयः । तदीयत्वेनेति तत्कालिकत्वे नेत्यर्थः । ग्रीष्मकालिकवस्तुवर्णनस्यैवग्रीष्मवर्णनरूपत्वादितिभावः । एकक्रियेतिवृ द्धिप्राप्तिरूपकक्रियान्वयइत्यर्थः । एकगुणेतिउपमानत्वाद्यत्वरूपैकगुणेत्यर्थः ॥४३॥४४

हिताहितेवृत्तितौल्यमपरातुल्ययोगिता ॥ प्रदी
यतेपराभूतिर्मित्रशात्रवयोस्त्वया ॥ ४५ ॥

अत्राहिताहितयोर्मित्रशात्रवयोरुत्कृष्टभूतिदानस्यपराभवदान स्यचश्लेषेणाभेदाध्यवसायाद्वृत्तितौल्यं । यथावा ॥ यश्चनिंबंपरशु नायश्चैनंमधुसर्पिषा ॥ यश्चैनंगंधमाल्याद्यैःसर्वस्यकटुरेवसः ॥ अत्रवृश्चतिसिंचत्यर्चतिइत्याध्याहारेणवाक्यानिपूरणीयानि । पूर्वोदाहरणंस्तुतिपर्यवसायि इदंतुनिंदापर्यवसायीतिभेदः । इ यंसरस्वतीकंठाभरणोक्तातुल्ययोगिता ॥ ४५ ॥

हिताहितेइति । हिताहितविषयेइत्यर्थः । वृत्तितौल्यमिति । वृत्तिर्वर्तनंव्यवहर

णमितियावत्तस्यतौल्यंसाम्यं। अपरापूर्वोक्तविलक्षणा। मदीयतइति। पराउत्कृष्टा भूतिःसंपत्तिरेवपराभूतिःपराभवः। शत्रूणांसमूहःशात्रवम्। तस्यसमूहइत्यण्। पराभवदानस्येति। शत्रुसंबंधिपराभवसंपादनस्येत्यर्थः। पराभवस्यमुख्यदानासंभवात्। अतएवसंप्रदानत्वासंभवान्मित्रशात्रवयोरितिसंबंधसामान्येषष्ठी। श्लेषेणपराभूतिपदश्लेषेण। यथावेति। अत्रचशब्दाअप्यर्थाविरोधद्योतकाः। अत्रेति। योपिनिंबंपरशुनाछिनत्ति योप्येनंमधुयुक्तेनसर्पिषाआज्येनासिंचति योप्येनंगंधमाल्याद्यैरर्चति इतिक्रमेणेत्यर्थः। उक्तप्रकारस्यतुल्ययोगितापदवाच्यत्वेवृद्धसंमतिंदर्शयति इयमिति। तथचावृद्धव्यवहारान्नानार्थस्तुल्ययोगिताशब्दइतिभावः। अत्रकेचिदाहुः। नेयंतुल्ययोगितापूर्वोक्ततुल्ययोगितातोभेदमर्हति। वर्ण्यानामितरेषांवेत्यादिपूर्वोक्तलक्षणक्रांतत्वात्। एकानुपूर्वीबोधितवस्तुकर्मकदानमात्रत्वस्यपरंपरयाताद्दशशब्दस्यवाधर्मस्यैक्यात्। यश्चनिंबमित्यत्रापिकटुत्वविशिष्टनिंबस्यैवपरंपरयाछेदकसेचकपूजकधर्मत्वसंभवादिति तदेतत्पेशलम्। तथाहि। यत्रानेकान्वयित्वेनज्ञातोधर्मस्तेषामौपम्यगमकत्वेनचमत्कृतिजनकस्तत्रपूर्वोक्तप्रकारः। यत्रतुहिताहितोभयविषयकशुभाशुभरूपैकव्यवहारस्यव्यवहर्तृगतस्तुतिनिंदान्यतरद्योतकतयाचमत्कृतिजनकत्वंतत्रापरइतिभेदात्। नह्यत्रपराभूतिशब्दस्यतदर्थकर्मदानस्यवापरंपरयाशत्रुमित्रगतत्वेनभानं अपितु श्लेषबलादेकत्वेनाध्यवसितस्यताद्दशदानस्यराजगतत्वेनैवेतिकथंपूर्वोक्तलक्षणाक्रांतत्वम्। एतेनयश्चनिंबमित्यत्रकटुत्वविशिष्टनिंबस्यैवपरंपरयाछेदकसेचकपूजकधर्मत्वमितिनिरस्तम्। वस्तुगत्यातद्धर्मत्वस्यालंकारतासंपादकत्वाभावात्। अन्यथासंकुचंतिसरोजानीत्येतावतैवतुल्ययोगितालंकारापत्तेः। किंत्वनेकगतत्वेनज्ञायमानधर्मत्वस्यैवतुल्ययोगिताप्रयोजकत्वमितितदभावेतदंतर्गतिकथनमसमंजसमेव। अथाप्युक्तोदाहरणयोस्तथाभानमस्तीत्याग्रहस्तथापिनपूर्वोक्तलक्षणस्यात्रसंभवः। 'धर्मोर्थइवपूर्णश्रीस्त्वयिराजन्विराजते' इतिप्रकृतयोरुपमायामतिव्याप्तिवारणार्थमनेकानुगतधर्मत्वपर्याप्तविषयितासंबंधावच्छिन्नावच्छेदकताकचमत्कृतिजनकताश्रयज्ञानविषयधर्मत्वमितिविवक्षायास्तत्रावश्यकत्वात् प्रकृतेचहितत्वाहितत्वादेर्विषयस्याधिकस्यानुप्रवेशादितिविभावनीयम्॥ ४५॥

गुणोत्कृष्टैःसमीकृत्यवचोन्यातुल्ययोगिता॥ लोकपालोयमःपाशीश्रीदःशक्रोभवानपि॥ ४६॥

अत्रवर्णनीयोराजाशक्रादिभिर्लोकपालत्वेनसमीकृतः। यथावा॥संगतानिमृगाक्षीणांतडिद्विलसितान्यपि॥क्षणद्वयंनतिष्ठंतिघनारब्धान्यपिस्वयम्॥ पूर्वत्रस्तुतिरिहतुनिंदा इयं

काव्यादर्शेदर्शिता। इमांतुल्ययोगितांसिद्धिरितिकेचिद्व्यवज
न्हुः। यदाहजयदेवः 'सिद्धिःख्यातेषुचेन्नामकीर्त्यतेतुल्यतो
क्तये॥ युवामेवेहविख्यातौत्वंबलैर्जलधिर्जलैः' इति। मतां
तरेष्वत्रवक्ष्यमाणंदीपकमेव॥ ४६॥

गुणोत्कृष्टैरिति। गुणैरुत्कृष्टाःश्रेष्ठास्तैरित्यर्थः। समीकृत्यसाम्यंविवक्षित्वा वचइति वचनंवचःप्रतिपादनमितियावत् अर्थात्तत्साधारणधर्मस्य। अन्येतिधर्मस्यवर्ण्यावर्ण्यगतत्वादुक्तविलक्षणेत्यर्थः।पाशोऽस्यास्तीतिपाशीवरुणः प्रचेतावरुणःपाशीत्यमरः श्रीदः कुबेरः शक्रइंद्रः लोकपालपदंचेंद्रादिपुरूढं।राज्ञितुयोगमात्रेणप्रयुक्तं।संगतानीतिसंगतानिसंगमाः तडितांविद्युतांविलसितानि घनंनिविडंयथास्यात्तथाआरब्धानीति संगमपक्षे घनैर्मेघैरारब्धानीतिचतडिद्विलसितपक्षेर्थः काव्यादर्शेएतन्नामकदंडिकृतग्रंथेदर्शितातुल्ययोगितापदवाच्यत्वेननिर्दिष्टा।केचिदालंकारिकाव्यवजन्हुर्व्यवहृतवंतः।ख्यातेषुगुणत्वेनप्रसिद्धेषु।युवामेवेति।इहभूलोके बलैःसैन्यैःअत्रचसैन्यजलयोःप्रसरणशीलत्वादिसादृश्याद्बिंबप्रतिबिंबभावेनाभेदमाश्रित्यधर्मैक्यंबोध्यं। मतांतरेष्वितिबहुवचनेनबन्हसंमततयादंड्युक्ततुल्ययोगितायामस्वरसोध्वन्यते। सचदीपकतुल्ययोगितयोर्भेदकथनावसरेव्यक्तीभविष्यतीतिसंक्षेपः॥ ४६॥ इतिश्रीमत्तत्सदुपाख्यवैद्यनाथकृतायामलंकारचंद्रिकाख्यायांकुवलयानंदटीकायांतुल्ययोगिताप्रकरणं॥ ४६॥

वदंतिवर्ण्यावर्ण्यानांधर्मैक्यंदीपकंबुधाः॥ म
देनभातिकलभःप्रतापेनमहीपतिः॥ ४७॥

प्रस्तुताप्रस्तुतानामेकधर्मान्वयोदीपकम्। यथाकलभमहीपालयोःप्रस्तुताप्रस्तुयोर्भानक्रियान्वयः। यथावा॥ मणिःशाणोल्लीढःसमरविजयीहेतिदलितोमदक्षीणोनागःशरदिसरितःश्यानपुलिनाः॥ कलाशेषश्चंद्रःसुरतमृदिताबालवनितातनिम्नाशोभंतेगलितविभवाश्चार्थिषुनृपाः॥ अत्रप्रस्तुतानांनृपाणामप्रस्तुतानांमण्यादीनांचशोभैकधर्मान्वयः। प्रस्तुतैकनिष्ठःसमानोधर्मःप्रसंगादन्यत्रोपकरोति प्रासादार्थमारोपितोदीपइवरथ्यायामितिदीपसाम्याद्दीपकं। संज्ञायांचेतिइवार्थेकन्प्रत्ययः। यद्यपि 'सुवर्णपुष्पांपृथिवींचिन्वंतिपुरुषास्त्रयः। शूरश्चकृतविद्यश्चयश्चजानातिसेवितुं' इत्यत्रप्रस्तुतानामतु

प्रस्तुतानांयुगपद्धर्मोन्वयस्तथापिप्रासंगिकत्वंनहीयते । वस्तु गत्याप्रस्तुतोद्देशेनप्रस्तुतस्यैववर्णनस्याप्रस्तुतेऽन्वयात् । न हिदीपस्यरथ्याप्रासादयोर्युगपदुपकारत्वेनजामात्रर्थंश्रपित स्यसूपस्यातिथिभ्यःप्रथमपरिवेषणेनचप्रासंगिकत्वंहीयते । तुल्ययोगितायांत्वेकंप्रस्तुतमन्यदप्रस्तुतमितिविशेषाग्रहणा त्सर्वोद्देशेनैवधर्मोन्वयइतिविशेषः । अयंचानयोरपरोविशे षः । उभयोरनयोरुपमालंकारस्यगम्यत्वाविशेषेप्यत्राप्रस्तु तमुपमानंप्रस्तुतमुपमेयमितिव्यवस्थितउपमानोपमेयभाव स्तत्रतुविशेषाग्रहणादैच्छिकःसइति ॥ ४७ ॥

दीपकंलक्षयति॥वदंतीति।वर्ण्यावर्ण्यान्वितैकचमत्कारिधर्मोदीपकमित्यर्थः। उपमादिवारणायात्रापिपूर्ववल्लक्षणपरिष्कारोबोध्यः। कलभःकरिशावकः। भानक्रियेतिक्रियारूपैकधर्मान्वयइत्यर्थः । अत्रापिक्रियाविशेषणीभूतयोर्मदप्रतापयोर्विंबप्रतिबिंबभावोबोध्यः। यथावेति। शाणेननिकषपाषाणेनोल्लीढउल्लिखितोमणिः तथाहेतिभिरायुधैर्निहतःकृतक्षतःसमरेसंग्रामेविजयशीलोयोद्धा मदेनक्षीणोनागोहस्ती शरत्कालेश्यानानिशुष्काणिपुलिनानिजलनिर्मुक्ततटानियासांताःसरितोनद्यः कलामात्रावशिष्टश्चंद्रः सुरतेमृदिताचुंबनालिंगनाद्युपमर्दम्लायितांगीबालानवयौवनावनितास्त्री एवमर्थिषुयाचकेषुगलितःसंक्रांतोविभवःसमृद्धिर्येषांतेनृपाश्च तनिम्नातनोःकृशस्यभावस्तनिमाकार्श्यंतेनशोभंतइत्यन्वयः।शाणस्तुनिकषःकषइसमरः।शोभैकेति।शोभारूपैकधर्मेत्यर्थः। पूर्वोदाहरणेआदिदीपकमिहत्वंतदीपकमितिभेदः।प्रस्तुताप्रस्तुतसाधारणधर्मस्यदीपकपदवाच्यतायांबीजमाह।प्रस्तुतैकेत्यादि।प्रस्तुतैकनिष्ठःप्रस्तुतैकपरःप्रस्तुतान्वयविवक्षयाभिहितइतियावत्।रथ्यायामिवेत्यनंतरमुपकरोतीत्यनुपज्यते। इतीतिचाध्याहार्यं। इतिदीपकसादृश्यात्समानोधर्मोदीपकमुच्यतइतिशेषः। यत्रधर्मस्यपूर्वंप्रस्तुतेन्वयः पश्चादन्यत्र यथोक्तोदाहरणयोस्तत्रैवेतरत्रप्रसंगोपकारित्वमित्याशयेनशंकते।यद्यपीति।सुवर्णेति सुवर्णमेवपुष्पंयस्याइतिविग्रहः। त्रयोगुणत्रयान्यतमयुक्ताःशूरश्चेत्यादिप्रत्येकंचकारोनैरपेक्ष्यद्योतकः । कृतविद्यःप्रख्यातविद्यः एतच्चप्रासंगिकंपद्यंयदायत्प्रसंगेपठ्यतेतदातस्यप्रस्तुतत्वमितरयोस्त्वप्रस्तुतत्वमितिबोध्यं।युगपदिति त्रयश्चिन्वंतीतित्रिष्वपियुगपदन्वयइत्यर्थः। चिन्वंतीतिबहुवचनांतस्यप्रस्तुतमात्रेणैकवचनांतेनपूर्वमन्वयायोगादितिभावः। समाधत्तेतथापीति।प्रासंगिकत्वंप्रसंगोपकारित्वं।नहीयतइति।तथाचधर्मस्यपश्चादन्वयोनतत्रप्रयोजकइतिभावः किंतर्हिप्रयोजकंतत्राहवस्तुगत्येति। प्रस्तुतोद्देशेनप्रस्तुतोद्देश्यका

न्वयबोधेच्छयाप्रस्तुतस्यैवपदाभिहितस्यैववर्णनस्यकर्मव्युत्पत्त्यातद्विषयधर्मस्य तथाच चमत्कारायप्रस्तुताप्रस्तुतान्वितस्वार्थम्बोधयत्विच्छयोच्चरितपदाभिहितधर्मस्योभय त्रान्वयेप्युद्देशाख्येच्छाविषयताप्रस्तुतएवनत्वप्रस्तुते किंतुविशेषणताख्यविषयतैवेतित थाविधोद्देश्यताविरहएवप्रासंगिकत्वेबीजमित्याशयः।एतदेवोपपादयतिनहीति।प्रासंगि कत्वमितिदीपस्रूपयोरथ्यातिथिविषयेप्रसंगोपकारित्वमित्यर्थः। तथाचत्वन्मतेतस्यप्रासं गिकत्वंनस्यादितिभावः।इदमुपलक्षणं।जामातृविषयेप्रासंगिकत्वापत्तिरपिबोध्या।एत देवतुल्ययोगितातोभेदकमित्याहतुल्ययोगितायांत्विति।ननूद्देश्यत्वानुद्देश्यत्वयोश्चमत्का राप्रयोजकत्वान्नालंकारभेदप्रयोजकत्वंयुक्तमित्यस्वरसादाह अयंचेति। अयंवक्ष्यमाणः अनयोर्दीपकतुल्ययोगितयोः अत्रदीपकेउपमानोपमेयभावइत्यनंतरंगम्यइतिशेषः। तत्र तुल्ययोगितायां विशेषाग्रहणात्प्रस्तुताप्रस्तुतस्वरूपव्यवस्थापकाभावात्। ऐच्छिकोऽ व्यवस्थितः सउपमानोपमेयभावः। नव्यास्तुनैतावतापितुल्ययोगिताऽतोदीपकस्य पृथक्भावउचितः। धर्मस्यसकृद्वृत्तित्वमूलायाविच्छित्तेरविशेषात्।अन्यथातुल्ययोगि तायामपिधर्मिणंकेवलप्रकृतत्वस्यकेवलाप्रकृतत्वस्यचविशेषस्यसत्वादलंकारद्वैतापत्तेः। तस्मात्तुल्ययोगितायाएवत्रैविध्यमुचितमित्याहुः ॥ ४७ ॥ इतिश्री०वैद्यनाथकृतालं कारचंद्रिकायांकु०टी०दीपकप्रकरणम् ॥

त्रिविधंदीपकावृत्तौभवेदावृत्तिदीपकं ॥ वर्षत्यं
बुदमालेयंवर्षत्येषाचशर्वरी ॥ ४८ ॥ उन्मी
लंतिकदंबानिस्फुटंतिकुटजोद्गमाः ॥ माद्यंति
चातकास्तृप्तामाद्यंतिचशिखावलाः ॥ ४९ ॥

दीपकस्यानेकोपकारार्थतयादीपस्थानीयस्यपदस्यार्थस्योभ योर्वाऽऽवृत्तौत्रिविधमावृत्तिदीपकं। क्रमेणार्धत्रयेणोदाहरणा निदर्शितानि।यथावा॥ उत्कंठयतिमेघानांमालावर्गंकलापि नां॥यूनांचोत्कंठयत्यद्यमानसंमकरध्वजः॥ शमयतिजलधर धाराचातकयूनांतृषंचिरोपनतां ॥ क्षपयतिचवधूलोचनजल धाराकामिनांप्रवासरुचिं॥वदनेनानिर्जितंतवनिलीयतेचंद्रबिं बमंबुधरे ॥ अरविंदमपिचसुंदरिनिलीयतेपाथसांपूरे॥ एवंचा वृत्तीनांप्रस्तुताप्रस्तुतोभयविषयत्वाभावेपिदीपकच्छायापत्ति मात्रेणदीपकव्यपदेशः ॥ ४८ ॥ ४९ ॥

त्रिविधमिति। दीपकस्यावृत्तावावृत्तिदीपकंभवेतच्चत्रिविधमित्यर्थः। वर्षतीति। शा र्वरीरात्रिःवर्षवत्सरइवाचरतीत्यर्थः। कदंबानिकदंबकुसुमानिउन्मीलंतिविकसंति कुटजोद्गमाःकुटजकलिकाःस्फुटंतिविकसंति दृप्ताश्चातकामाद्यंतिमत्ताभवंति शिखावलामयूराश्चमाद्यंतीत्यन्वयः। त्रैविध्यमुपपादयन्नेवव्याचष्टे दीपकस्येति। क्रमेणेति। आद्येर्द्धेवर्षतीतिशब्दावृत्तिः। अलंकारसंपादकत्वाचनकथितपदत्वंदोषः। द्वितीयेविकासरूपस्यार्थस्यावृत्तिः। उन्मीलंतिस्फुटंतीतिशब्दभेदेनतस्यैवबोधनात्। तृतीयेतुद्वयोरावृत्तिः स्फुटैवेति। उत्कंठयंतीति। मेघानांमालापंक्तिः कलापिनांमयूराणांवर्गंसमूहं उत्कंठयत्यूर्ध्वंकंठोयस्यताद्दशंकरोति। तथामकरध्वजःकामोयूनांतरुणानांमानसमुत्कंठयत्युत्सुकंकरोतीत्यर्थभेदेपिशब्दावृत्तिः। शमयतीति। जलधरस्यमेघस्यधारापंक्तिश्चातकतरुणानांचिरकालमुपनतांप्राप्तांतृषंपिपासांशमयतिवधूलोचनयोर्जलधाराअश्रुपंक्तिश्चकामिनांप्रवासेच्छांक्षपयतीत्येकएवनाशरूपोर्थःशब्दभेदेनोक्तइत्यर्थावृत्तिः। वदनेनेति। पाथसांजलानां। अत्रनिलीयतेशब्दस्यतदर्थस्यतिरोधानस्यचावृत्तिः ननुप्रस्तुतार्थंसकृदुपात्तस्यप्रसंगादप्रस्तुतोपकारित्वेदीपकमित्युक्तं नचावृत्तौतत्संभवतीतिकथमावृत्तिदीपकमुक्तमित्याशंक्याह एवंचेति। दीपस्थानीयशब्दार्थयोरावृत्तौचेत्यर्थः। प्रस्तुताप्रस्तुतेति। अंबुदमालादीनांविरहेदीपकतयाकेवलप्रस्तुतत्वाचंद्रबिंबारविंदयोश्चकेवलाप्रस्तुतत्वादितिभावः। दीपकच्छायेति दीपकसाद्दश्येत्यर्थः तच्चप्रस्तुताप्रस्तुतोपकारयोग्यत्वंवर्षतीत्यादौश्लेषवशेनास्तीतिभावः। मात्रपदेनदीपकात्पृथगेवायमलंकारोननुतत्प्रभेदइतिसूचितं। अतएवदंडिना'अर्थावृत्तिःपदावृत्तिरुभयावृत्तिरित्यपि॥ दीपकस्थानमेवेष्टमलंकारत्रयंयथा'इत्युक्तविकासंतीत्याद्युदाहृतं। दीपकस्थानंस्थानापन्नंसदृशमितियावत्॥ ४८॥ ४९॥ इत्यलंकारचंद्रिकायांआवृत्तिदीपकप्रकरणम्॥ ॥

वाक्ययोरेकसामान्येप्रतिवस्तूपमामता॥ ता
पेनभ्राजतेसूर्यः शूरश्चापेनराजते॥ ५०॥

यत्रोपमानोपमेयवाक्ययोरेकःसमानोधर्म्मःपृथङ्निर्दिश्यते साप्रतिवस्तूपमा। प्रतिवस्तुप्रतिवाक्यार्थमुपमासमानधर्मो स्यामितिव्युत्पत्तेः। यथात्रैवभ्राजतेराजतइत्येकएवधर्मउपमानोपमेयवाक्ययोःपृथग्भिन्नपदाभ्यांनिर्दिष्टः। यथावा॥ स्थिराशैलीगुणवतांखलबुद्ध्यानबाध्यते॥ रत्नदीपस्यहिशिखावात्ययापिननाश्यते॥ यथावा॥ तवामृतस्यंदिनिपादपंकजेनिवेशितात्माकथमन्यदिच्छति॥ स्थितेऽरविंदेमकरंदनि

भंरेमधुव्रतोनेक्षुरसंसमीक्षते ॥ अत्रयद्यपिउपमेयवाक्येअनिच्छा उपमानवाक्येअवीक्षेतिधर्मभेदःप्रतिभाति तथापिवीक्षणमात्रस्यावर्जनीयस्यप्रतिषेधानर्हत्वात् इच्छापूर्वकवीक्षाप्रतिषेधोयमनिच्छापर्यवसितएवेतिधर्मैक्यमनुसंधेयं ।अर्थावृत्तिदीपकंप्रस्तुतानामप्रस्तुतानांवा प्रतिवस्तूपमातु प्रस्तुताप्रस्तुतानामितिविशेषः । आवृत्तिदीपकंवैधर्म्येणनसंभवति प्रतिवस्तूपमातुवैधर्म्येणदृश्यते। यथा॥विद्वानेवहिजानातिविद्वज्जनपरिश्रमं ॥ नहिवंध्याविजानातिगुर्वींप्रसववेदनाम् ॥ यदिसंतिगुणाःपुंसांविकसंत्येवतेस्वयं । नहिकस्तूरिकामोदः शपथेनविभाव्यते ॥ ॥ ५० ॥

सकृद्धर्मोक्तिप्रसंगादसकृतद्धर्मोक्तिगम्यवाक्यार्थसादृश्यकंप्रतिवस्तूपमालंकारंलक्षयति । वाक्ययोरिति । द्विवचनमेकाभिप्रायंमालानुरोधादितिवोध्यं । एकसामान्येएकस्मिन्समानधर्मेसति । सूरःसूर्यः । लक्षणंव्याचष्टे । यत्रेति । उपमानोपमेयेति भावप्रधानं । उपमानोपमेयभावपन्नयोरित्यर्थः । पृथगिति भिन्नशब्देनेत्यर्थः । अयमेवचवस्तुप्रतिवस्तुभावइत्युच्यते । स्थिरेति । शैलीसद्वृत्तं । रत्नमेवदीपोरत्नदीपः । अत्रपूर्वार्द्धमुपमेयवाक्यमुत्तरार्धमुपमानवाक्यम् । उभयत्रचनाशाभावरूपःसमानधर्मःशब्दभेदेनोपात्तः । सामान्याभावमात्रवोधकस्यापिबाधतेरत्रनाशरूपविशेषपरत्वात् । अयमेवचपूर्वोदाहरणाद्भेदः । तवेति । ईश्वरंप्रतिभक्तस्योक्तिः । अमृतप्रस्रवणशीले तवपादपंकजेनिवेशितआत्मांतःकरणंयेनतादृशोभक्तोऽन्यदमृतातिरिक्तंफलंकथमिच्छति नकथमपीत्यर्थः । अमृतंचात्रब्रह्मानंदरूपं हिनिश्चितं । मधुव्रतोभ्रमरोमकरंदेनरसेननिर्भरेव्याप्तेऽरविंदेस्थितेसतिइक्षुरसंनवीक्षतइत्युपमानवाक्यं । अवर्जनीयस्येति । अनिष्टेपिस्वसामग्रीवशाज्जायमानस्येत्यर्थः । इच्छापूर्वकेति । तथाचवीक्षतेरिच्छापूर्वकवीक्षणेलक्षणेतिभावः । अनिच्छापर्यवसितइति । सविशेषणेहीतिन्यायादितिभावः । उन्मीलंतिकदंवानीतिपूर्वोदाहृतायामर्थावृत्तावतिव्याप्तिमाशंक्याह । अर्थावृत्तिरित्यादि । शब्दावृत्तौतुधर्मस्यैकेनैवशब्देनावृत्त्यावोधनान्नभिन्नशब्दवोध्यत्वमितिनातिव्याप्तिरतोर्थावृत्तिपर्यंतानुधावनं । एवंचभिन्नशब्दवोध्यैकधर्मगम्यंप्रस्तुताप्रस्तुतवाक्यार्थसादृश्यंप्रतिवस्तूपमेतिलक्षणंवोध्यं । दृष्टांतालंकारेतिव्याप्तिवारणायभिन्नशब्दवोध्येति । तत्रतु विंवप्रतिविंवभावापन्नधर्मगम्यंसादृश्यमितिनातिव्याप्तिः । 'दिविभातियथाभानुस्तथात्वंभ्राजसेभुवि' इत्यादिवाक्यार्थोपमायामतिव्याप्तिवारणायगम्यमिति ।

अर्थान्तरवृत्तिवारणायप्रस्तुताप्रस्तुतेति।'आननंमृगशावाक्ष्यावीक्ष्यलोलालकावृतं। भ्रमद्भ्रमरसंकीर्णंस्मरामिसरसीरुहं' इतिस्मरणालंकारेतिव्याप्तिवारणायवाक्यार्थेति। अत्रहि दिविभातीतिवाक्यार्थोपमायांगगनाधिकरणशोभाश्रयभानुसदृशोभूम्यधिकरणकशोभाश्रयस्त्वमितिप्रतीतिवन्नस्मर्यमाणतादृशसरोरुहसदृशंतथाविधमाननमितिप्रतीतिर्येनवाक्यार्थगतोपमागम्यास्यात्। किंतु स्मरणासंपृक्तातादृशसरोरुहसदृशंतादृशमाननमितिपदार्थगतोपमैवेतितद्वारणमितिदिक्। प्रस्तुताप्रस्तुतत्वयोश्चमत्कृतिविशेषाप्रयोजकतयानालंकारभेदप्रयोजकत्वमितिस्वरसादाह अयंचेति। वक्ष्यमाणइत्यर्थः। विद्वानेवेति। यद्यप्यन्ययोगव्यवच्छेदार्थेनैवकारेणाविद्वान्नजानातीतिपूर्ववाक्यार्थस्तस्यचनहिवंध्येत्युत्तरवाक्यार्थःसधर्मैव तथापिरूपवसेवाकाशइत्यादिप्रयोगवारणायभावान्वयस्याप्यावश्यकतयाविद्वान्जानातीतिवाक्यार्थस्याऽपिप्रतीतेस्तदभिप्रायेणवैधर्म्योदाहरणत्वंबोध्यं।ननु वैधर्म्येणोपमेतिव्याहतंतस्याःसाधर्म्यरूपत्वादितिचेत्सत्यम्।वैधर्म्येणोपन्यस्तेननहिवंध्येतिवाक्यार्थेनाक्षिप्तस्यापितुप्रसवित्र्येवजानातीतिवाक्यार्थस्योपमानत्वेनविवक्षणान्मुखतोवैधर्म्यप्रतीतावपिसाधर्म्यएवपर्यवसानान्नदोषः।वैधर्म्येणेसस्यचवैधर्म्यद्वारइत्यर्थः। यदिसंतीति। एवकाराभिन्नक्रमः। स्वयमेवविकसंतिप्रकाशंतइत्यर्थः। अत्रापिगुणाःस्वयंप्रकाशंतइतिभावान्वयविधर्मकस्तूरिकामोदःशपथेननज्ञायतइतिवाक्यार्थस्तदाक्षिप्तेन किंतु स्वयमेवप्रकाशतइतिवाक्यार्थेनचौपम्यंगम्यमितिपूर्ववद्वैधर्म्योदाहरणत्वसंगतिः। यत्त्वत्रकैश्चिदुक्तं विद्वानेवेतिपद्यं भवतुनामकथंचिद्वैधर्म्योदाहरणं यदिसंतीतितु नयुक्तम्। वैधर्म्योदाहरणंप्रस्तुतधार्मिविशेषोपारूढार्थदार्ढ्यायस्वाक्षिप्तस्वव्यतिरेकसमानजातीयस्यधर्म्यंतरारूढस्याप्रकृतार्थस्यकथनं।यथा 'वंशभवोगुणवानपिसंगविशेषेणपूज्यतेपुरुषः॥ नहितुंबीफलविकलोवीणादंडःप्रयातिमहिमानं' इत्यादौ अत्रहिसंगविशेषेणपूज्यतेइतिप्रस्तुतार्थाक्षिप्तस्यसंगविशेषेणविनानपूज्यतइतिस्वव्यतिरेकस्यसजातीयो नहितुंबीफलविकलइत्याद्यप्रकृतार्थोनिबद्धइतिवैधर्म्योदाहरणत्वम्। यदिसंतीत्यत्रतुस्वयंप्रकाशंतेनपरेणेत्यस्यप्रस्तुतस्यैवप्रजातीयोऽप्रकृतोर्थः। शपथेननविभाव्यते किंतुस्वयमेवेतिप्रकृतार्थानुरूपतयैवपर्यवसानादिति। तत्रेदंवक्तव्यम्। वंशभवइत्यादिप्रवदुदाहृतपद्येपिकथंवैधर्म्योदाहरणत्वं। नहीत्यादेस्तुंबीफलविकलोमहिमानंनप्रयात्यपितुतद्युक्तइतिप्रकृतार्थानुरूपतयैवपर्यवसानादिति। किंवहुना सर्वत्रैववैधर्म्योदाहरणेसाधर्म्यपर्यवसानंविनानोपमानिर्वाहइतितदुच्छेदप्रसंगः अथापातप्रतिपन्नेनाप्रकृतवाक्यार्थेनवैधर्म्यात्तदुदाहरणत्वं तर्हिप्रकृतेपितदस्त्वीतितुल्यं।यदपिप्रस्तुतेत्यादिवैधर्म्योदाहरणत्वनिर्वचनंतदयुक्तं।'भटाःपरेषांविशरारुतामगुर्दधत्यवातेस्थिरतांहिपांसवः' इतिवैधर्म्यदृष्टांताव्यापनात्। नह्यत्रप्रस्तुतवाक्यार्थःस्व

व्यतिरेकमाक्षिपतिकिंत्वप्रकृतवाक्यार्थएवेतिदिक् ॥ ५० ॥ इत्यलंकारचंद्रिकायांप्रतिवस्तूपमालंकारप्रकरणम् ॥

चेद्बिंबप्रतिबिंबत्वंदृष्टांतस्तदलंकृतिः ॥ त्वमेवकीर्तिमान्राजन्विधुरेवहिकांतिमान् ॥५१ ॥

यत्रोपमानोपमेयवाक्ययोर्भिन्नावेवधर्मौबिंबप्रतिबिंबभावेन निर्दिष्टौतत्रदृष्टांतः । त्वमेवकीर्तिमानित्यत्रकीर्तिकांत्योर्बिंब प्रतिबिंबभावः । यथावा ॥ कामंनृपाःसंतिसहस्रशोन्येराजन्वतीमाहुरनेनभूमिं ॥ नक्षत्रताराग्रहसंकुलापिज्योतिष्मती चंद्रमसैवरात्रिः ॥ यथावा ॥ देवींवाचमुपासतेहिबहवःसारंतुसारस्वतंजानीतेनितरामसौगुरुकुलक्लिष्टोमुरारिःकविः ॥ अब्धिर्लंघितएववानरभटैःकिंत्वस्यगम्भीरतामापातालनिमग्नपीवरतनुर्जानातिमंथाचलः॥नन्वत्रोपमानोपमेयवाक्ययोर्ज्ञानमेकएवधर्मइतिप्रतिवस्तूपमायुक्ता।मैवं।अचेतनेमंथाचलेज्ञानस्यबाधितत्वेनतत्रजानातीत्यनेनसागराधस्तलावधिसंस्पर्शमात्रस्यविवक्षितत्वात् । अत्रोदाहरणेपदावृत्तिदीपकाद्विशेषःपूर्ववत्प्रस्तुताप्रस्तुतविषयत्वकृतोद्रष्टव्यः । वैधर्म्येणाप्ययंदृश्यते । कृतंचगर्वाभिमुखंमनस्त्वयाकिमन्यदेवंनिहताश्चनोद्विषः ॥ तमांसितिष्ठंतिहितावदंशुमान्नयावदायात्युदयाद्रिमौलिताम् ॥ ५१ ॥

दृष्टांतालंकारंलक्षयति ॥ चेदिति । वाक्ययोरित्यनुवर्तते । धर्मयोरित्यध्याहार्यं । तदितितदेत्यर्थकं अर्थतोव्याचष्टे । यत्रेति । यत्रकाव्ये । तथाचोपमानोपमेयवाक्यार्थघटकधर्मयोर्बिंबप्रतिबिंबभावोदृष्टांतइतिलक्षणम् । काममिति । अनेनप्रकृतराजविशेषेणराजन्वतींशोभनराजवतीम् राजन्वान्सौराज्येइतिनिपातः । नक्षत्राण्यश्विन्यादीनिसप्तविंशतिः तारास्तदितराः गोबलीवर्दन्यायात् ग्रहाभौमादयः संकुलाव्याप्ताज्योतिष्मतीति प्राशस्त्येमतुप् । अत्रराजन्वतीज्योतिष्मतीत्यनयोर्बिंबप्रतिबिंबभावः पूर्वोदाहरणेकीर्तिकांत्योर्बिंबप्रतिबिंबभावप्रयोजकंमनोहारित्वरूपंसादृश्यमात्रमिहतुराजज्योतिषोःप्राशस्त्यरूपंतच्छाब्दमितिभेदः। देवीमिति। देवींवाचंसरस्वतींबहवउपासतेहिसेवंतएव हिशब्दस्यैवकारार्थत्वात् । तुपरंसरस्वतीसंबंधिसारंअसौप्रसिद्धोगुरुकु

लेक्लिष्टोऽध्ययनश्रमत्वान्मुरारिनाम्नाकविर्नितरामतिशयेनजानीते। अत्रदृष्टांतमाह।वा नररूपैर्भटैर्योद्भिरब्धिर्लंघितएवार्किंलस्याब्धेर्गंभीरतांपातालपर्यंतनिमग्नापीवरास्थूला तनुर्यस्यैवंविधोमन्थाचलोमंदराद्रिरेवजानातीति । दृष्टान्तोदाहरणत्वासंगतिमाशंकते नन्विति। वाक्ययोरितिसप्तमी । एकधर्मइत्यनंतरंशब्दभेदेननिर्दिष्टइतिशेषः। सा गरस्याधस्तनोयोऽवधिरितिगंभीरतापदार्थकथनं संस्पर्शस्तुलक्षणयाजानात्यर्थइतिबो ध्यम्। तथाचधर्मभेदान्नप्रतिवस्तूपमा किंतुसारस्वतसारज्ञानसागराधस्तलावधिसंस्पर्श योर्बिंबप्रतिबिंबभावाद्दृष्टांतालंकारएवेत्साशयः। 'वर्षत्यंबुदमालेयंवर्षत्येषाचशर्वरी' इति वत्पदावृत्तिदीपकंस्यादित्साशंक्यसमाधत्ते।अत्रेति। पूर्ववदर्थावृत्तिप्रतिवस्तूपमयोरिव। प्रस्तुताप्रस्तुतेतिदृष्टांतःप्रस्तुताप्रस्तुतविषयः। पदावृत्तिस्तु तदन्यतरमात्रविषयेत्सर्थः। यद्यप्यत्रात्मनेपदपरस्मैपदभेदेनपदभेदान्नपदावृत्तिशंकोचिता तथापिपाठपरिवर्तनेन पदाभेदेपिनपदावृत्तेरयंविषयइतिबोधयितुमेतदुक्तं । अयंदृष्टांतः। कृतंचेतिनृपंप्रति मंत्रिणउक्तिः। हेराजन्त्वयामनोगर्वस्याभिमुखंनतुगर्वितंकृतंच । किमन्यदपेक्षितमि तिशेषः । एवंशस्त्रप्रयोगादिकंविनानोऽस्माकंद्विषःशत्रवोनिहताश्चनतुनिहानिष्पंते। अंशुमान्सूर्योयावदुदयाद्रेर्मौलितांशिरोलंकारतांनायातितावदेवतमांसितिष्ठंति तस्मि स्तुतथाभूतेनतिष्ठंतीतिदृष्टांतः। अत्रमनोगर्वाभिमुखीकरणवैरिहननयोरंशुमदुदयाचल मस्तकानागमनतमःस्थित्योश्चयथाक्रमंवैधर्म्येणबिंबप्रतिबिंबभावः ॥५१॥ इत्यलंकार चंद्रिकायांदृष्टांतालंकारप्रकरणम् ॥

वाक्यार्थयोःसदृशयोरैक्यारोपोनिदर्शना ॥ य
द्दातुःसौम्यतासेयंपूर्णेंदोरकलंकता ॥ ५२ ॥

अत्रदातृपुरुषसौम्यत्वस्योपमेयवाक्यार्थस्यपूर्णेंदोरकलंकत्व स्योपमानवाक्यार्थस्ययत्तद्भ्यामैक्यारोपः। यथावा ॥ अरण्य रुदितंकृतंशवशरीरमुद्वर्तितंस्थलेऽब्जमवरोपितंसुचिरमूखरेव र्षितं ॥ श्वपुच्छमवनामितंबधिरकर्णजापःकृतोधृतोंधमुखद र्पणोयदबुधोजनःसेवितः ॥ अत्राबुधजनसेवायाअरण्यरोद नादीनांयत्तद्भ्यामैक्यारोपः ॥ ५२ ॥

निदर्शनांलक्षयति॥वाक्यार्थयोरिति । सदृशवाक्यार्थसंबंधीयऐक्यारोपः। उपमे यवाक्यार्थेउपमानवाक्यार्थाभेदारोपइतियावत् । यद्दातुरिति । दातुःसौम्यतेतियत् इ तिसामान्येननपुंसकं । सेयमितिविधेयाभिप्रायकंस्त्रीलिंगं।यत्तद्भ्यामिति । यथापमुखं चंद्रइतिवद्दातुःसौम्यतापूर्णेंदोरकलंकतेत्येतावताप्यैक्यारोपःसंभवति तथापियत्तद्भ्यां

शीघ्रंस्फुटतयातदवगमात्तदुपन्यासः। अरण्येति। अबुधोमूर्खोजनःसेवितोयदितिगुणीभूतसेवनक्रियापरामर्शः। उत्तरवाक्यगतेनयच्छब्देनतच्छब्दाक्षेपात्। तदरण्यरुदितंकृतमित्याद्यन्वयः। उद्वर्तनंयवगोधूमादिचूर्णेनमलापकर्षणं। स्थलंनिर्जलप्रदेशे। अब्जंजलजम्। ऊखरेअंकुरायोग्यक्षारभूभागे। शुनःपुच्छंश्वपुच्छंअवनामितंऋजुतासंपादनायनम्रीकृतं। बधिरस्यकर्णेजपएवजापःप्रलापइत्यर्थः। अंधस्यमुखेतत्संमुखंदर्पणोधृतः। इत्येवंनिरर्थकत्वेनसदृशानामनेकेषांवाक्यार्थानामबुधजनसेवनरूपप्रकृतवाक्यार्थेऐक्यारोपःपूर्वत्रत्वेकस्यैवैक्यारोपइतिविशेषः॥ ५२॥

पदार्थवृत्तिमप्येकेवदंत्यन्यांनिदर्शनां॥ त्वन्नेत्रयुगुलंधत्तेलीलांनीलांबुजन्मनोः॥ ५३॥

अत्रनेत्रयुगलेनीलांबुजगतलीलापदार्थारोपोनिदर्शना। यथावा॥ वियोगेगौडनारीणांयोगंडतलपांडिमा॥ अदृश्यतसखर्जूरीमंजरीगर्भरेणुषु॥ पूर्वस्मिन्नुदाहरणेउपमेयेउपमानधर्मारोपइहतूपमानेउपमेयधर्मारोपइतिभेदः। उभयत्राप्यन्यधर्मस्यान्यत्रासंभवेनतत्सदृशधर्माक्षेपादौपम्येपर्यवसानंतुल्यं। इत्थंपदार्थवृत्तिनिदर्शनाललितोपमेतिजयदेवेनव्याहृता। यद्यपि वियोगेगौडनारीणामितिश्लोकःप्राचीनैर्वाक्यार्थवृत्तिनिदर्शनायामुदाहृतस्तथापि विशिष्टयोर्धर्मयोरैक्यारोपोवाक्यार्थवृत्तिनिदर्शना। उपमानोपमेययोरन्यतरस्मिन्नन्यतरधर्मारोपःपदार्थवृत्तिनिदर्शनेतिव्यवस्थामाश्रित्यास्माभिरिहोदाहृतः। एवंच 'त्वयिसतिशिवदातर्यस्मदभ्यर्थितानामितरमनुसरंतोदर्शयंतोर्थिमुद्रां॥ चरमचरणपातैर्दुग्रहंदोग्धुकामाःकरभमनुसरामःकामधेनौस्थितायां॥ दोर्भ्यामब्धिंतितीर्षंतस्तुष्टुवुस्तेगुणार्णवम्' इत्यादिषुवाक्यभेदाभावेपिवाक्यार्थवृत्तिरेवनिदर्शना। विशिष्टयोरैक्यारोपसद्भावात्॥—

निदर्शनांतरमाह॥पदार्थेति।पदार्थवृत्तिंपदार्थसंबंधिनीम्।एकेआलंकारिकाःअन्यांपूर्वोक्तविलक्षणाम्।त्वन्नेत्रेति। लीलांशोभांनीलांबुजन्मनोर्नीलोत्पलयोः। वियोगइति। गौडदेशगतानांनारीणांवियोगेसकांतवियोगकालेयोगंडतलेपाण्डिमापांडुवर्णोभवति सखर्जूरीणांलतानांमंजरीगर्भस्थेपुरेणुष्वदृश्यतदृष्टइत्यन्वयः। उपमानेयथोक्तरेणुरूपे।

उपमेयेउपमानधर्मारोपएवपदार्थनिदर्शनायाःप्राचीनैरुदाहरणात्कथमियंपदार्थनिदर्श नोच्यतइतिशंकायामाह। उभयत्रेति। उपमेये उपमानधर्मारोपेऽपमानेऽपमेयधर्मारोपे चेत्यर्थः। तथाचौपम्यपर्यवसायित्वस्यैवपदार्थनिदर्शनाजीवातुत्वेनारोपविषयस्योपमेय त्वेननिवेशेप्रयोजनाभावादिहापिसायुक्तैवेतिभावः। नन्वेवंसतिवाक्यार्थनिदर्शनालक्ष णस्यात्रातिव्याप्तिरित्याशंक्याशयवानाह । यद्यपीति। वियोगकालीनगौडनारीगंड तलपांडिम्नःखर्जूरीमंजरीगर्भरेणुदृष्टपांडिम्नश्चयत्तद्भ्यामैक्यारोपसत्त्वादितिभावः। अर्थविशेषविवक्षयातिव्याप्तिपरिहरन्नेवस्वाभिमतनिदर्शनाद्वयविषयविभागंदर्शयति। तथापीति। विशिष्टयोर्बिंबप्रतिबिंबभावापन्नधर्मविशिष्टयोः एवंचवाक्यार्थशब्देनैतादृ शार्थविवक्षणाद्वियोगइत्याद्युदाहरणेनातिव्याप्तिरितिभावः। उपमानेत्यादि । एतच्च स्वरूपकथनं। नन्वेवंरूपेणलक्षणेनिवेशः। ताद्रूप्यरूपकातिव्याप्तिवारणायोपमाकल्पक त्वस्यारोपविशेषणस्यावश्यकत्वेनोपमाकल्पकस्तत्तद्धर्मारोपइत्येतावतएवलक्षणस्यनि र्दुष्टत्वात्। तदुक्तं। 'अभवन्वस्तुसंबंधउपमापरिकल्पकइति'। ताद्रूप्यरूपकेतुताद्रूप्याव च्छिन्नाभेदएवविवक्षितोनपुनरुपमेतितद्वारणम्। ननु त्वयिसतीत्याद्युदाहरणेकापिनि दर्शनानस्यादन्यधर्मस्यान्यत्रारोपात्एकवाक्यत्वेनवाक्यार्थभेदाभावाच्च पदार्थवा क्यार्थनिदर्शनयोरसंभवादित्याशंक्याह । एवंचेति । उक्तव्यवस्थाश्रयणेचेत्यर्थः विशिष्टयोरिति। बिंबप्रतिबिंबभावापन्नवस्तुविशिष्टयोरित्यर्थः। तत्रतावत्पूर्वपद्येभोशि व अस्मदभ्यर्थितानांदातरित्वयिसतिइतरंक्षुद्रंप्रभुमनुसरंतोर्थिनांमुद्रांचिन्हंदर्शयंतोस्यं कामधेनौस्थितायांदोग्धुकामाश्वरमयोःपाश्चात्ययोश्चरणयोःपातैर्दुर्ग्रहंदुःखेनग्राह्यंकरभ मुष्ट्रशिशुमनुसरामइत्यर्थकेसकलकामदमहेश्वरकालीनक्षुद्रधनिकानुसरणकर्तुःकामधेनु स्थितिकालीनतथाविधकरभानुसरणकर्तुश्चैक्यारोपः । तत्रोपमानकोटिविशेषणयोः कामधेनुकरभयोरुपमेयकोटिविशेषणयोश्चमहेश्वरक्षुद्रधनिकयोर्यथाक्रमंबिंबप्रतिबिं भावोबोध्यः। एवमनुसरणयोरपि। एवंदोर्भ्यामित्यत्राप्यब्धिगुणसमूहयोर्बिंबप्रतिबिं बभावोबोध्यः।—

वाक्यार्थयोःसदृशयोरितिलक्षणवाक्येवाक्यार्थशब्देनबिंबप्रति बिंबभावापन्नवस्तुविशिष्टस्वरूपयोःप्रस्तुताप्रस्तुतधर्मयोर्विवक्षि तत्वादिति।एवंच'राजसेवामनुष्याणामसिधारावलेहनं॥पंचा ननपरिष्वंगोव्यालीवदनचुंबनम्'इत्यत्रप्रस्तुताप्रस्तुतवृत्तांत योरेकैकपदोपात्तत्वेपिवाक्यार्थवृत्तिनिदर्शनायानक्षतिः।तयो र्बिंबप्रतिबिंबभावापन्नवस्तुविशिष्टव्यवहाररूपत्वात्।अतएव

निदर्शनाया रूपकाद्भेदः। रूपके ह्यविशिष्टयोरेव मुखचंद्रादिकयोरैक्यारोपः। 'अंघ्रिदंडो हरेरूर्ध्वमुत्क्षिप्तो बालिनिग्रहे॥ विधिविष्टरपद्मस्य नालदंडो मुदेऽस्तु नः' इति विशिष्टरूपकोदाहरणेऽपि न बिंबप्रतिबिंबभावापन्नवस्तुविशिष्टरूपता। विधिविष्टरकमलश्लिष्टत्वरूपसाधारणधर्मवत्तासंपादनार्थमेव तद्विशेषणोपादानात्। यद्वा तुःसौम्येत्यादिनिदर्शनोदाहरणेषु दात्रपूर्णेंद्वादीनामानंदकरत्वादिनेवात्र विशेषणयोर्बिंबप्रतिबिंबभावाभावात्। यत्र तु विषयिविशेषणानां परस्परसादृश्येन बिंबप्रतिबिंबभावोऽस्ति। 'ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थीन्यंतर्धानव्यसनरसिका रात्रिकापालिकीयं॥ द्वीपाद्द्वीपं भ्रमति दधती चंद्रमुद्राकपाले न्यस्तं सिद्धांजनपरिमलं लांछनस्य च्छलेन'। इति सावयवरूपकोदाहरणे तत्रापि विषयविषयिणोस्तद्विशेषणानां च प्रत्येकमेवैक्यारोपो न तु ज्योत्स्नादिविशिष्टरात्रिरूपविषयस्य भस्मादिविशिष्टकापालिकीरूपविषयिणश्चाविशिष्टरूपेणैक्यारोपोऽस्तीति। तस्माद्राजसेवा मनुष्याणामित्यादावपि वाक्यार्थवृत्तिनिदर्शनैव युक्ता । मतांतरे त्विह पदार्थवृत्त्यैवा निदर्शनया भाव्यमिति ॥ ५२ ॥

नन्वियंऽव्यवस्थामूलविरुद्धेत्याशंक्याह । वाक्यार्थयोरिति । ननु वाक्यार्थशब्दस्यावांतरवाक्यार्थसाधारणानेकपदार्थपरत्वेनैवोक्तोदाहरणसंग्रहसंभवादेवंविधगुरुतरार्थपरत्वं न युक्तमित्यत आह। एवं चेति। एवंविधार्थविवक्षणे चेत्यर्थः। अवलेहनं जिह्वया घट्टनं। पंचाननः सिंहस्तस्य परिष्वंग आलिंगनम्। व्याली भुजंगी अशक्यत्वं बलवदनिष्टजनकत्वं च साधारणो धर्मः। प्रस्तुतवृत्तांतो राजसेवा । निदर्शनायास्तल्लक्षणस्य न क्षतिर्नाव्याप्तिः। तयोः प्रस्तुताप्रस्तुतवृत्तांतयोः । असिधारादिभिः समं राज्ञो बिंबप्रतिबिंबभावात्तद्विशिष्टयोश्चैक्यारोपादिति भावः। एवं तर्हि सदृशयोरैक्यारोप इत्येव लक्षणमस्त्वित्याशंक्याह। अत एवेति। एतादृशविशेषणविवक्षणादेवेत्यर्थः। भेदोऽव्यावृत्तिः। तथा च तदभावे रूपके तिप्रसंगः स्यादिति भावः। कथमनेन न द्वारणं तत्राह। रूपके हीति। अविशिष्टयोर्बिंबप्रतिबिंबभावापन्नवस्त्वविशिष्टयोः। बिंबप्रतिबिंबभावापन्नेत्यस्य व्यावृत्तिं दर्शयति। अंघ्रिदंड इत्यादि । बलेर्दैत्यविशेषस्य निग्रहे बंधने कर्तव्ये ऊर्ध्वमुत्क्षिप्तो हरेरंघ्रिदंडो वो युष्माकं

ष्माकंमुदेऽस्त्वितिसंबंधः । कीदृशः विधेर्ब्रह्मणोत्रिष्टरआसनंतद्रूपस्यपद्मस्यनालदंडइ त्यर्थः । विशिष्टरूपकेति ऊर्ध्वोत्क्षिप्तत्वविशिष्टांघ्रिदंडविधिविष्टरपद्मसंबंधित्वविशिष्ट नालदंडसंबंधिरूपकेत्यर्थः विशेषणेति । ऊर्ध्वोत्क्षिप्तत्वरूपोपमेयविशेषणविधिविष्टरप द्मसंबंधित्वरूपोपमानविशेषणयोरित्यर्थः । एवकारसूचितांबिंवप्रतिबिंबभावव्यतिरेकं स्फुटयति । यद्वातुरिति । अभावादिति । सादृश्याभावादितिभावः । रूपकविशेषेऽ तिव्याप्तिमाशंक्यपरिहरति यत्रत्वित्यादिना । यत्रत्वित्यस्यइतिसावयवरूपकोदाहरणेइ त्यग्रेतनेनान्वयः । विषयविषयिविशेषणानामारोपविषयारोप्यमाणसंबंधिनांविशेषणा नाम् । ज्योत्स्नेति । इयंरात्रिरेवकापालिकीयोगिनीद्वीपाद्वीपांतरंभ्रमतीत्यन्वयः । एतत्प्र धानरूपकम् । एतदंगभूतान्यपराणिविशेषणैःप्रतिपाद्यंते । यथा ज्योत्स्नारूपेणभस्मना छुरणमंगलेपस्तेनधवलातारकारूपाण्यस्थीनिबिभ्रतीअंतर्धानस्यव्यसनेकौतुकेरसिका चंद्ररूपेमुद्राकपालेन्यस्तंलांछनस्यछलेनसिद्धांजनस्यपरिमलंचूर्णंदधतीधारयंती । दी क्षाकालगृहीतोपकरणेषुमुद्रोपपदनाम्नापाखंडानांव्यवहारइतिचंडीदासः । मुद्रापरिम लशब्दौप्रशंसार्थावित्यन्ये । मुद्राचिन्हंतद्रूपेकपालेइतिवार्थः । विषयविषयिणोरात्रि कापालिक्योः । तद्विशेषणानांतत्संबंधिनांज्योत्स्नाभस्मादीनां । यथाश्रुतेरात्रिकापा लिकीतिसमासस्योत्तरपदार्थप्रधानतयाज्योत्स्नादीनांरात्रिविशेषणत्वाभावादसंगतेः प्रत्येकमेवेति । शुद्धस्वरूपेणैवेत्यर्थः । नत्विति । उक्तयुक्त्याविशेषणत्वाभावादितिभावः । वस्तुतोभस्मादेःकापालिकींप्रत्यपिनविशेषणत्वमपितुतत्कोटिनिविष्टत्वमेवेत्यपिबोध्यं । वाक्यार्थशब्दस्यबिंबप्रतिबिंबभावापन्नवस्तुविशिष्टार्थपरत्वमंगीकृत्यराजसेवेत्युदाहर णेवाक्यार्थवृत्तिनिदर्शनात्वमुक्तमुपसंहरति । तस्मादिति । उक्तलक्षणस्याव्यवस्थित त्वादित्यर्थः । मतांतरेत्विति । सदृशयोर्वाक्यार्थयोरैक्यारोपइतियथाश्रुतलक्षणांगीक र्तृमतेइत्यर्थः । इहराजसेवेत्युदाहरणे । पदार्थवृत्त्यैवेति । उपमाकल्पकएकपदार्थेअ परपदार्थतद्धर्मान्यतरारोपइतितल्लक्षणस्यतदभिमतत्वादितिभावः ॥ ९३ ॥

अपरांबोधनंप्राहुःक्रियया‌ऽसत्सदर्थयोः ॥ नश्येद्राजविरो धीतिक्षीणंचंद्रोदयेतमः ॥ ५४ ॥ उदयन्नेवसवितापद्मेष्व र्पयतिश्रियं॥विभावयन्समृद्धीनांफलंसुहृदनुग्रहः ॥ ५५॥

कस्यचित्किंचित्क्रियाविशिष्टस्यस्वक्रिययापरान्प्रत्यसतःसतो वार्थस्यबोधनंयन्निबद्ध्यतेतदपरांनिदर्शनामाहुः । असदर्थबो धनेउत्तरार्धमुदाहरणम् । तत्रनश्यदितिबोधयदितिवक्तव्येबो- धयदित्यस्यगम्यमानत्वादप्रयोगः । ततश्चराज्ञाचंद्रेणसहवि

रूद्धयस्वयंनाशक्रियया।विशिष्टंतमःस्वकीयनाशक्रिययादृष्टा तभूतया।अन्योप्येवंराजविरुद्धश्चेन्नश्येदित्यनिष्टपर्यवसायिन मर्थंवोधयदेवनष्टमितितिनिवंधनादसदर्थनिदर्शना। तथा उत्त रश्लोकेसवितास्वोदयसमयएवपद्मेषुलक्ष्मीमादधानःस्वयाप द्मलक्ष्म्याधानक्रिययापरान्प्रातिसमृद्धीनांफलंसुहृदनुग्रहएवे तिश्रेयस्करमर्थंवोधयन्निबद्धइतिसदर्थानिदर्शना । यथावा ॥ उन्नतंपदमवाप्ययोलघुर्हेलयैवसपतेदितिब्रुवन्॥ शैलशेखरग तःपृषद्गणश्चारुमारुतधुतःपतत्यधः ॥ अत्रगिरिशेखरगतोवृ ष्टिविन्दुगणोमंदमारुतमात्रेणापिकंपितःपतन्लघोरुन्नतपद प्राप्तिःपतनहेतुरित्यसदर्थंबोधयन्निबद्धइत्यसदर्थानिदर्शना ॥—

निदर्शनांतरमाह ॥ अपरामिति।पूर्वविलक्षणामित्यर्थः।निदर्शनामित्यनुषज्यते। क्रियया।ऽसत्सदर्थयोर्वोधनमपरांनिदर्शनांप्राहुरितिसंबंधः सदसदर्थयोरितिवक्तव्येपिछंदोऽनुरोधादित्थमभिधानं। समुद्राभ्राद्घइत्यादिसौत्रनिर्देशेनपूर्वनिपातविधेरनित्यत्वज्ञापनात्।लक्षणंव्याचष्टे कस्यचिदिति। अत्रासतःसतोवेतिविभागकथनंनतुलक्षणांतर्गतं। उदासीनार्थवोधनेचमत्कारित्वाभावेनैवानतिप्रसंगात्।स्वक्रिययासहकारिभूतयाक्रियाविशिष्टस्यवस्तुनःसंबंध्यर्थस्यवोधनंवोधानुकूलोव्यापारोयन्निबद्ध्यतेवर्ण्यतेसानिदर्शनेति लक्षणं।अथ'निवातपद्मोदरसोदराभ्यांविलोचनाभ्यामवलोकयंती॥ नकेवलंयूनिमनोभवेपिव्यनक्तिकंचित्तपसःप्रभावं'इत्यादावतिव्याप्तिः।अवलोकनक्रियाविशिष्टयाकामिन्यातपःप्रभाववोधनस्यवर्णनादितिचेन्न क्रिययेत्यनेनदृष्टांतविधयावोधनस्य विवक्षितत्वात्। उक्तोदाहरणेचलिंगविधयावोधकत्वेनतदभावात्। इत्थंचदृष्टांततयाक्रियाविशिष्टस्यार्थवोधकत्वंवर्ण्यमानंनिदर्शनेतिपर्यवसितं नश्येदित्यत्रवोधनस्यावर्णनात्कथमुदाहरणत्वमतआह।तत्रेति उदाहरणइत्यर्थः। लक्ष्येलक्षणंसंगमयति।ततश्चेति।वोधनस्यगम्यमानत्वाच्चेत्यर्थः। दृष्टांतभूतयेति। दृष्टांतेष्वनुभूतयाविद्यमानयेत्यर्थः। दृष्टांतोभूतःसंजातोययेतिवा ।एवंतमोवत्। चंद्रस्यापिराजत्वं सोमोवैब्राह्मणानांराजेत्यादिश्रुतिप्रसिद्धं। अनिष्टपर्यवसायिनमर्थंनाशरूपानिष्टसाधनंराजविरुद्धत्वरूपमर्थं। उन्नतमिति योलघुरल्पबुद्धिरल्पपरिमाणश्चसउन्नतंपदंउत्कर्षमुच्चस्थानंचावाप्यहेलयैवपतेदितिब्रुवन्कथयन्शैलशेखरगतोगिरिमस्तकवर्त्तीपृषद्गणोजलविंदुसमूहश्चारुणामंदेनापिमारुतेनधुतःकंपितोऽधःपतत्युत्कर्षाद्धीयतेऽधोदेशेचपततीत्यर्थः । ध्रुवमितिपाठेवोधनस्यपूर्ववद्गम्यमानत्वादप्रयोगः । दृषत्कणइतिपाठेपाषाणकणइत्यर्थः ॥—

चूडामणिपदेधत्तेयोदेवंरविमागतं॥ सतांकार्यातिथेयीतिबोध
यन्गृहमेधिनः ॥ अत्रसमागतंरविंशिरसासंभावयन्नुदयाच
लःस्वनिष्ठयारविधारणक्रिययासमागतानांसतामेवंगृहमेधि
भिरातिथ्यंकार्यमितिसदर्थंबोधयन्निबद्धइतिसदर्थनिदर्शना।
अत्रकेचित्वाक्यार्थवृत्तिपदार्थवृत्तिनिदर्शनाद्वयमसंभवद्वस्तु
संबंधानिबंधनमितितृतीयातुसंभवद्वस्तुसंबंधानिबंधनेतिचव्य
वहरंति। तथाहि। आद्यनिदर्शनायांवाक्यार्थयोरैक्यमसंभव
त्तयोःसाम्येपर्यवस्यति। द्वितीयनिदर्शनायामप्यन्यधर्मोऽन्य
त्रासंभवन्धर्मिणोःसाम्येपर्यवस्यति। तृतीयनिदर्शनायांतुस्व
क्रिययापरान्प्रतिसदसदर्थबोधनंसंभवदेवसमतांगर्भीकरोति।
बोधयन्गृहमेधिनइत्यादौहिकारीषोग्निरध्यापयतीतिवत्सम
र्थाचरणेणिचःप्रयोगः। ततश्चयथाकारीषोग्निःशीतापनयनेन
बटूनध्ययनसमर्थान्करोतिएवंवर्ण्यमानःपर्वतःस्वयमुपमान
भावेनगृहमेधिनउक्तबोधनसमर्थान्कर्तुंक्षमते।यथायंपर्वतःस
मागतंरविंशिरसासंभावयत्येवंगृहमेधीसमागतंसंतमुचितपू
जयासंभावयेदित्यतःसंभवतिबोधनसंबंधइति ॥५४॥५५॥

चूडेति। यउदयाचलआगतंदेवंरविंचूडामणेःपदेस्थानेमस्तकेधत्तेधारयति। किंकुर्वन्। गृहमेधिनोगृहस्थान्सतामातिथेयींकार्येतिबोधयन्।आतिथेयीअतिथ्यं। अत्रउक्तनिदर्शनात्रयविषयेकेचिदिसस्ये तव्यवहरंतीत्यनेनान्वयः। धर्मिणोरिति। धर्मयोःसाम्यमात्रेणचमत्कारानिष्पत्तेस्तत्कृतबिंबप्रतिबिंबभावेनधर्मिणोःसाम्यावगतिरितिभावः। गर्भीकरोतीति। स्वविशेषणत्वेनस्वीकरोतीत्यर्थः। दृष्टांततयाबोधनस्यैवतत्रविवक्षितत्वात्। एतदवोपपादयतिबोधयन्नित्यादिना। करीषंशुष्कगोमयंतस्यायंकारीषः। समर्थाचरणेसमर्थकरणे। सामर्थ्योत्पादनइतियावत्। भावप्राधान्यात्। उपमानभावेनदृष्टांतत्वेन। एवंप्रदर्शितेनिदर्शनात्रयेनिदर्शनापदप्रवृत्तिनिमित्तस्यैकस्याभावान्नानार्थएवनिदर्शनाशब्दइतिबोध्यं ॥ ५४ ॥५५॥ इत्यलंकारचंद्रिकायांनिदर्शनाप्रकरणम् ॥

व्यतिरेकोविशेषश्चेदुपमानोपमेययोः ॥ शैला
इवोन्नताःसंतःकिंतुप्रकृतिकोमलाः ॥ ५६ ॥

अयमुपमेयाधिक्यपर्यवसायीव्यतिरेकः। यथावा ॥ पल्लवतः

कल्पतरोरेषविशेषःकरस्यतेवीर ॥ भूषयतिकर्णमेकःपरस्तुकर्णंतिरस्कुरुते॥तन्न्यूनत्वपर्यवसायीयथा।रक्तस्त्वंनवपल्लवैरहमपिश्लाघ्यैःप्रियायागुणैस्त्वामायांतिशिलीमुखाःस्मरधनुर्मुक्तास्तथामामपि ॥ कांतापादतलाहतिस्तवमुदेतद्वन्ममाप्यावयोःसर्वंतुल्यमशोककेवलमहंधात्रासशोकःकृतः ॥ अनुभयपर्यवसायीयथा। दृढतरनिबद्धमुष्टेःकोशनिषण्णस्यसहजमलिनस्य ॥ कृपणस्यकृपाणस्यचकेवलमाकारतोभेदः ॥५६॥

व्यतिरेकंलक्षयति ॥ व्यतिरेकइति । विशेषोवैलक्षण्यं। उपमेयस्याधिक्यमुत्कर्षः। पल्लवतइति । पंचम्यर्थेतसिल्। कल्पतरोःपल्लवतःपल्लवादेषवक्ष्यमाणस्तेतवकरस्यविशेषइतिसंबंधः । एकःपल्लवः परोहस्तः । कर्णंराधेयंतिरस्कुरुते दानातिशयेनेतिभावः अत्रोपमेयस्यकरस्योत्कर्षः । पूर्वोदाहरणेउन्नतत्वेनौपम्यंशाब्दमिहतुरक्तत्वकोमलत्वादिप्रयुक्तंतद्गम्यमितिभेदः । तन्न्यूनत्वेति । उपमेयन्यूनत्वेत्यर्थः । रक्तस्त्वमिति । अशोकवृक्षंप्रतिविरहिणःकस्यचिदुक्तिः । हेअशोकआवयोःसर्वंतुल्यंसमानम् । अहंकेवलंधात्राविधात्रासशोकःशोकसहितःकृतः । त्वंतु शोकरहितइत्यशोकपदश्लेषादवगम्यते । किंतत्सर्वंसमानंतत्राह रक्तइत्यादि । त्वंनूतनैःपल्लवैरक्तोरक्तवर्णः अहमपिप्रियायाःश्लाघनीयैर्गुणैःसौंदर्यादिभीरक्तोऽनुरक्तः अर्थात्प्रियायाम् । हेसखेत्वांप्रतिशिलीमुखाभ्रमराआयांतिमांप्रत्यपिस्मरेणधनुषामुक्ताःप्रेरिताःशिलीमुखाबाणाआयांति । एवंकांतायाःपादतलस्याघातोयथातवमुदेसंतोषायतद्वत्तथाममापिसंतोषायेत्यर्थः। कामिनीपादघातेनाशोकस्यपुष्पोद्गमइतिकविप्रसिद्धिः । अत्रोपमेयस्यसशोकत्वेनापकर्षः । अनुभयपर्यवसायीउपमेयोत्कर्षापकर्षान्यतरपर्यवसानरहितः । दृढतरेति । कृपणस्यकृपाणस्यखड्गस्यचाकारतोदीर्घावर्णादाकृतेश्चकेवलंभेदोवैलक्षण्यं । प्रकारांतरेणतुसाम्यमेवेत्यर्थः। कथंतत्राह दृढतरेत्यादि । दृढतरंनिबद्धोमुष्टिर्येनेति। कृपणपक्षेधनव्ययवैमुख्येनमुष्टिमोचनाभावात् । खड्गपक्षेतुदृढतरंनिबद्धःसंबद्धोमुष्टिर्मुष्टिग्राह्यभागोयस्येत्यर्थः।कोशोभांडारगृहंतत्रनिषण्णउपविष्टःकृपणः कोशेपिधानकेनिषण्णःस्थितइति खड्गपक्षेसहजमलिनःस्वभावमलिनःमलिनवेषत्वात्कृपणः खड्गस्तुकृष्णवर्णत्वादिति।एवंचकिंचिद्धर्मप्रयुक्तसाम्यवत्तयाप्रतीयमानयोःकिंचिद्धर्मप्रयुक्तवैलक्षण्यंव्यतिरेकशरीरं। वैलक्षण्यंतुक्वचिदुपमेयस्योत्कर्षेक्वचिच्चतदपकर्षेपर्यवसन्नं क्वचित्तुतदन्यतरपर्यवसानविरहेपिस्ववैचित्र्यविश्रांतमात्रमितिबोध्यं। एतेनचरमभेदद्वयतदुदाहरणदूषणंकस्यचिदापातरमणीयमिवभासमानंप्रयुक्तंवेदितव्यं। अत्यंतासारतयातुनानुवादमर्हतीत्युपरम्यते ॥ ५६ ॥ इत्यलंकारचंद्रिकायांव्यतिरेकप्रकरणम् ॥

सहोक्तिः सहभावश्चेद्भासतेजनरंजनः ॥ दिगं
तमगमत्तस्यकीर्त्तिःप्रत्यर्थिभिःसह ॥ ५७ ॥

यथावा ॥ छायासंश्रयतेतलंविटपिनांश्रांतेवपांथैःसमंमूलं यातिसरोजलस्यजडताग्लानेवमीनैःसह ॥ आचामत्यहिमांशुदीधितिरपस्तप्तेवलोकैःसमंनिद्रागर्भगृहंसहप्रविशातिक्लांतेवकांताजनैः ॥ जनरंजनइत्युक्तेरनेनसार्द्धंविहरांबुराशेरित्यादौनसहोक्तिरलंकारः ॥ ५७ ॥

सहोक्तिरितिलक्ष्यनिर्देशः। सहभावइत्यादिलक्षणं। सहभावःसाहित्यं। जनरंजनः सहृदयजनाल्हादकः। एवंचचमत्कृतिजनकंसाहित्यंसहोक्तिरितिलक्षणं।दिगंतमिति। तस्यराज्ञःकीर्तिःप्रत्यर्थिभिःशत्रुभिःसहदिगंतमगमदित्यन्वयः। अत्रचतृतीयायानिरूपितत्वार्थकतयाप्रत्यर्थिनिरूपितसाहित्यवतीकीर्तिगमनाश्रयइतिबोधेएकधर्मान्वयित्वरूपसाहित्यबलात्प्रत्यर्थिनामपिगमनान्वयप्रतीतिः। तदुक्तं।'सासहोक्तिःसहार्थस्यबलादेकंद्विवाचकं' इति। छायेति। ग्रीष्मर्तौमध्यान्हवर्णनमिदम्। छायापांथैरध्वगैःसमंसार्धंविटपिनांतरूणांतलंमूलप्रदेशंसंश्रयते। कुतइत्याकांक्षायामुत्प्रेक्षतेश्रांतेवेति। श्रमश्चात्रातपातिशयकृतोबोध्यः। एवमग्रेपि।जडताशीतलताग्लानेवसरोजलस्यमूलमधोदेशंमीनैर्मत्स्यैःसहयातिगच्छति। ग्लानिर्बलापचयः। तथाअहिमाउष्णाअंशवःकरायस्यैवंभूतस्यरवेर्दीधितिस्तप्तेवसंतप्तेवसतीलोकैःसमंअपःजलानिआचामतिपिबति।दीधितिःस्त्रियामित्यमरः। निद्राक्लांतेवसतीकांताजनैःसहगर्भगृहमभ्यंतरगृहंप्रविशति।तत्रैवतदुद्भवात्।क्लांतिस्तेजोहानिः। सौकुमार्यातिशयेनतत्सौलभ्यात्कांतोपादानं। इत्यादावितामिंदुमतीस्वयंवरेरघुवंशे 'अनेनसार्द्धंविहरांबुराशेस्तीरेषुतालीवनमर्मरेषु॥ द्वीपांतरानीतलवंगपुष्पैरपाकृतस्वेदलवामरुद्भिः' इतिपद्यं। अत्रसहोक्तिचमत्कारित्वाभावालंकाररूपेत्यर्थः ॥ ५७ ॥ इत्यलंकारचंद्रिकायांसहोक्तिप्रकरणम् ॥

विनोक्तिश्चेद्विनाकिंचित्प्रस्तुतंहीनमुच्यते ॥ वि
द्याहृद्यापिसाऽवद्याविनाविनयसंपदम् ॥ ५८ ॥

यथावा ॥ यश्चरामंनपश्येत्तुयंचरामोनपश्यति ॥ निंदितःस भवेल्लोकेस्वात्माप्येनंविगर्हते ॥ अत्रचरामदर्शनेनविनाहीनत्वंविनाशब्दमंतरेणैवदर्शितम् ॥ ५८ ॥

विनोक्तिरिति। किंचिद्विनाप्रस्तुतंवर्ण्यंहीनंदुष्टमुच्यतेचेत्तदाविनोक्तिर्नामालंका

रइत्यर्थः । विद्येति । विनयसंपत्तिविज्ञाया विद्यासाहृद्यामनोहरापिदुष्टेत्यन्वयः । अ अप्रस्तुतायाविद्यायाविनयंविनादुष्टत्वमुक्तम् । यश्चेति । यःपुरुषःस्वात्मास्वांतःकरणं विगर्हतेर्तानिंदतिरामदर्शनंविनेति । रामकर्मकंरामकर्तृकंचदर्शनंविनेत्यर्थः । अंतरे णापीति । विनापीत्यर्थः । तथाचविनोक्तिरित्यर्थग्रहणंनतुशब्दग्रहणमितिभावः ॥५८॥

तच्चेत्किंचिद्विनारम्यंविनोक्तिःसापिकथ्यते ॥ वि
नाखलैर्विभात्येषाराजेंद्रभवतःसभा ॥ ५९ ॥

यथावा ॥ आविर्भूतेशशिनितमसामुच्यमानेवरात्रिर्नैशस्या र्चिर्हुतभुजइवच्छिन्नभूयिष्ठधूमा ॥ मोहेनांतर्वरतनुरियंलक्ष्य तेमुक्तकल्पागंगारोधःपतनकलुषागृह्णतीवप्रसादं ॥ अत्रतमः प्रभृतीन्विनानिशादीनांरम्यत्वंविनाशब्दमंतरेणदर्शितं॥५९॥

प्रकारांतरमाह॥तच्चेदिति। तत्प्रस्तुतंकिंचिद्विनारम्यंचेत्सापिविनोक्तिःकथ्यतइत्य न्वयः। इत्थंचकिंचिद्व्यतिरेकेणप्रस्तुतस्यरम्यत्वारम्यत्वान्यतरवर्णनंविनोक्तिरितिप्रका रद्वयसाधारणंसामान्यलक्षणंबोध्यम् । यत्तुहृद्योविनार्थसंबंधएवविनोक्तिः। हृद्यत्वंच विनाकृतस्यवस्तुनोरमणीयत्वारमणीयत्वाभ्यांभवतीत्यर्वाचीनैरुक्तंतदयुक्तम् । कार णंविनाकार्योत्पत्तिकथनरूपेविभावनालंकारेऽतिव्याप्तेर्वारणायविनार्थसंबंधप्रयुक्तप्र स्तुतगतरमणीयत्वादेरपिलक्षणेनिवेशस्यावश्यकत्वादिति। आविर्भूतइति। मानवतीवि षयेनायकस्यपरामर्शोयं। इयंवरतनुरंतःअंतःकरणेमोहेनमानावेशेनमुक्तकल्पाईषन्न्यू नमुक्तालक्ष्यते। केव पूर्वंरोधसस्तटस्यपतनेनकलुषाअनंतरंकालुष्यापगमात्प्रसादंनैर्म ल्यंगृह्णत्याश्रयंतीगंगेव तथाशशिनिचंद्रेआविर्भूतेउदितेसतितमसामुच्यमानारात्रिरि व। एवंछिन्नोनष्टोभूयिष्ठोधूमोयस्याएवंभूतानिशिभवस्यहुतभुजोवन्हेरर्चिःशिखेवेति। दर्शितमिति। अर्थतोबोधितमित्यर्थः॥५९॥ इत्यलंकारचंद्रिकायांविनोक्तिप्रकरणम्॥

समासोक्तिःपरिस्फूर्तिःप्रस्तुतेऽप्रस्तुतस्यचेत् ॥
अयमैंद्रीमुखंपश्यरक्तश्चुंबतिचंद्रमाः ॥ ६० ॥

यत्रप्रस्तुतवृत्तांतेवर्ण्यमानेविशेषणसाम्यबलादप्रस्तुतवृत्तांत स्यापिपरिस्फूर्तिस्तत्रसमासोक्तिरलंकारः। समासेनसंक्षेपेण प्रस्तुताप्रस्तुतवृत्तांतयोर्वचनात्। उदाहरणमयमैंद्रीति। अत्र हिचंद्रस्यप्राचीप्रारंभलक्षणमुखसम्बधलक्षणेउदयेवर्ण्यमाने

मुखशब्दस्यप्रारम्भवदनसाधारण्याद्रक्तशब्दस्यारुणकामुकसाधारण्याच्चुंबतीत्यस्यप्रस्तुतार्थसंबन्धमात्रपरस्यशक्यार्थांतरसाधारण्याच्चन्द्रमःशब्दगतपुल्लिंगेनऐंद्रीशब्दगतस्त्रीलिंगेनतत्प्रतिपाद्येंद्रसंबंधित्वेनचोपस्कृतादप्रस्तुतपरवनितासक्तपुरुषवृत्तांतःप्रतीयते । यथवा ॥ व्यावल्गत्कुचभारमाकुलकचंव्यालोलहारावलिप्रेंखत्कुंडलशोभिगंडयुगलंप्रस्वेदिवक्त्रांबुजं ॥ शश्वद्दत्तकरप्रहारमधिकश्वासंरसादेतयायस्मात्कंदुकसादरंसुभगयासंसेव्यसेतत्कृती ॥ अत्रकंदुकवृत्तांतेवर्ण्यमानेव्यावल्गत्कुचभारमित्यादिक्रियाविशेषणसाम्याद्विपरीतरतासक्तनायिकावृत्तांतःप्रतीयते । पूर्वत्रविशेषणानिश्लिष्टानीहसाधारणानीतिभेदः । सारूप्यादपिसमासोक्तिर्दृश्यते।—

समासोक्तिंलक्षयति ॥ समासोक्तिरिति । प्रस्तुतेवर्ण्यमानेअप्रस्तुतस्याप्रस्तुतवृत्तांतस्यपरिस्फूर्तिश्चेत्तदासमासोक्तिरित्यन्वयः । अयमिति । इंद्रस्येयमैंद्रीप्राचीमुखमादिभागोवदनंच रक्तोरक्तवर्णोऽनुरक्तश्च चुंबनंसंबंधोवक्त्रसंयोगविशेषश्च यथाश्रुतलक्षणस्यवक्ष्यमाणे । ‘असावुदयमारूढःकांतिमान्रक्तमंडलः ॥ राजाहरतिसर्वस्यहृदयंमृदुलैःकरैः’ इत्यादिप्रकृताप्रकृतश्लेषेऽतिव्याप्तेराह विशेषणसाम्यबलादिति । विशेषणमात्रसाम्यबलादित्यर्थः । एवंच विशेषणमात्रसाम्यगम्याप्रस्तुतवृत्तांतत्वंलक्षणंबोध्यं । उदाहृतश्लेषेचाप्रकृतनृपवृत्तांतस्यविशेष्यवाचिनाश्लिष्टेनराजपदेनाप्यवगमान्नातिव्याप्तिः । संज्ञाप्रवृत्तिनिमित्तमवयवार्थंदर्शयति । समासेनेति । वचनात्प्रतिपादनात् । लक्ष्येलक्षणंसंगमयति । अत्रेति । प्रारंभआदिभागः । साधारण्याच्छ्लिष्टत्वात् । यद्यपिचुंबतीत्यत्रनश्लेषस्तथाप्यर्थद्वयबोधकत्वमात्रेणतस्यसाधारण्योक्तिः । उपस्कृतादितिसाधारण्यादित्यस्यविशेषणं । तत्रचंद्रमःशब्दगतेनपुल्लिंगेननायकत्वाभिव्यक्त्याउपस्कारः । ऐंद्रीतिस्वरूपपरंतद्गतेनस्त्रीलिंगेनतदर्थस्यनायिकात्वाभिव्यक्त्याऐंद्रीशब्दप्रतिपाद्येनेंद्रसंबंधित्वेनचपरकीयत्वाभिव्यक्त्येतिबोध्यं । वृत्तांतोव्यवहारोमुखचुंबनरूपः । व्यावल्गदिति । नायिकानुरक्तस्यकस्यचित्क्रीडालंबनंकंदुकंप्रत्युक्तिरियम् । हेकंदुकसुभगयासुंदर्याएतयानायिकयारसात्प्रीतिविशेषात्सादरमादरसहितंयथास्यात्तथायस्मात्संसेव्यसेतत्तस्मात्कृतीधन्योसीत्यन्वयः । कथमित्याकांक्षायांसंसेवनक्रियांविशिनष्टि व्यावल्गदित्यादिना । व्यावल्गद्विशेषतआसमंताच्चलन्कुचभारोयत्र तथाआकुलाःक्रीडावेशेनेतस्ततःपर्यस्ताःकचाःकेशायत्रएवं व्यालोलादोला

यिताहारावलियत्र तथाप्रेंखद्भ्यांचंचलाभ्यांकुंडलाभ्यांशोभायुक्तंगंडयुगलंयत्र एवंप्रस्वेदयुक्तंवक्त्रांबुजंयत्र शर्भान्निरंतरंदत्तःकरेणप्रहारोयत्र तथाअधिकःश्वासोयत्र तथेति वृत्तांतःविपरीतरतरूपः अत्रापिकंदुकशब्दगतपुल्लिंगेननायकत्वाभिव्यक्तिर्बोध्या। श्लिष्टानीति श्लेषमूलकाभेदाध्यवसायविषयाणीत्यर्थः। साधारणानीति श्लेषंविनैवप्रकृताप्रकृतवृत्तांतयोरनुगतानीत्यर्थः। तथाचलक्षणेसाम्यशब्देनश्लेषकृतंस्वारसिकंचसाम्यंविवक्षितमितिभावः। सारूप्यात्सादृश्यात्।—

यथावा ॥ पुरायत्रस्रोतःपुलिनमधुनातत्रसरितांविपर्यासंयातोघनविरलभावःक्षितिरुहां ॥ बहोर्दृष्टंकालादपरमिवमन्येवनमिदंनिवेशःशैलानांतदिदमितिबुद्धिंद्रढयति॥अत्रवनवर्णनेप्रस्तुतेतत्सारूप्यात्कुटुंबिधनसंतानादिसमृद्ध्यसमृद्धिविपर्यासंप्राप्तस्यतत्समाश्रयस्यग्रामनगरादेर्वृत्तांतःप्रतीयते। अत्रच प्रस्तुताप्रस्तुतसाधारणविशेषणबलात्सारूप्यबलाद्वाऽप्रस्तुतवृत्तांतस्यप्रत्यायनंतत्प्रस्तुतेविशेष्येतत्समारोपार्थं सर्वथैवप्रस्तुतानन्वयिनःकविसंरंभगोचरत्वायोगात्। ततश्चसमासोक्तावप्रस्तुतव्यवहारसमारोपश्चारुताहेतुः। ननुरूपकइवप्रस्तुतेअप्रस्तुतरूपसमारोपोस्ति। मुखंचंद्रइत्यत्रमुखेचंद्रत्वारोपहेतुचंद्रपदसमभिव्याहारवद्रक्तश्चुंबतिचंद्रमाइत्यादिसमासोक्त्युदाहरणेचंद्रादौजारत्वाद्यारोपहेतोस्तद्वाचकपदसमभिव्याहारस्याभावात्। 'निरीक्ष्यविद्युन्नयनैःपयोदोमुखंनिशायामभिसारिकायाः ॥ धारानिपातैःसहकिंनुवांतश्चंद्रोयमित्यार्ततरंररासे' इत्येकदेशविवर्तिरूपकोदाहरणइवप्रस्तुतेअप्रस्तुतरूपसमारोपगमकस्याप्यभावात्। तत्रहिविद्युन्नयनैरित्यत्रनिरीक्षणानुगुण्यादुत्तरपदार्थप्रधानरूपमयूरव्यंसकादिसमासव्यवस्थितादुत्तरपदार्थभूतनयनान्वयानुरोधात्। पयोदेअनुक्तमपिद्रष्टृपुरुषत्वरूपणंगम्यमुपगम्यते ॥—

पुरेति। उत्तरचरितेसीतात्यागानन्तरंकदाचिद्वनम्प्रतिगतस्यभगवतोरामचन्द्रस्येयमुक्तिः। पुरावनवासकालेसरितांनदीनांस्रोतः प्रवाहोयत्रप्रदेशेआसीत्तत्राधुनापुलिन

स्तीतिशेषः । तथाक्षितिरुहांतरूणांघनविरलभावोविपर्यासंविपरीत्यंयातमाप्तः । सां द्राणांविरलताविरलानांशाखापल्लवादिवृद्ध्यासांद्रताजातेत्यर्थः । तथाचबहोर्भूयसः कालादनंतरंदृष्टमिदंवनमपरमन्यदिवमन्येपरंतुशैलानांपर्वतानांनिवेशोविन्यासविशेष स्तदेवेदंवनमितिबुद्धिंप्रत्यभिज्ञारूपांद्रढयतिदृढीकरोतीत्यर्थः । तत्सारूप्यादिति। वन सादृश्यादित्यर्थः । ग्रामादौ।किंवनसादृश्यमित्याकांक्षायांतद्गर्भविशेषणमाह । कुटुंबि ष्वित्यादि ।कुटुंबिपुकुटुंबिगतोयोधनसमृद्ध्यसमृद्ध्योर्विपर्यासस्तंप्राप्तस्येत्यर्थः। तत्स माश्रयस्यतादृशकुटुंबिसमाश्रयस्य । तथाचसमृद्ध्यसमृद्धिविपर्यासवदाश्रयत्वंसादृ श्यमितिभावः । किमस्यसादृश्यस्योत्थापकमितिचेत्घनविरलेतिविपर्यासमितिच । ताभ्यामुक्तसादृश्यगर्भीकरणात् । एतेनैषासादृश्यगर्भविशेषणोपस्थापितसादृश्यमूला समासोक्तिरितिमूलग्रंथानवबोधस्तद्विरोधश्चेतिदूषणमलग्नकंवेदितव्यम् । अथात्राप्रस्तु तवृत्तांतस्यविशेषणसाम्यगम्यत्वाभावादुक्तलक्षस्याव्याप्तिरितिचेन्न । विशेषणसाम्य गम्यसादृश्यगम्यत्वेपिविशेषणसाम्यगम्यत्वानपायात्। प्राधान्यानुपरंसारूप्यस्यगमक त्वोपदर्शनंसारूप्यादितिग्रंथेन । एवमग्रेपिविशेषणसाम्यात्सादृश्याद्वेतिविकल्पोक्ति रपिप्राधान्याभिप्रायैवेतिनिरवद्यं । एवमलंकारंनिरूप्यतद्बोधप्रकारमुपदर्शयितुंभूमि कामारचयति । अत्रचेति । अत्रएषूदाहरणेषु । अप्रस्तुतवृत्तांतस्येति । अप्रकृतजा रादिसंबंधिनश्चुंबनादिव्यवहारस्येत्यर्थः । विशेष्येचंद्रादौ । सर्वथाआरोपानारोपान्य तरविधया । प्रस्तुतानन्वयिनःप्रकृतान्वयशून्यस्य । यद्वा सर्वथैवेत्यस्यकवीत्यादिनान्व यः। कविसंरंभेतिस्वप्रतीत्युद्देश्यकशब्दसंदर्भरूपकविव्यापारेत्यर्थः । अप्रस्तुतवृत्तांतस्य चुंबनादेरिवाप्रस्तुतस्यजारादेरपिचंद्रादौसमारोपइतिमतंनिराकरोति। नत्विति।अप्रस्तु तरूपेति। अप्रस्तुतस्वरूपेत्यर्थः। कुतस्तत्राह मुखमित्यादि।तादात्म्येनचंद्रारोपेतादात्म्य स्यापिसंसर्गविधयाआरोपविषयत्वात्तस्यचचंद्रत्वानतिरेकाच्चंद्रत्वारोपेत्युक्तिः । नतुप्र कारतयाचंद्रत्वारोपउक्तइतिभ्रमितव्यम् । चंद्रइतिशब्देन। चंद्रविशेषणत्वेनोपस्थितस्य चंद्रत्वस्यमुखेविशेषणतयाऽरोपासंभवात् । एवंजारत्वेत्यत्र। पिबोध्यं। तद्वाचकेतिजारवा चकेत्यर्थः। ननुजारादिपदसमभिव्याहाराभावाच्छ्रौतारोपासंभवेप्यार्थोजाराद्यारोपो स्तु । नहितत्रापितादृशसमभिव्याहारोहेतुः रूपकध्वनेरुच्छेदापत्तेरित्याशंक्याह।निरी क्ष्येति । पयोदेमेघोविद्युत्स्वरूपैर्नयनैर्निशायामभिसारिकायामुखंवीक्ष्यधारानिपा तैःसहवांतःकिंस्वयंचंद्रइतिमत्वाआर्ततरंयथास्यात्तथाररासेआक्रंदनंकृतवानित्यर्थः । उदाहरणइवेतिव्यतिरेकदृष्टांतः । अत्रयथागमकमस्तितादृशस्यसमासोक्त्युदाहरणेअ भावादित्यर्थः । तथाचार्थोरोपोप्यनाशंक्यइतिभावः। ननु विद्युन्नयनैरित्यत्रकिमप्रस्तु तारोपगमकंयदभावात्समासोक्तौतदभावइत्यतोगमकंदर्शयितुमाह तत्रेति । आनुगु

ण्यादानुकूल्यात् । उपमितसमासस्यपूर्वपदार्थप्रधानतयानयनसदृशविद्युत्करणकत्व स्यनिरीक्षणेसंभवात्प्रतिकूलत्वमितिभावः । अनुक्तमप्यश्रौतमपि । रूपणमारोपः ।—

नचेहतथानिरीक्षणवत्त्वय्यागतेकिमितिवेपतएषासिंधुरिति श्लोकेसेतुकृत्वादिवच्चाप्रस्तुतासाधारणवृत्तांतउपात्तोऽस्ति । नाऽपिश्लिष्टसाधारणादिविशेषणसमर्पितयोःप्रस्तुताप्रस्तुत वृत्तांतयोरप्रस्तुतवृत्तांतस्यविद्युन्नयनवत्प्राधान्यमस्ति । येन तदनुरोधात्त्वंसेतुमंथकृदित्यत्रेवप्रस्तुतेनुक्तमप्यप्रस्तुतरूपस मारोपमभ्युपगच्छेम।तस्माद्विशेषणसमर्पिताप्रस्तुतव्यवहार समारोपमात्रमिहचारुताहेतुः। यद्यपि प्रस्तुताप्रस्तुतवृत्तांत योरिहश्लिष्टसाधारणविशेषणसमर्प्पितयोर्भिन्नपदोपात्तविशे षणयोरिवविशेष्येणैवसाक्षादन्वयादस्तिसमप्राधान्यम् त थाप्यप्रस्तुतवृत्तान्तान्वयानुरोधान्नप्रस्तुतेऽप्रस्तुतरूपसमारो पोंगीकार्यः । तथाहि । यथाप्रस्तुतविशेष्येऽप्रस्तुतवृत्तांतस्या न्वयायोग्यतातथैवाप्रस्तुतेपिजारादौनास्तिप्रस्तुतवृत्तांतस्या न्वययोग्यता । एवंच समप्रधानयोःप्रस्तुताप्रस्तुतवृत्तांतयो रन्यतरस्यावश्यमारोपेभ्युपगन्तव्येश्रुतएवप्रस्तुतेऽप्रस्तुतस्या रोपश्चारुताहेतुरितियुक्तम् । नन्वेवंसतिविशेषणसाम्यादप्र स्तुतस्यगम्यत्वंसमासोक्तिः । 'विशेषणानांसाम्येनयत्रप्रस्तु तवर्तिनां ॥ अप्रस्तुतस्यगम्यत्वंसासमासोक्तिरिष्यते' इ त्यादीनिप्राचीनानांसमासोक्तिलक्षणानिनसंगच्छेरन् । प्रस्तु तेश्लिष्टसाधारणादिविशेषणसमर्प्पितानुरागपूर्वकवदनचुम्ब नाद्यप्रस्तुतवृत्तांतसमारोपमात्रस्यचारुताहेतुत्वाभ्युपगमेन विशेषणसाम्यकृतकामुकाद्यप्रस्तुतधर्मिव्यंजनानपेक्षणादि तिचेदुच्यते ॥—

नचेहेति । इहसमासोक्त्युदाहरणे । तथानिरीक्षणवन्नयनकरणकनिरीक्षणवत्से तुकृत्वादीत्यादिनामंथनकारित्वपरिग्रहः । नन्विहापिपरनायिकामुखचुंबनरूपस्या प्रस्तुतवृत्तांतस्याप्रस्तुतासाधारणधर्मत्वादप्रस्तुतारोपगमकत्वंस्यादित्याशंक्यपरिहरति

नापीति । साधारणादीत्यादिनासादृश्यगर्भविशेषणसंग्रहः । वृत्तांतयोरितिनिर्धारणे षष्ठी । वृत्तांतयोर्मध्येइत्यर्थः । विद्युन्नयनवदिति । प्रस्तुताप्रस्तुतयोर्विद्युन्नयनयोर्मध्येयथानयनस्योत्तरपदार्थप्रधानसमासात्प्राधान्यंतथानास्तीत्यर्थः । सेतुमंथकृदिति पाठः । सेतुबंधकृदितित्वपपाठःकथंचिदर्थतोऽनुवादत्वेनव्याख्येयः । उपसंहरति तस्मादिति । मात्रपदेनाऽप्रस्तुतारोपव्यवच्छेदः। विद्युन्नयनवत्समासकृतश्रौतप्राधान्याभावेपिविशेषणसामर्थ्यात्रगतस्यप्रस्तुतवृत्तांतस्यार्थतःप्राधान्यमस्तीतिशंकते । यद्यपीति । नन्वप्रस्तुतवृत्तांताभिन्नत्वेनावगतस्यप्रस्तुतवृत्तांतस्यप्रस्तुतविशेष्येणान्वयात्कथमप्रस्तुतवृत्तांतस्यप्राधान्यमितिशंकानिरासायाह विशेष्येणैवेति । ननु तद्विशेषणीभूतप्रस्तुतवृत्तांतेनेत्येवकारार्थः । समाधत्तेतथापीति । अयमाशयः । नात्रश्लिष्टादिविशेषणैःसमर्पितःपरनायिकामुखचुंबनादिरूपोऽप्रस्तुतवृत्तांतःप्रागेवकयापिव्युत्पत्त्याप्रस्तुतगतत्वेनभासते । यद्बलादप्रस्तुतजाराद्यारोपावगतिःस्यात् । अपितुताटस्थ्येनावगतेतस्मिन्प्रस्तुतासंवद्धस्यकविसंरंभगोचरत्वायोगात्प्रस्तुतसमारोपितत्वेनपर्यवसानमिति । नन्वेवंतर्हिप्रस्तुतवृत्तांतस्याप्यप्रस्तुतवृत्तांताश्रयेधर्मिण्यन्वयोस्तु । असंवद्धाभिधानप्रसंगपरिहारस्यतुल्यत्वादित्याशंक्याह । तथाहीत्यादि । एवंचयोग्यतारूपविनिगमकविरहेच मास्तुतर्हिकस्याप्यन्वयस्तत्राह । अवश्यमिति । अन्यथाऽसंवद्धाभिधानप्रसंगापत्तेरितिभावः । किंतर्हिविनिगमकंतत्राह । श्रुतएवेति । तथाचश्रुतप्रस्तुतार्थोपस्कारकतयाचमत्कारहेतुत्वमेवविनिगमकमितिभावः । अप्रस्तुतस्याप्रस्तुतवृत्तांतस्य । नन्वेवमिति । एवमप्रस्तुतसमारोपानंगीकारे विशेषणानामित्यादिविद्यानाथोक्तंलक्षणं । प्रस्तुतवर्तिनांविशेषणानांसाम्येनेनेत्यन्वयः । प्रस्तुतेसमारोपार्थम् ।—

स्वरूपतोऽप्रस्तुतवृत्तांतस्यारोपोनचारुताहेतुः । किंत्वप्रस्तुतकामुकादिसंबंधित्वेनावगम्यमानस्यतस्यारोपः। तथाभूतस्यैवरसानुगुणत्वात् । नचतावदवगमनेविशेषणपदानांसामर्थ्यमस्ति । अतःश्लेषादिमहिम्नाविशेषणपदैःस्वरूपतःसमर्पितेनवदनचुंबनादिनातत्संबंधिनेकामुकादावभिव्यक्तेपुनस्तदीयत्वानुसंधानंतत्रभवति।यथास्वरूपतोदृष्टेनराजाश्वादिनातत्संबंधिनिराजादौस्मारितेपुनरश्वादौतदीयत्वानुसंधानमिति विशेषणसाम्येनवाच्योपस्कारकस्याप्रस्तुतव्यंजनस्यास्त्यपेक्षा।अतएवश्लिष्टविशेषणायामिवसाधारणविशेषणायामप्यप्रस्तुतव्यवहारसमारोपइत्येवप्राचीनानांप्रवादः। कंदुकेऽप्या

वल्गत्कुचभारत्वादिविशिष्टवनितासेव्यत्वस्यकामुकसंबंधित्वेनैवसमारोपणीयत्वात्। स्वरूपतःकंदुकेपितस्यसत्वेनासमारोपणीयत्वात्।किंचसारूप्यानिबंधनत्वेनोदाहृतायांसमासोक्तावप्रस्तुतवृत्तांतस्याशब्दार्थस्याप्रस्तुतवृत्तान्तरूपेणैवगम्यतयातेनरूपेणतत्रसमारोपसिद्धेः । अन्यत्रापितथैवयुक्तमितियुक्तमेवप्राचीनानांलक्षणमितिविभावनीयं ॥६०॥

अप्रस्तुतधर्मिव्यंजनानपेक्षायामपि समारोप्यमाणवृत्तान्तविशेषणत्वार्थे तदपेक्षणात्र लक्षणासंगतिरित्याह । स्वरूपतइत्यादि । स्वरूपतोऽप्रस्तुतसंबंधित्वेनाज्ञायमानस्य नन्वपेक्षासत्वेऽपिविशेषणसाम्यस्यतद्व्यंजनासामर्थ्याल्लक्षणासंगतितादवस्थ्यमित्याशंक्यसाक्षादसामर्थ्येपिवृत्तांताभिव्यक्तिद्वारातत्संभवान्नदोषइत्याह ।नचेत्यादि । तदीयत्वानुसंधानंकामुकसंबंधित्वानुसंधानं । तत्रमुखचुंबनादौ । अनुसंधानंतद्वतिपाठः । अनुसंधानवदितिपाठेयथेत्यस्यासंगतेःअतएवाप्रस्तुतव्यंजनस्यापेक्षणादेव । नन्वप्रस्तुतधर्मिव्यंजनानपेक्षणेईदृशःप्रवादःकुतोनयुक्तस्तत्राह । कंदुकइति। विशिष्टेत्यस्यसेव्यत्वेनान्वयः।संबंधित्वेनैवेत्येवकारोक्तमेवार्थंसोपपत्तिकमाह स्वरूपइति। अप्रस्तुतकामुकसंबंधित्वानालिंगितरूपेणेत्यर्थः। तथाचारोपासंभवात्तादृशप्रवादानुपपत्तिरिति भावः।श्लिष्टविशेषणायामयमैंद्रीत्यादौमुखचुंबनादेःस्वरूपतोप्यारोपस्यैवसत्त्वात्साधारणविशेषणायामुपष्टंभकत्वेनप्रवादोपन्यासः । ननुतत्रापिताहशवनितासेव्यत्वस्यतादृशवनिताकृतविपरीतरतपात्रत्वरूपस्याप्रस्तुतवृत्तांतरूपस्यस्वरूपतोप्यारोपस्यैवसंभवान्नतादृशप्रवादानुपपत्तिरतआह।किंचेति।युक्तमिति।तत्सामान्यादितरेषुतथात्वमितिन्यायादितिभावः।लक्षणमितिजातावेकवचनं।तदेवमुक्तरीत्या'अयमैंद्रीमुखंपश्यरक्तश्चुंबतिचंद्रमाः' इत्यत्रशक्तिव्यंजनाभ्यांप्राचीप्रारंभसंबंधाश्रयश्चंद्रोजारसंबंधिसानुरागपरनायिकामुखचुंबनाश्रयइतिबोधः। अप्रस्तुतवृत्तांताभिन्नत्वेनाध्यवसितस्यप्रस्तुतवृत्तांतस्यतादात्म्येनाप्रस्तुतारोपविषयेप्रस्तुतधर्मिण्यन्वयइतिमतेतुसानुरागपरनायिकामुखचुंबनाभिन्नप्राचीप्रारंभसंयोगाश्रयोजाराभिन्नश्चंद्रइतिबोधः। एवमुदाहरणांतरेप्यनेनैवप्रकारेणबोधप्रकाराऊहनीयाः ॥ ६० ॥ इत्यलंकारचंद्रिकायांसमासोक्तिप्रकरणम्

अलंकारः परिकरः साभिप्रायेविशेषणे ॥ सुधांशुकलितोत्तंसस्तापंहरतुवःशिवः ॥ ६१ ॥

अत्रसुधांशुकलितोत्तंसइतिविशेषणंतापहरणसामर्थ्याभिप्रायगर्भम्। यथावा॥ तवप्रसादात्कुसुमायुधोपिसहायमेकंमधु

मेवलब्ध्वा॥ कुर्यांहरस्यापिपिनाकपाणेर्धैर्यच्युतिंकेममधन्विनोन्ये॥ अत्रपिनाकपाणेरितिहरविशेषणंकुसुमायुधइत्यर्थलभ्याहमर्थविशेषणंचसारासारायुधत्वाभिप्रायगर्भं। यथावा॥ सर्वाशुचिनिधानस्यकृतघ्नस्यविनाशिनः॥ शरीरकस्यापिकृतेमूढाःपापानिकुर्वते॥ अत्रशरीरविशेषणानितस्यहेयत्वेनासंरक्षणीयत्वाभिप्रायगर्भाणि।व्यास्थंनैकतयास्थितंश्रुतिगणंजन्मीनवल्मीकतोनाभौनाभवमच्युतस्यसुमहद्भाष्यंचनाभाषिषं॥चित्रार्थांनबृहत्कथामचकथंसुत्राम्णिनासंगुरुर्देवत्वद्गुणवृंदवर्णनमहंकर्तुंकथंशक्नुयां॥ अत्रश्रुतिगणंनव्यास्थमित्यादीनिविशेषणानिस्वस्मिन्व्यासाद्यसाधारणकार्यकर्तृत्वनिषेधमुखेननाहंव्यासइत्याद्यभिप्रायगर्भाणि।—

गुणीभूतव्यंग्यप्रभेदभूतसमासोक्त्यलंकारप्रसंगात्तत्प्रभेदंपरिकरालंकारंलक्षयति। अलंकारइति। अलंकारत्वोत्कीर्तनंचदोषाभावेनैवगतार्थत्वमितिशंकानिरासार्थं। तत्प्रपंचनंचाग्रेकरिष्यते। साभिप्राये प्रकृतार्थोपपादकार्थविषयकाभिप्रायपूर्वकंतथाभूतार्थव्यंजकइतियावत्। इत्थंचप्रकृतार्थोपपादकार्थव्यंजकविशेषणत्वंलक्षणंबोध्यं। ध्वनावतिव्याप्तिवारणायप्रकृतार्थोपपादकेति। हेत्वलंकारवारणायबोधकत्वंविहायव्यंजकत्वनिवेशः। वक्ष्यमाणपरिकरांकुरालंकारवारणायविशेषणेति। तत्रतुविशेष्यंतथेतिनातिप्रसंगः सुधांश्विति। सुधांशुनाकलितःकृतउत्तंसःशेखरोयेनसइतिहरविशेषणं। उत्तंसःकर्णपूरेस्याच्छेखरेचावतंसवदितिविश्वः। सामर्थ्याभिप्रायंसामर्थ्यव्यंजकं। तवेति। इंद्रंप्रतिकामस्योक्तिः। तवप्रसादात्कुसुमायुधोप्यहंमधुंवसंतमेवैकंमुख्यंसहायंलब्ध्वापिनाकोधनुर्विशेषःपाणौयस्यतादृशस्यापिहरस्यधैर्यच्युतिंधैर्यस्खलनंकुर्यां। अन्येधन्विनोधनुर्धरामम पुरःकेअगणनीयाइत्यर्थः। कुसुमायुधइतिविशेषणंचेत्यन्वयः। अर्थलभ्येति। कुर्यामित्युत्तमपुरुषाक्षिप्तेत्यर्थः। अभिप्रायगर्भमभिप्रायपूर्वकं। अतएवावयवार्थमात्रविश्रांतत्वाद्धरपदेननपौनरुक्त्यमपि। सर्वेति। सर्वेषामशुचीनांरक्तपूयरेतोविण्मूत्रादीनांनिधानस्यस्थानभूतस्यकृतघ्नस्योत्तमान्नपानादिकृतोपकारनाशकस्य। शरीरकस्येतिनिंदायांकप्रत्ययः। कृतेतदर्थं तत्संरक्षणार्थमितियावत्। विशेषणानिपूर्वार्धोक्तानि। तस्यशरीरस्य। व्यास्थामिति। राजानंप्रतिकवेरुक्तिः हेदेवराजन्त्वद्गुणानांवृंदस्यसमूहस्यवर्णनंकर्तुमहंकथंशक्नुयांशक्तोभवेयमित्यन्वयः।कुतस्तत्राह। यतोहमेकरूपतयास्थितंवेदसमूहंनव्यास्थमनेकशाखारूपेणन

विस्तारिवान् । तथाचतत्कर्ताव्यासोनभवामीतिव्यज्यते । एवमग्रेपि । वल्मीकतोवल्मीकाज्जन्माऽस्यास्तीतिजन्मी नभवामीतिशेषः तथाचनाहंवाल्मीकिरिति। अच्युतस्यनाभौनाऽभवंनोत्पन्नइसनेननाहंचतुर्मुखइति । सुमहद्भाष्यंमहाभाष्यंचनाभापिपंनभाषितवानिसनेननाहंसहस्रजिव्हःशेषइति । चित्रोविचित्रोर्थोयस्यास्तांबृहत्कथांनअचकथंकथितवानिसनेननाहंतद्वक्ताशिवोगुणाढ्योवेति ।सुत्राम्णिइंद्रेगुरुरुपदेशकोनासमिसनेननाहंवाक्पतिरितिचव्यज्यते ।–

तत्राद्ययोरुदाहरणयोरेकैकंविशेषणंसमनंतरयोःप्रत्येकंबहूनि विशेषणानि । तत्रापिप्रथमोदाहरणेसर्वाणिविशेषणान्येकाभिप्रायगर्भाणिपदार्थरूपाणिच । द्वितीयोदाहरणेभिन्नाभिप्रायगर्भाणिवाक्यार्थरूपाणिचेतिभेदः । एतेषुव्यंग्यार्थसद्भावेपिनध्वनिव्यपदेशः। शिवस्यतापहरणेमन्मथस्यकैमुतिकन्यायेनसर्वधन्विधैर्यभंजकत्वेशरीरसंरक्षणार्थंपापमाचरतांमूढत्वेस्वस्यवर्णनीयराजगुणकथनाशक्तत्वेचवाच्यएवोपस्कारकत्वात् । अतएवव्यंग्यस्यवाच्यपरिकरत्वात्परिकरइतिनामास्यालंकारस्य। केचित्तुनिष्प्रयोजनविशेषणोपादानेऽपुष्टार्थत्वदोषस्योक्तत्वात्सप्रयोजनत्वं विशेषणस्यदोषाभावमात्रंनकश्चिदलंकारः। एकनिष्ठताद्दशानेकविशेषणोपन्यासेपरंवैचित्र्यविशेषात्परिकरइत्यलंकारमध्येपरिगणितइत्याहुः । वस्तुतस्त्वनेकविशेषणोपन्यासएवपरिकरइतिननियमः । श्लेषयमकादिष्वदुष्टार्थदोषाभावेनतत्रैकस्यापिविशेषणस्यसाभिप्रायस्यविन्यासेविच्छित्तिविशेषसद्भावात्परिकरोपपत्तेः ।–

उक्तेषूदाहरणेषुवैलक्षण्यंदर्शयति तत्रेसादिना । एकैकमेकस्यविशेष्यस्यैकमेव समनन्तरयोरनन्तरोक्तयोःप्रत्येकमेकंविशेष्यंप्रति तत्रापितयोर्मध्येपि एकाभिप्रायगर्भाण्येकार्थाभिप्रायपूर्वकाणि । वाक्यार्थेति । नव्यासधर्मिसादिनिषेधवाक्यार्थपट्कस्योक्तरीत्याहेतुलेनांतिमवाक्यार्थेविशेषणत्वादितिभावः । एतेषुउक्तोदाहरणेषु । ध्वनिव्यपदेशोध्वनिव्यवहारः । तत्रहेतुमाह तापहरणेसादिना । तापहरणेइसादिसप्तम्यंतचतुष्टयस्यवाच्यइसनेनसामाधिकरण्येनान्वयः । उपस्कारकत्वादिति । तथाचापरांगरूपगुणीभूतव्यंग्यभेदत्वान्नध्वनिव्यवहारइतिभावः । नन्वेवमपियथाश्रुतलक्षणस्य

निःशेषच्युतेत्यादिध्वनावतिव्याप्तिरित्यतआह अतएवेति । न्यूनोपस्कारकत्वादेवेत्यर्थः।परिकरत्वादंगत्वात्। तथाचपरिकरपदमहिम्नाप्रकृतार्थोपपादकत्वस्यव्यंग्यविशेषणस्यलाभान्नातिव्याप्तिरितिभावः । अपुष्टार्थेतिभावप्रधानं । उक्तत्वादिति । अर्थोऽपुष्टःकष्टोव्याहतपुनरुक्तदुःक्रमग्राम्याइत्यादिनाऽलंकारिकैरुक्तत्वादित्यर्थः । कथं तर्हितैरेवास्यालंकारत्वेनकथनमतआह एकनिष्ठेति । तादृशेतिसाभिप्रायेत्यर्थः । दोषाभावेनेति । अपुष्टार्थत्वस्यदोषत्वाभावेनेत्यर्थः।उद्भटालंकारसंपत्त्यासहृदयैवमुख्यरूपदूषकताबीजाभावादितिभावः विच्छित्तिश्चमत्कृतिः परिकरत्वोपपत्तेःपरिकरस्यालंकारत्वोपपत्तेः । तत्रदोषःस्यात्असत्यांविच्छित्तिविशेषस्यतदभावयुक्तत्वासंभवात्तत्प्रयोजकमलंकारत्वमावश्यकमितिभावः—

यथा॥अतियजेतनिजांयदिदेवतामुभयतश्च्यवतेजुषतेप्यघं॥ क्षितिभृतैवसदैवतकावयंवनवतानवताकिमहिद्रुहा॥अत्रहि पुरुहूतपूजोद्युक्तान्नंदादीन्प्रतिभगवतःकृष्णस्यवाक्येगोवर्धनगिरिरेवचास्माकंरक्षकत्वेन दैवतमितिसएवपूजनीयोनत्व रक्षकःपुरुहूतइत्येवंपरेवनवतेतिगोवर्द्धनगिरेर्विशेषणंकाननवत्त्वान्निर्झरादिमत्त्वाच्चपुष्पमूलफलतृणादिभिरारण्यकानामस्माकमस्मद्धनानांगवांचायमेवरक्षकइत्यभिप्रायगर्भं । एवमत्रसाभिप्रायैकविशेषणविन्यासस्याऽपिविच्छित्तिविशेषवशादस्यसाभिप्रायस्याऽलंकारत्वासिद्धावन्यत्रापिसुधांशुकलितोत्तंसइत्यादौतस्यात्मलाभोननिवार्यते । अपिच एकपदार्थहेतुकंकाव्यलिंगमलंकारइतिसर्वसंमतं तद्वदेकस्यापिविशेषणस्यसाभिप्रायस्यालंकारत्वंयुक्तमेव ॥ ६१ ॥

यमकस्थलेउदाहरति। यथेति। निजांदेवतामतिक्रम्ययदियजेत अर्थाद्देवतांतरंपूजयेत् तदोभयतोलोकद्वयाच्च्यवतेभ्रश्यत्यघंपापमपिजुषतेसेवतेप्राप्नोतीतियावत् । कानिजा देवतातत्राह । वयंवनवताप्रशस्तवनयुक्तेनक्षितिभृतागोवर्द्धनगिरिणैवसदैवतकादैवत सहिताः । सएवास्माकंदैवतमित्यर्थः । अनवताऽरक्षकेण । अहिद्रुहाइंद्रेण । किंमयोजनमितिशेषः । अहिर्वृत्रासुरः।अहिर्वृत्रासुरेसर्पेइतिविश्वः । नन्वेवंसतितत्रैवालंकारतास्यान्नतुसुधांशुकलितोत्तंसइत्यादावतआह एवमिति। विच्छित्तिविशेषेतिदोषाभावयुक्तविच्छित्त्याव्यावृत्तेत्यर्थः॥ ननु यमकादावपितादृशविच्छित्तिविशेषेमानाभावः॥

विच्छित्तिसामान्यंतुपर्युदस्तदोषाभावेनाप्युपपन्नम्। आपत्कालपर्युदस्तस्यमृच्छौचहीनतादोषस्याभावेनैवतदानीमपिमृच्छौचकर्तुरतिशयाधानमितिनालंकारत्वसिद्धिरिस्यतआह अपिचेति।'भस्मोद्धूलनभद्रमस्तुभवतेरुद्राक्षमालेशुभंहासोपानपरंपरेगिरिसुताकांतालयालंकृतिः ॥ आद्याराधनतोपितेनविभुनायुष्मत्सपर्यासुखालोकोच्छेदिनिमोक्षनामनिमहामोहेनिलीयामहे' इत्यादौमोक्षस्यमहामोहत्वेसुखालोकोच्छेदित्वं सुखालोकोच्छेदिनीत्येकपदार्थोहेतुरितिकाव्यलिंगमलंकारत्वेनयथास्वीकृतंनतुनिर्हेतुत्वदोषाभावमात्रतयाविच्छित्तिविशेषस्यानुभवसिद्धत्वात्तथेहापीतिभावः ॥ ६१ ॥ इत्यलंकारचंद्रिकायांपरिकरप्रकरणम् ॥

साभिप्रायेविशेष्येतुभवेत्परिकरांकुरः ॥ चतुर्णांपुरुषार्थानांदातादेवश्चतुर्भुजः ॥ ६२ ॥

अत्रचतुर्भुजइतिविशेष्यंपुरुषार्थचतुष्टयदानसामर्थ्याभिप्रायगर्भं । यथावा ॥ फणींद्रस्तेगुणान्वक्तुंलिखितुंहैहयाधिपः ॥ द्रष्टुमाखंडलःशक्तःक्वाहमेषक्वतेगुणाः । फणींद्रइत्यादिविशेष्यपदानिसहस्रवदनाद्यभिप्रायगर्भाणि ॥ ६२ ॥

साभिप्रायइति । अत्रविशेषणपदस्थानेविशेष्येतिप्रक्षिप्यपूर्ववल्लक्षणंबोध्यं । तच्च परिकरेऽतिव्याप्तिवारणार्थं लक्ष्येलक्षणंसंगमयति अत्रेति । यद्यपिदेवांतरव्यावर्तकतयाचतुर्भुजइतिविशेषणंतथापिनृपादिसाधारणदेवपदशक्तेर्विष्णौनियमनेनविशेष्यप्रतीत्यौपयिकतयाविशेष्यपदत्वमभिमतंबोध्यं । असंदिग्धमुदाहरति । फणींद्रइति । राजानंप्रतिकवेरुक्तिः । तवगुणान्वक्तुंफणींद्रःशेषोऽसमर्थइत्यध्याहार्यं । एवमग्रेपि । हैहयाधिपःकार्तवीर्यः । आखंडलइंद्रः । उभयत्रगुणानित्यनुषज्यते । एषमर्त्यधर्मः । अहंक्वतेगुणाःक्वेतिक्वशब्दौमहदंतरंसूचयतः । सहस्रमुखत्वादीत्यादिनासहस्रबाहुत्वसहस्रनयनत्वयोःसंग्रहः । अत्रानेकेषांविशेष्यपदानांतत्तदभिप्रायगर्भत्वंविशेषः ॥ ६२ ॥ इतिपरिकरांकुरप्रकरणम् ॥

नानार्थसंश्रयः श्लेषोवर्ण्यावर्ण्योभयाश्रितः॥सर्वदोमाधवः पायात्सयोगंगामदीधरत् ॥६३॥ अब्जेनत्वन्मुखंतुल्यंहरिणाहितसक्तिना॥उच्चरद्भूरिकीलालः शुशुभेवाहिनीपतिः६४

अनेकार्थशब्दविन्यासः श्लेषः सचात्रिविधः प्रकृतानेकविषयः अप्रकृतानेकविषयःप्रकृताप्रकृतानेकविषयश्च ।सर्वदेत्यादिक्

मेणोदाहरणानि। तत्रसर्वदोमाधवइतिस्तोतव्यत्वेनप्रकृतयो र्हरिहरयोःकीर्तनंप्रकृतश्लेषः । अब्जंकमलमब्जश्चंद्रस्तयोरुप मानमात्रत्वेनाप्रकृतयोः। कीर्तनमित्यप्रकृतश्लेषः। वाहिनीप तिःसेनापतिःसमुद्रश्च ॥ तत्रसमितौशस्त्रप्रहारोत्पतद्रुधिरस्य सेनापतेरेववर्णनंप्रकृतमितिप्रकृताप्रकृतश्लेषः। यथावा ॥ त्रा तःकाकोदरोयेनद्रोग्धापिकरुणात्मना ॥ पूतनामारणख्यातः समेस्तुशरणंप्रभुः ॥ नीतानामाकुलीभावंलुब्धैर्भूरिशिलीमु खैः॥ सदृशेवनवृद्धानांकमलानांत्वदीक्षणे ॥ असावुदयमारू ढः कांतिमान्रक्तमंडलः ॥ राजाहरतिलोकस्यहृदयंमृदुलैः करैः॥तत्राद्येस्तोतव्यत्वेनप्रकृतयोः रामकृष्णयोःश्लेषः द्विती येउपमानत्वेनाप्रकृतयोःपद्महरिणयोःश्लेषः । तृतीये राजा हरतिलोकस्येतिचंद्रवर्णनप्रस्तावेप्रकृतस्यप्रत्यग्रोदितचंद्रस्या प्रकृतस्यनवाभिषिक्तस्यनृपतेःश्लेषः।—

श्लेषंलक्षयति ॥नानार्थेति। नानार्थस्यशब्दस्यसंश्रयेयोजनंश्लेषइतिलक्षणं।वर्ण्येत्या दिविभागः । वर्ण्यंचावर्ण्यंचवर्ण्यावर्ण्योभयंचएतत्त्रयाश्रितस्तद्विषयइत्यर्थः । सर्वेति । सर्वदःसमाधवःपायात् यःअगंगोवर्धनपर्वतंगांपृथ्वींचवराहावतारेधृतवानितिविष्णुप क्षे।हरपक्षेतु सउमाधवःसर्वदापायात्। योगंगांधृतवानित्यर्थः। हरिणेनमृगेणांकरूपतया आहिताकृतासक्तिःसंगोयस्येतिचंद्रपक्षे।हरिणासूर्येणेतिकमलपक्षे उच्चरच्छस्त्रपातैरुद्ग च्छत्कीलालंरुधिरंयस्यसवाहिनीपतिःसेनापतिः । तथावाहिनीनांनदीनांपतिःसमुद्र श्चेतिपक्षेकीलालंजलं। समितौसंग्रामे । त्रातइति । येनकरुणायुक्तांतःकरणेनद्रोहकर्ता पिअदरोभयशून्यःकाकस्त्रातोरक्षितोनतुहतः । सपवित्रनामा । रणेख्यातोविभूरामोमे शरणमस्त्वित्यर्थः। कृष्णपक्षेतुकाकोदरःकालियसर्पः पूतनायाराक्षस्यामारणेनख्यात इतिशेषः । नीतानामिति । दयितांप्रतिनायकोक्तिः । तवईक्षणेनेत्रेकमलानांपद्मानां हरिणानांचसदृशेस्तइत्यन्वयः। कीदृशानांवनेजलेअरण्येचवृद्धिंप्राप्तानाम् । तथालु ब्धैर्लोभशीलैर्भूरिभिःशिलीमुखैर्भ्रमरैराकुलीभावंव्याप्ततांनीतानामितिपद्मपक्षे । हरि णपक्षेतु लुब्धैःव्याधैःकर्तृभिर्भूरिशिलीमुखैर्बाणैःकरणभूतैराकुलीभावंचपलतांनीता नामित्यर्थः। मृगप्रभेदेकमलइतिविश्वः। असाविति । उदयंशैलमभिवृद्धिंच रक्तंरक्तव र्णमनुरक्तंच मंडलंबिंबंदेशश्च राजाचंद्रोनृपश्च मृदुलैरभिनवैरल्पैश्च करैःकिरणैर्ग्राह्यध नैश्च । प्रत्यग्रोदितेतिअभिनवोदितेत्यर्थः—

यदत्रप्रकृताप्रकृतश्लेषोदाहरणेशब्दशक्तिमूलध्वनिमिच्छंति प्राञ्चः । तत्प्रकृताप्रकृताभिधानमूलकस्योपमादेरलंकारस्य व्यंग्यत्वाभिप्रायंनत्वप्रकृतार्थस्यैवव्यंग्यत्वाभिप्रायं। अप्रकृतार्थस्यापिशक्त्याप्रतिपाद्यस्याभिधेयत्वावश्यंभावेनव्यक्त्यनपेक्षणात् । यद्यपिप्रकृतार्थेप्रकरणबलाज्झटितिबुद्धिस्थेसत्येव पश्चान्नृपतितद्राह्यधनादिवाचिनांराजकरादिपदानामन्योन्यसन्निधानबलात्तत्तद्विषयशक्त्यंतरोन्मेषपूर्वकमप्रस्तुतार्थःस्फुरेत् । नचैतावतातस्यव्यंग्यत्वं। शक्त्याप्रतिपाद्यमानेसर्वथैव व्यक्त्यनपेक्षणात्पर्यवसितेप्रकृतार्थाभिधानेपश्चात्स्फुरतिचेत् कामंगूढश्लेषोभवतु । अस्तिचान्यत्रापिगूढश्लेषः ॥—

ननु प्रकरणेनाभिधायानियमनादप्रकृतार्थस्यव्यंग्यत्वमेवेतिकथंश्लेषइत्याशंक्याह यदिति । अलंकारस्येति । नचैवंशब्दशक्तिमूलवस्तुध्वनेरुच्छेदइतिवाच्यम् । 'शनिरशनिश्चतमुच्चैर्निहंतिकुप्यसिनरेंद्रयस्मैत्वं । यत्रप्रसीदसिपुनःसभात्युदारोनुदारश्च'इत्यत्र शनिविरुद्धरूपेप्रस्तुतेऽशनिशब्देनाभिधयाप्रतीयमानेऽपितन्मूलकस्यविरुद्धावपित्वदनुवर्तनार्थमेकंकार्यंकुरुतइतिवस्तुध्वनेरशनिशब्दव्यक्तिमूलस्यसंभवात् । अलंकारस्येत्यस्योपलक्षणत्वात् । अन्योन्यसन्निधानबलात्परस्परार्थसंबंध्यर्थवाचकशब्दसमभिव्याहाररूपशब्दांतरसन्निधिबलात् । तथाचाप्रकृतेप्यभिधानियामकमस्तीतिभावः एतावतापूर्वापरभावमात्रेणतस्याप्रकृतार्थस्यगूढश्लेषइति । गूढत्वंचाप्रकृतत्वेनद्वितीयार्थस्यशीघ्रमप्रत्ययात् ।—

अयमतिजरठाः प्रकामगुर्वीरलघुविलंबिपयोधरोपरुद्धाः॥ सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्ति ॥ मंदमग्निमधुरर्यमोपलादर्शितश्वयथुचाभवत्तमः ॥ दृष्टयस्तिमिरजंसिषेविरेदोषमोषधिपतेरसन्निधौ॥अत्रहिसमासोक्त्युदाहरणयोःप्राकरणिकेर्थेप्रकरणवशाज्झटितिबुद्धिस्थेविशेषणसाम्यादप्रकृतोपिवृद्धवेश्यावृत्तांतादिः प्रतीयते तत्रसमासोक्तिरभंगश्लेषइतिसर्वेषामभिमतमेव।एवमन्यत्रापिगूढश्लेषेध्वनिबुद्धिर्नकार्या ॥—

अयमिति । माघेरैवतकगिरिवर्णनं । अयंगिरिस्तटीर्बिभर्तीत्यन्वयः । किंभूताः ।

अतिजरठा अत्यंतकठिनाः । प्रकामगुर्वीरतिमहत्यः । अलघुभिर्विलंबमानैर्मेघैर्व्याप्ताः । निरंतरंप्राणिनामगम्यरूपाःपरिणतातिर्यक्दंतप्रहारिणोदिग्गजायास्तुताः । वृद्धवेश्यापक्षेतुजरठाजीर्णाःपयोधराःकुचाःअगम्याःसंगमायोग्याःपरिणतेप्रकटेदिक्करिकेयासांताइत्यर्थः । दिग्वर्तुलंदशनक्षतं करिकानखक्षतं । दिग्दष्टंवर्तुलाकारंकरिकानखरेखिकेतियादवः । मंदमिति ओषधीनांपत्युश्चंद्रस्यासन्निधौसत्यर्यमोपलाःसूर्यकांतामंदीभूतमणिंधृतवंतः । तमःदर्शिनःश्वयथुःपुष्टत्वंयेनतथाऽभवत् । दृष्टयस्तिमिरजंदोषमांध्यंसिषेविरे । पक्षांतरे ओषधिपतिर्वैद्यः । एवंमंदाग्निखशोथतिमिराणिरोगविशेषाः । वृत्तांतादिरित्यादिपदाद्रोगिवैद्यवृत्तांतःपरिगृह्यते । अभंगश्लेषइति । तथाचश्लेषस्थलेव्यंजनाविरहादभक्ततेतत्स्वीकारेश्लेषव्यवहारःसर्वेषामनुपपन्नःस्यादितिभावः ॥—

यथावा ॥ रम्याइतिप्राप्तवतीःपताकारागंविविक्ताइतिवर्द्धयंतीः ॥ यस्यामसेवंतनमद्वलीकाःसमंवधूभिर्वलभीर्युवानः ॥ अत्रद्वितीयांतविशेषणसमर्पितार्थांतराणांनशब्दसामर्थ्येनवधूभिरन्वयः विभक्तिभेदात् । नचविभक्तिभेदेपितदन्वयाक्षेपकंसाधर्म्यमिहनिबद्धमस्ति । यतः 'एतस्मिन्नाधिकपयःश्रियंवहंत्यःसंक्षोभंपवनभुवाजवेननीताः ॥ वाल्मीकेररहितरामलक्ष्मणानांसाधर्म्यंदधतिगिरांमहासरस्यः ॥' इत्यत्रेवाक्षिप्तश्लेषोभवेत् ॥—

रम्याइति । माघएवद्वारकावर्णनम् । यस्यांद्वारकायांयुवानोवधूभिःसमंवलभीःप्रासादोपरितनगृहाण्यसेवंतसेवितवंतः । किंभूताः रम्याः इतिहेतोः । पताकावैजयंतीः । प्राप्तवतीःविविक्ताविजनाः इतिहेतोः । रागंरतिंवर्द्धयंतीः । नमंतिवलीकानिछादनपटलप्रांतायासांताः । वधूपक्षे पताकासौभाग्यानि । पताकावैजयत्यांस्यात्साभाग्यनाटकांकयोरितिमेदिनी । रागमनुरागं । विविक्ताःसतीत्वेनपवित्राः नमन्त्रिवलीकाश्चेति । नचेति । यतइत्यस्यइत्यत्रेवाक्षिप्तःश्लेषोभवेदित्यग्रेतनेनान्वयः । एतस्मिन्निति । तत्रैवरैवतकगिरिवर्णनं । एतस्मिन्गिरौमहत्यःसरस्यःवाल्मीकेर्मुनेर्गिरांसाधर्म्यंसादृश्यंदधतिधारयंति । किंभूतानांगिरां । अरहितौसंबद्धौरामलक्ष्मणौयासुतथाभूतानां । सरसीपक्षे अरहिताःसंयुक्तारामाःपतयोयासांतथाभूतालक्ष्मणाःसारसवनितायासुताइति । किंभूताःसरस्यः । अधिकांजलशोभांवहंत्यः पवनसंभूतेनवेगेनसंक्षोभंतरंगाकुलत्वंनीताःप्रापिताः वाल्मीकिगिरस्तु । अधिकाःकपयोयासुताः । पवनभुवाहनूमतावेगेनानिजेनसंक्षोभमुद्भटत्वंप्रापिताइति ॥—

सममित्येतत्तुक्रियाविशेषणंसहार्थत्वेनाप्युपपन्नं। वधूस्तुश्लिष्ट विशेषणार्थान्वयात्प्राक्द्रागप्रतीतंसाम्यंनालंबते तस्मादर्थ सौंदर्यबलादेवतदन्वयानुसंधानमितिगूढश्लेषः।तदनुतद्बला देवसमशब्दस्यसाधर्म्यार्थकल्पनमितिवाच्यस्यैवोपमालंका रस्यांगमथमित्यलंप्रपंचेन । तस्मात्सिद्धं श्लेषत्रैविध्यं एवंच श्लेषःप्रकारांतरेणापिद्विविधःसंपन्नः । उदाहरणगतेष्वब्जकी लालवाहिनीपत्यादिशब्देषुपरस्परविलक्षणंपदभंगमनपेक्ष्या नेकार्थक्रोडीकाराद‌भंगः सर्वदोमाधवःयोगंगांहरिणाहितश क्तिनेत्यादिशब्देषुपरस्परविलक्षणंपदभंगमपेक्ष्यनानार्थक्रोडी कारात्सभंगःश्लेषइति । तत्रसभंगश्लेषःशब्दालंकारः अभंग श्लेषस्त्वर्थालंकारइतिकेचित् । उभयमपिशब्दालंकारइत्य न्ये । उभयमप्यर्थालंकारइतिस्वाभिप्रायः । एतद्विवेचनंतुचि त्रमीमांसायांद्रष्टव्यम् ॥ ६३ ॥ ६४ ॥

नन्वत्रापिसममित्यस्यतुल्यार्थत्वात्साधर्म्यनिबंधोस्तीतिकुतोनश्लेषाक्षेपस्तत्राह । स ममिति । द्राक्शीघ्रं । साम्यार्थसाम्यार्थकत्वं । तथाचानुपपत्त्यभावात्तन्मूलकआ क्षेपोनसंभवतीतिभावः । कथंतर्हितदवगमस्तत्राह । अर्थसौंदर्येति । विशेषणानांवधू भिरन्वयेचमत्कृतेरनुसंधानात्तदन्वयतात्पर्यग्रहइतिभावः । तदनुश्लेषानुसंधानानंतरं, तद्बलाच्छ्लेषबलात्।साधर्म्यार्थेति।साधर्म्यरूपार्थस्येत्यर्थः। अर्थसाम्याभावेपि सकलक लंपुरमेतज्जातंसंप्रतिसुधांशुबिंबमिवेत्यादिवच्छब्दसाम्यस्यसंभवादितिभावः। एवका रेणव्यंग्यत्वव्यवच्छेदः। तत्रतयोर्मध्ये।शब्देति।जतुकाष्ठन्यायेनशब्दयोरेवश्लिष्टत्वादि तिभावः ।अर्थेति शब्दाभेदादेकवृंतगतफलद्वयन्यायेनार्थयोरेवश्लिष्टत्वादितिभावः । केचिदलंकारसर्वस्वकारादयः। उभयमपीति सभंगाभंगश्लेषद्वयमपीत्यर्थः।शब्दस्यपरि वृत्त्यसहत्वेनान्वयव्यतिरेकाभ्यांतद्गतत्वावधारणादितिभावः।अन्येमम्मटभट्टाः। नन्व भिप्रायस्यार्थालंकारमध्यकथनादवगतस्यापिविशेषतःकथनमंतरेणकथमुपपत्तिरित्या शंक्याह एतदिति।यद्यप्युत्प्रेक्षाग्रंथानंतरंचित्रमीमांसानक्वापिदृश्यते तथाप्ययमाशयउ न्नीयते । चमत्कारेऽर्थमुखप्रेक्षित्वादर्थालंकारत्वमिति । अनुप्रासयमकादेस्तुनचमत्का रेऽर्थमुखप्रेक्षित्वमितिनतेषामर्थालंकारत्वमपितुशब्दवैचित्र्यात् । शब्दालंकारत्वमेवेति ॥६३॥ ६४ ॥ इत्यलंकारचंद्रिकायांश्लेषप्रकरणम् ॥

अप्रस्तुतप्रशंसास्यात्सायत्रप्रस्तुताश्रया ॥ ए
कः कृतीशकुंतेषुयोन्यंशक्रान्नयाचते ॥ ६५ ॥

यत्राप्रस्तुतवृत्तांतवर्णनंप्रस्तुतवृत्तांतावगतिपर्यवसायि तत्रा प्रस्तुतप्रशंसालंकारः । अप्रस्तुतवृत्तांतवर्णनेनप्रस्तुतावगति श्चप्रस्तुताप्रस्तुतयोःसंबंधेसतिभवति । संबंधश्चसारूप्यंसामा न्यविशेषभावः कार्यकारणभावोवासंभवति । तत्रसामान्यवि शेषभावेसामान्याद्विशेषस्यविशेषाद्वासामान्यस्यावगतौद्वैवि ध्यं । कार्यकारणभावेपिकार्यात्कारणस्यकारणाद्वाकार्यस्याव गतौद्वैविध्यं । सारूप्यात्तुएकोभेदइत्यस्याःपंचप्रकाराः । यदा हुः 'कार्येनिमित्तेसामान्येविशेषेप्रस्तुतेसति॥तदन्यस्यवचस्तु ल्येतुल्यस्येतिचपंचधेति ॥' तत्रसारूप्यनिबंधनाऽप्रस्तुतप्रशं सोदाहरणंएकःकृतीति।अत्राप्रस्तुतचातकस्यप्रशंसाप्रशंसनीय त्वेनप्रस्तुतेतत्सरूपेक्षुद्रेभ्योयाचनान्निवृत्तेमानिनिपर्यवस्यति।—

अप्रस्तुतेति । साअप्रस्तुतप्रशंसाप्रस्तुताश्रया प्रस्तुतमाश्रयःप्राधान्येनतात्पर्यविष योयस्यास्तथाभूता।प्रस्तुतपरमप्रस्तुतवर्णनमप्रस्तुतप्रशंसेसर्थः। एकइति। कृती कुशलः शकुंतेषुपक्षिषुमध्येयश्चातकःशक्रादिंद्रादन्यंनयाचतइसर्थः । कार्यइति । कार्येप्रस्तुतेस तितदन्यस्यकारणस्यवचःप्रतिपादनं निमित्तेकारणेप्रस्तुतेसतितदन्यस्यकार्यस्य।एवंसा मान्येप्रस्तुतेसतितदन्यस्यविशेषस्य विशेषेप्रस्तुतेसतितदन्यस्यसामान्यस्यतुल्येप्रस्तुते तदन्यस्यतत्सदृशस्येसर्थः । अन्यशब्दस्यप्रतिसंबंधिपरत्वात् । तत्सरूपेतत्सदृशे ॥—

यथावा ॥ आबद्धकृत्रिमसटाजटिलांसभित्तिरारोपितोमृगप तेःपदवींयदिश्वा॥मत्तेभकुंभतटपाटनलंपटस्यनादंकरिष्यति कथंहरिणाधिपस्य॥अत्रशुनकस्यनिंदानिंदनीयत्वेनप्रस्तुतेत त्सरूपे कृत्रिमवेषव्यवहारादिमात्रेणविद्वत्ताभिनयवतिवैधेये पर्यवस्यति । यथावा ॥ अंतश्छिद्राणिभूयांसिकंटकाबहवो वहिः ॥ कथंकमलनालस्यमाभूवन्भंगुरागुणाः ॥ अत्रकमल नालवृत्तान्तकीर्तनन्तत्सरूपेबहिःखलेषुजाग्रत्सुभ्रातृपुत्रादि भिरंतःकलहंकुर्वाणेपुरुषेपर्यवस्यति। एवंच लक्ष्यलक्षणयोःप्र

शंसाशब्दःस्तुतिनिंदास्वरूपाख्यानसाधारणकीर्तनमात्रपरो द्रष्टव्यः॥—

आबद्धेति । आबद्धाःयाःकृत्रिमाः सटाःस्कंधलोमानितैर्जटिलाव्याप्ता अंसभित्तिःस्कंधदेशोयस्यैवंभूतःश्वाशुनकोमृगपतेःसिंहस्यपदवींस्थानंयथारोपितः । तादृशसटायुक्तत्वेनसिंहसाम्यंप्रापितइत्यर्थः । तथापिमत्तानामिभानांगजानांकुंभतटस्यपाटनेविदारणेलंपटस्यव्यसनिनोहरिणानामधिपस्यनादंसिंहनादंकथंकरिष्यतीत्यर्थः । अभिनयत्यनुकुर्वतीतिसप्तम्यंतं। वैधेयेमूर्खे। मूर्खवैधेयबालिशाइत्यमरः। अंतरिति। छिद्राणिरंध्राणिदोषस्थानानिच कंटकाःशूकाःखलाश्च भंगुराभंगशीलाः गुणाःसौभाग्यादयस्तंतवश्च । अत्रस्तुतिनिंदोदासीनस्वरूपाख्यानमात्रमितिश्लिष्टविशेषणत्वमितिचभेदः। एवंचेति। उक्तोदाहरणेषुप्रस्तुतपरस्याप्रस्तुतवर्णनस्यत्रिरूपत्वेसतीत्यर्थः ॥

सामान्यनिबंधनायथा ॥ विधायवैरंसामर्षेनरोऽरौयउदासते ॥ प्रक्षिप्योदर्चिषंकक्षेशेरतेतेऽभिमारुतं ॥ अत्रप्रागेवसामर्षेशिशुपालेरुक्मिणीहरणाद्वैरंदृढीकृतवताकृष्णेनतस्मिन्नुदासितुमयुक्तमितिवक्तव्येर्थेप्रस्तुतेतत्प्रत्यायनार्थंसामान्यमभिहितं । यथावा ॥सौहार्दस्वर्णरेखाणामुच्चावचभिदाजुषां॥ परोक्षमितिकोप्यस्तिपरीक्षानिकषोपलः॥ अत्रयदित्वंप्रत्यक्षमिवपरोक्षेपिममहितमाचरसितदात्वमुत्तमःसुहृदितिविशेषेवक्तव्यत्वेनप्रस्तुतेसामान्यमभिहितं। विशेषनिबंधनायथा॥ अंकाधिरोपितमृगश्चंद्रमामृगलांछनः ॥ केसरीनिष्ठुरक्षिप्तमृगयूथोमृगाधिपः ॥अत्रकृष्णंप्रतिबलभद्रवाक्येमार्दवदूषणपरेपूर्वप्रस्तावानुसारेणक्रूरएवख्यातिभाग्भवतिनतुमृदुरितिसामान्येवक्तव्येतत्प्रत्यायनार्थमप्रस्तुतोविशेषोभिहितः। एवंबृहत्कथादिषुसामान्यतःकंचिदर्थम्प्रस्तुत्यतद्विवरणार्थमप्रस्तुतकथाविशेषोदाहरणेष्वियमेवाप्रस्तुतप्रशंसाद्रष्टव्या ॥—

विधायेति । येनरामनुष्याः सक्रोधेऽरौशत्रौवैरंविधायोदासीनाभवंतितेकक्षेतृणेउदर्चिषमग्निंनिक्षिप्याभिमारुतंपवनाभिमुखंशेरतेनिद्रांकुर्वंतीत्यर्थः । सौहार्देति । सौहार्दानिमित्राण्येवस्वर्णरेखाइतिरूपकं तासांपरीक्षणेनिकषोपलः परोक्षमितिसंज्ञितः कोप्यस्तीत्यन्वयः अंकेति ।मृगलांछनइत्युच्यतइतिशेषः । निष्ठुरंक्षिप्तानिनिरस्तानिमृगयूथानियेनतादृशःकेसरीसिंहोमृगाधिपइत्युच्यतइतिचशेषः ॥

कारणनिबंधनायथा ॥ हृतसारमिवेंदुमंडलंदमयंतीवदनाय वेधसा॥ कृतमध्यबिलंविलोक्यतेधृतगंभीरखनीखनीलिम॥ अत्राप्राकरणिकेंदुमंडलगततयोत्प्रेक्ष्यमाणेनदमयन्तीवदन निर्माणार्थसारांशहरणेनतत्कार्यरूपंवर्णनीयतयाप्रस्तुतंदम यंतीवदनगतलोकोत्तरंसौंदर्यंप्रतीयते । यथावा ॥ मदीयवर दराजस्तवे । आश्रित्यनूनममृतद्युतयःपदंतेदेहक्षयोपनतादि व्यपदाभिमुख्याः ॥ लावण्यपुण्यनिचयंसुहृदित्वदास्येविन्य स्ययांतिमिहिरंप्रतिमासभिन्नाः॥ अत्राप्राकरणिकचंद्रकर्तृक तयोत्प्रेक्ष्यमाणेन लावण्यपुण्यनिचयाविन्यासेन कारणेन त त्कार्यमनंतकोटिचंद्रलावण्यशालित्वमनन्यसुखसाधारणंभ गवन्मुखेवर्णनीयतयाप्रस्तुतंप्रतीयते ॥—

हृतेति । हृतोगंभीरायांखन्यांगर्तेस्वस्याकाशस्यनीलिमायेनेतिमंडलविशेषणम् । आ श्रित्येति।हेदेवप्रतिमासंभिन्नाअमृतद्युतयश्चंद्रास्तेविष्णोःपदमाकाशमेवपदंचरणमाश्रि त्यदेहस्यक्षयेउपनतंसंपन्नंदिव्यपदस्याभिमुख्यमेषामेवंभूताःसंतस्त्वदास्यरूपेसुहृदिमि त्रेनूनंलावण्यस्वरूपस्यपुण्यस्यनिचयंविन्यस्यमिहिरंसूर्यंप्रतियांतीत्यन्वयः ॥—

तथाहि । चंद्रस्तावन्मंत्रलिंगाद्वृद्धिक्षयाभ्याम भेदेपिभेदाध्यव सायाद्वाप्रतिमासंभिन्नत्वेनवर्णितस्तेनाऽतीताश्चंद्राअनंतको टयइतिलब्धंकालस्यानादित्वात्सर्वेषांचतेषामाकाशसमाश्र यणंश्लेषमहिम्नाभगवच्चरणसमाश्रयत्वेनाध्यवसितंभगवच्चर णप्रपन्नानांचदेहक्षयोपस्थितौपरमपदप्राप्त्याभिमुख्यंतदानी मेवस्वसुहृद्वर्गेस्वकीयसुकृतस्तोमनिवेशनं ततःसूर्यमंडलप्रा प्तिश्चेत्येतत्सर्वंश्रुतिसिद्धमिति । तदनुरोधेनतेषांदेहक्षयका ल स्यामावास्यारूपस्योपस्थितौसूर्यमण्डलप्राप्तेःप्राक्प्रत्यक्षासि द्धंपुण्यत्वेननिरूपितस्यलावण्यस्यप्रहाणंनिमित्तीकृत्यतस्य चन्द्रसादृश्यस्वरूपोपचरिततत्सौहार्दवातिभगवन्मुखेन्यसन मुत्प्रेक्षितंयद्यपिसुहृद्बहुत्वेतावदल्पपुण्यसंक्रमोभवति तथा प्यत्रसुहृदित्येकवचनेनभगवन्मुखमेवचंद्रस्यसुहृद्भूतंनमुखांत

राणिचंद्रसादृश्यगंधस्यास्पदानीतिभगवन्मुखस्येतरमुखेभ्यो व्यतिरेकोऽपिव्यंजितः। ततश्चतस्मिन्नेवसर्वेषांस्वस्वयथावल्लाव ण्यविन्यसनोत्प्रेक्षणेनप्राग्वर्णितःप्रस्तुतोर्थःस्पष्टमेवप्रतीयते यद्यपि श्रुतौसूर्यमंडलप्राप्त्यनन्तरभाविविरजानदीक्रमणान न्तरमेवसुहृत्सुकृतसंक्रमणंश्रूयते तथापिशारीरकशास्त्रेतस्या र्थवशात्प्राग्भावःस्थापितइतितदनुसारेणविन्यस्यमिहिरम्प्र तियांतीत्युक्तम् ॥–

मंत्रलिंगादिति। नवोनवोभवतिजायमानइत्यादिमंत्रसामर्थ्यादित्यर्थः। मंत्रस्यमानांत रसिद्धार्थानुवादकत्वादाह दृढीति। श्रुतीति।तत्सुकृतदुष्कृतेविधुनुते तस्यप्रियाज्ञातयः सुकृतमुपयंतिअप्रियादुष्कृतमितिकौषीतकीश्रुतिः। सयावत्क्षिप्येन्मनस्तावदादित्यंग च्छतीतिसवायुमागच्छतिसतत्रविजिहितेयथारथचक्रस्यखंतेनसऊर्ध्वमाक्रमतेसआ दित्यमागच्छती।तिचश्रुतौ सआदित्यमागच्छतीत्यनंतरंसआगच्छतिविरजांनदींतांम नसैवात्येतितत्सुकृतदुष्कृतेविधुनुतइतिश्रुतौ।शारीरकेति। शरीरेभवःशारीरःसएवशा रीरकआत्मातत्प्रतिपादकेसर्थः। अर्थवशात्प्रयोजनवशात्। पूर्वपापादिसागाभावेऽ र्चिरादिमार्गप्राप्तिपूर्वकब्रह्मप्राप्तेरसंभवेनपाठक्रमस्याऽर्थक्रमेणबाधादितिभावः। स्था पितइति। सांपरायेतर्तव्याभावात्तथाह्यन्यइतितार्तीयाधिकरणेसिद्धांतितइत्यर्थः॥–

कार्यनिबंधनायथा॥नाथत्वदंघ्रिनखधावनतोयलग्नास्तत्कांति लेशकणिकाजलधिंप्रविष्टाः॥ताएवतस्यमथनेनघनीभवंत्यो नूनंसमुद्रनवनीतपदंप्रपन्नाः॥अत्रभगवत्पादांबुजक्षालनरूपा यांदिव्यसरित्यलक्तकरसादिवलग्नानांतयासहसमुद्रंप्रविष्टानां तन्नखकांतिलेशकणिकानां परिणामतयासंभाव्यमानेसमुद्रन वनीतपदवाच्येनचन्द्रेणकार्येणतन्नखकांत्युत्कर्षःप्रतीयते। य थावा॥ अस्याश्चेद्गतिसौकुमार्यमधुनाहंसस्यगर्वैरलं संलापो यदिधार्यतांपरभृतैर्वाचंयमत्वव्रतं॥ अंगानामकठोरतायदिदृ षत्प्रायैवसामालती कान्तिश्चेत्कमलाकिमत्रबहुनाकाषायमा लंबतां॥ अत्रनायिकागतिसौकुमार्यादिपुवर्णनीयत्वेनप्रस्तु तेषुहंसादिगतगर्वशांत्यादिरूपाण्यौचित्येनसंभाव्यमानानि कार्याण्यभिहितानि ॥–

नाथेति । हेनाथविष्णो त्वच्चरणनखप्रक्षालनजलेगंगारूपेलग्नाः तेषांनखानांकांतिलेशकणिकाःसमुद्रंप्राप्ताः ताएवचकणिकास्तस्यजलधेर्मथनेनसांद्रतांप्राप्तानूनंसमुद्रसंबंधिनवनीतस्यचंद्रस्यपदंप्राप्ताः । चंद्ररूपेणपरिणताइत्यर्थः । तयातद्द्वारेण तदिसनंतरंहेतुरितिशेषः । तद्धेतुनखकांत्युत्कर्षइत्यर्थः । अस्याश्चेदिति । अस्याःकामिन्यागतिसौकुमार्यंदृष्टंचेदित्यध्याहारेणान्वयः । एवंसंल्लापोभाषणंयदिश्रुतस्तदापरभृतैःकोकिलैर्वाचंयच्छतीतितथातस्यभावोमौनमेवव्रतंसाध्यतां । अकठोरतामार्दवंयदिदृश्यतेतदासाप्रसिद्धामालतीदृषत्प्रायैवपाषाणतुल्यैवलक्ष्यतइति । कांतिर्दृष्टाचेत्तदाकमलालक्ष्मीःकाषायंवस्त्रमालंवतामाश्रयतु । किमत्रबहुनोक्तेनेत्यन्वयः । गत्यादिषु गतिसौंदर्यादिषु संभाव्यमानान्युत्प्रेक्षमाणानि ॥—

एतानिचपूर्वोदाहरणइवनवस्तुकार्याणि किंतुतन्निरीक्षणकार्याणिलज्जातिरश्चांयदिचेतसिस्यादसंशयंपर्वतराजपुत्र्याः॥तंकेशपाशंप्रसमीक्ष्यकुर्युर्वालप्रियत्वंशिथिलंचमर्यः' इत्युदाहरणांतरेतथैवस्पष्टं।अंगानामकठोरतेतितृतीयपादेतुवर्णनीयांगसौकुमार्य्यातिशयनिरीक्षणकार्यत्वमपिनार्थाक्षेप्यमालतीकठोरत्वेविवक्षितं। प्रतिप्रयोगिविशेषापेक्षकठोरत्वस्यतदकार्यत्वात्किंतुतद्बुद्धेरेव। इदमपित्वदंगमार्दवेदृष्टइत्याद्युदाहरणांतरेतथैवस्पष्टम् ॥—

पूर्वोदाहरणाद्वैलक्षण्यमाह । एतानीति । कार्याणीत्यर्थः । लज्जेति । तिरश्चांपश्वादीनांचेतसियदिलज्जास्यात्तदाचमर्योगोमृगाःपर्वतराजपुत्र्यास्तंतथारमणीयंकेशपाशंप्रसमीक्ष्य वालाःकेशाःप्रियायासांतास्तथातत्त्वंशिथिलंकुर्युरित्यन्वयः । तथैवनिरीक्षणकार्यत्वमेव । अर्थाक्षेप्येति । दृषत्प्रायत्वरूपार्थाक्षिप्तेत्यर्थः । इदमप्यप्रस्तुतबुद्धेःकार्यत्वमपि । अपिनाप्रस्तुतबुद्धेःकारणत्वंप्रागुक्तंसमुच्चीयते। 'त्वदंगमार्दवेदृष्टेकस्यचित्तेनभासते॥ मालतीशशभृल्लेखाकदलीनांकठोरता'इतितुल्ययोगितायांप्रागुदाहृतं॥—

अर्थस्यकार्यत्वइवबुद्धेःकार्यत्वेपिकार्यनिबन्धनत्वंनहीयतइति । एतादृशान्यपिकार्यनिबंधनाप्रस्तुतप्रशंसायामुदाहृतानिप्राचीनैः । वस्तुतस्तुतदतिरेकेपिनदोषः। नह्यप्रस्तुतप्रशंसायांप्रस्तुताप्रस्तुतयोःपंचविधएवसंबधइतिनियंतुंशक्यते। संबंधांतरेष्वपितद्दर्शनात् । यथा ॥ तापत्रयौषधवरस्यतव

स्मितस्यनिःश्वासमंदमरुतानिबुसीकृतस्य। एतेकडंकरचया इवविप्रकीर्णाजैत्रातृकस्यकिरणाजगतिभ्रमंति॥ अत्रह्यप्रस्तुतानांचंद्रकिरणानांभगवन्मंदस्मितरूपदिव्यौषधधान्यविशेषकडंकरचयत्वोत्प्रेक्षणेनभगवन्मन्दस्मितस्य तत्सारतारूपः कोप्युत्कर्षःप्रतीयते। नचधान्यकडंकरचययोःकार्यकारणभावादिसंबंधोस्ति। अतःसहोत्पत्त्यादिकमपि संबंधांतरमाश्रयणीयमेव॥—

ननु कार्यरूपेणाप्रस्तुतेनार्थेनयत्रप्रस्तुतंतत्कारणमवगम्यते साकार्यनिबंधनाऽप्रस्तुतप्रशंसोच्यते। नचोदाहृतेषुतत्संभवः। मालतीकठोरत्वादेरप्रस्तुतस्यार्थस्याकार्यतायास्त्वयैवदर्शितत्वात्। एवंप्रस्तुतस्यकामिनीगतिनिष्ठसौंदर्यातिशयादेर्निरीक्षणस्यैवकारणत्वेनस्वरूपतस्तस्याकारणत्वादित्यतआह अर्थस्येति। अयमाशयः। अर्थस्याप्रस्तुतत्वेसुतरांतद्बुद्धेरप्रस्तुतत्वात्कार्यत्वाच्चनतावदप्रस्तुतकार्यत्वांशासंभवः। अर्थत्वस्याप्रयोजनाभावेनलक्षणेऽनिवेशादव्यावर्तकत्वाच्च। नापिप्रस्तुतस्यकारणत्वांशस्यासंभवः। स्वरूपतस्तस्याहेतुत्वेपिज्ञातस्यहेतुत्वादिति। ननु गतिसौंदर्यादेर्ज्ञानमेवहेतुर्नतुज्ञायमानं गतिसौंदर्यादि। तदभावेपिज्ञानमात्रात्कार्योत्पत्तेरित्यस्वरसादाह वस्तुतस्त्विति। तदतिरेके तस्याःप्राचीनोदाहृताप्रस्तुतप्रशंसायाअतिरेकेप्रकारपंचकाधिक्ये। तापेति। हेहरेतवनिःश्वासरूपमंदमारुतेननिबुसीकृतस्यबुसरहितीकृतस्यस्मितरूपस्याऽऽध्यात्मिकादितापत्रयौषधश्रेष्ठस्य विप्रकीर्णाःकडंकरचयाबुससमूहाइवैतेजैवातृकस्यचंद्रस्यकिरणाजगतिभ्रमंतीत्यन्वयः। तत्सारतारूपः किरणसारतारूपः॥—

एवमुपमानोपमेयावाश्रित्यतत्रकविकल्पितकार्यकारणभावनिबंधनेअप्रस्तुतप्रशंसेदर्शितेततोन्यत्रापिदृश्यते।यथा॥ कालिंदिब्रूहिकुंभोद्भवजलधिरहन्नामगृह्णासिकस्माच्छत्रोर्मेनर्मदाहंत्वमपिवदसिमेनामकस्मात्सपत्न्याः॥ मालिन्यंतर्हिकस्मादनुभवसिमिलत्कज्जलैर्मालवीनांनेत्रांभोभिःकिमासांसमजनिकुपितःकुंतलक्षोणिपालः॥ अत्रकिमासांसमजनीतिमालवीनान्तथारोदनस्यनिमित्तेपृष्टे तत्प्रियमरणरूपनिमित्तमनाख्यायकुपितःकुन्तलक्षोणिपालइतितत्कारणमभिहितमितिकारणनिबंधना।मालवान्प्रतिप्रस्थितेनकुंतलेश्वरेण।किं

तेनाशिताइतिपृष्टेतद्वधानंतरभाविजलधिनर्मदाप्रश्नोत्तररूपं कार्यमभिहितमित्यत्रैवकार्यनिबंधनापि पूर्वस्यांप्रश्नःशाब्दो स्यामार्थइतिभेदः ॥ ६५ ॥

एवमिति । हृतसारमित्युदाहरणेचंद्रवदने उपमानोपमेयपदार्थावाश्रित्यचंद्रसारांशहरणस्यसतःकविप्रौढोक्तिकल्पितंकारणत्वम् । एवमन्येष्वपिद्रष्टव्यम् । कालिंदीति । नर्मदायाःसमुद्रस्यचसंवादोयम् । तत्रयमुनाभ्रांत्यासमुद्रेणकालिंदीत्युक्तेकोपात्साकूतंनर्मदायाउत्तरं हेकुंभोद्भवागस्त्यमुनेब्रूहीति । ततः पुनःसमुद्रस्यप्रतिवचनम् । अहंजलधिर्भवामि ममशत्रोर्नामकस्माद्धेतोगृह्णासीति । सापुनराह नर्मदाहमित्यादि । ततः समुद्रःपुनराह तर्हिकुतोमालिन्यमनुभवसीति । सापुनराह मिलत्कज्जलैर्मालवदेशांगनानांनेत्राश्रुभिरिति । ततःकिमासांजातमितिसमुद्रस्यप्रश्नः । कुंतलदेशाधिपःकुपितइतिनर्मदायाउत्तरम् ॥ ६५ ॥ इत्यलंकारचंद्रिकायामप्रस्तुतप्रशंसाप्रकरणम् ॥

प्रस्तुतेनप्रस्तुतस्यद्योतनेप्रस्तुतांकुरः ॥ किं
भृंगसत्यांमालत्यांकेतक्याकंटकेद्धया ॥ ६६ ॥

यत्रप्रस्तुतेनवर्ण्यमानेनाभिमतमन्यत्प्रस्तुतंद्योत्यते तत्रप्रस्तुतांकुरालंकारः । उत्तरार्द्धमुदाहरणं । इहप्रियतमेनसाकमुद्यानेविहरंतीकाचिद्भृंगंप्रत्येवाहेतिवाच्यार्थस्यप्रस्तुतत्वं।नचानामंत्रणीयामंत्रणेनवाच्यासंभवादप्रस्तुतमेववाच्यमिहस्वरूपप्रस्तुतावगतयेनिर्दिष्टमितिवाच्यं । मौग्ध्यादिनाभृंगादावप्यामंत्रणस्यलोकेदर्शनात् ॥—

प्रस्तुतेनेति । प्रधानभूतप्रस्तुतांतराभिव्यंजकंप्रस्तुतवर्णनंप्रस्तुतांकुरालंकारः । प्रस्तुतस्याभिव्यंजकत्वादंकुरइवांकुरइतिव्युत्पत्तेः । किमिति । हेभ्रमरमालत्यांविद्यमानायांकंटकेद्धयाकण्टकव्याप्तयाकेतक्याकिंप्रयोजनमितिप्रस्तुतेनभ्रमरवृत्तांतेनमयिमनोहारिण्यांसत्यांकिमुद्वेगकारिण्यापरवनितयेतिनायकवृत्तान्तःप्राधान्येनप्रस्तुतोऽभिव्यज्यते । कथमिहभृंगवृत्तांतस्यप्रस्तुतत्वंतत्राह । इहेति । तथाचभृंगसंबोध्यकत्वात्तद्वृत्तांतोपिप्रस्तुतइतिभावः । अनामंत्रणीयामंत्रणेनसंबोध्यत्वायोग्यसंबोधनेन । वाच्यासंभवाद्भृंगसंबोध्यकवाच्यार्थासंभवात् ॥—

यथा॥ कस्त्वंभोःकथयामिदैवहतकंमांविद्धिशाखोटकंवैराग्यादिववक्षिसाधुविदितंकस्मादिदंकथ्यते ॥ वामेनात्रवटस्तम

ध्वगजनःसर्वात्मनासेवतेनच्छायापिपरोपकारकरिणीमार्गे स्थितस्यापिमे ॥ इत्यत्रचेतनाचेतनप्रश्नोत्तरवार्त्तिर्यगामंत्रण स्यात्यंतमसंभावितत्वाभावात् एवंप्रस्तुतेनवाच्यार्थेनभृंगो पालंभरूपेणवक्र्याःकुलवध्वाःसौंदर्याभिमानशालिन्याःक्रूर जनपरिवृत्तिदुष्प्रधर्षायांपरवनितायांविटसर्वस्वापहरणसंक ल्पदुरासदायांवेश्यायांवाकंटकसंकुलकेतकीकल्पायांप्रवर्तमा नंप्रियतमंप्रत्युपालंभोद्योत्यते ॥–

कस्त्वमिति । शाखोटकतरुंप्रतिकस्यचित्पथिकस्यप्रश्नोक्तिः । कथयामीसाद्युत्त रं । वैराग्यादिववदसीतिपुनःप्रश्नः । साधुविदितमितिशाखोटकस्योत्तरं । कस्मादिदं वैराग्यमितिपुनःप्रश्नः । कथ्यतइतिपुनरुत्तरंप्रतिज्ञायशाखोटकआह । वामभागे नोपलक्षितोत्रवटोस्तितंपांथोजनःसर्वात्मानासमित्पत्रछायादिभिःसेवतेआश्रयति । ममपुनर्मार्गेस्थितस्यापिनछायापिपरोपकारसंपादिकेतिभूताधारत्वादितिभावः । वा मेनेतिमार्गेतिचश्लिष्टं । अत्यंतमारोपेणापि । परवनितायामितिवेश्यायामितिचविषय सप्तमी । तद्विषयइत्यर्थः विटानांसर्वस्वस्याहरणेयःसंकल्पस्तेनदुरापेतिवेश्याविशेषणं॥

यथावा ॥ अन्यासुतावदुपमर्दसहासुभृंगलोलंविनोदयमनः सुमनोलतासु॥ बालामजातरजसंकलिकामकालेव्यर्थंकदर्थ यसिकिंनवमाल्लिकायाः ॥ अत्राप्युद्यानमध्येचरंतंभृंगंप्रत्युपा लंभइतिवाच्यार्थस्यापिप्रस्तुतत्वं।इदंचप्रौढांगनासुसतीषुबा लिकांरतयेक्लेशयतिकामिनिशृण्वतिकस्याश्चिद्विदग्धायावच नमितितंप्रत्युपालंभोद्योत्यते । यथावा॥ कोशद्वंद्वमियंदधा तिनलिनीकादम्बचंचूक्षतंधत्तंचूतलतानवंकिसलयंपुंस्कोकि लास्वादितं ॥ इत्याकर्ण्यमिथःसखीजनवचःसादीर्घिकाया स्तटेचैलांतेनतिरोदधेस्तनतटंबिंबाधरंपाणिना ॥अत्रेयमिति नलिनीव्यक्तिविशेषनिर्देशेनदीर्घिकायास्तटइत्यनेनचवाच्या र्थस्यप्रस्तुतत्वंस्पष्टम् । प्रस्तुतांतरद्योतनंचोत्तरार्धेस्वयमेवक विनाविष्कृतम् । अत्राद्योदाहरणयोरन्यापदेशध्वनिमाह लोचनकारः ॥–

अन्येति । हेभृंगअन्यासूपमर्दक्षमासुसुमनसांपुष्पाणांलतासुतावद्यावन्नवमल्लिकायाःकलिकासंजातरजस्काभवतिलोलंचपलंमनोविनोदय । लोलमितिक्रियाविशेषणंवा । नवमल्लिकायालताविशेषस्यबालामभिनवामसंजातरजस्कांकलिकामकालेव्यर्थंकिमितिकदर्थयसिपीडयसीत्यन्वयः । रजःपुष्परजः स्त्रीणांरेतश्च । शृण्वतीति । एतद्वचनंशृण्वतिसतीत्यर्थः । कोशेति । इयंनलिनीकमलिनीकोशद्वंद्वंमुकुलयुगलंकादंबस्यहंसस्यचंच्वाक्षतंकृतक्षतंदधातिधत्ते तथेयंचूतस्याम्रस्यलतानूतनंपल्लवंपुंरूपैःकोकिलैरास्वादितंचर्वितंधत्ते इतिदीर्घिकायावाप्यास्तटेमिथःपरस्परंसखीजनस्यवचआकर्ण्यसाप्रस्तुतानायिकाकमलमुकुलाम्रपल्लवव्याजेनैतामदीयस्तनाऽधरक्षतवृत्तांतंकथयंतीतिज्ञात्वाचैलस्यवस्त्रस्यांतेनप्रांतेनस्तनतटंतिरोदधे बिंबरूपमधरंचपाणिनातिरोदधआच्छादितवतीत्यन्वयः । अन्यापदेशेति । अन्यस्यापदेशोमिषंयत्रतादृशमित्यर्थः ॥—

अप्रस्तुतप्रशंसायांवाच्यार्थोऽप्रस्तुतत्वादवर्णनीय इति तत्राभिधायामपर्यवसितायांतेनप्रस्तुतार्थव्यक्तिरलंकारः । इहतु वाच्यस्यप्रस्तुतत्वेनतत्राभिधायांपर्यवसितायामर्थसौन्दर्यबलेनाभिमतार्थव्यक्तिर्ध्वनिरेवेति। वस्तुतस्त्वयमप्यलंकारएव ध्वनिरितिव्यवस्थापितंचित्रमीमांसायां । तृतीयोदाहरणस्य त्वलंकारत्वेकस्यापिनविवादः । उक्तंहिध्वनिकृता'शब्दार्थशक्त्याक्षिप्तोपिव्यंग्योर्थःकविनापुनः ॥ यत्राविष्क्रियतेस्वोक्त्या सान्यैवालंकृतिर्ध्वनेः'इति। एतान्यपिसारूप्यनिबंधनान्युदाहरणानिसंबंधांतरनिबंधनान्यपिकथंचिद्वाच्यव्यंग्ययोःप्रस्तुतत्वनिबंधनेनोदाहरणीयानि । दिङ्मात्रमुदाह्रियते ॥—

तदीयमेवग्रंथंदर्शयति । अप्रस्तुतेत्यादि । व्यवस्थापितमिति । प्रस्तुतत्वेपिमुख्यतयातात्पर्याभावादत्राप्यभिधापर्यवसानाभावादितिभावः । सान्यैवेति । साअलंकृतिर्ध्वनेःसकाशादन्यैवेत्यर्थः । प्रस्तुतत्वलंभनेनप्रस्तुतत्वमा(स्था ॥—

रात्रिःशिवाकाचनसन्निधत्तेविलोचनेजाग्रतमप्रमत्ते॥ समानधर्मायुवयोःसकाशेसखाभविष्यत्यचिरेणकश्चित् ॥ अत्रशिवसारूप्यमिवतदेकदेशतयातद्वाच्यंललाटलोचनमपिशिवरात्रिमाहात्म्यप्रयुक्तत्वेनवर्णनीयमितितन्मुखेनकृत्स्नंशिवसारूप्यंगम्यं । यथावा॥ वहंतीसिंदूरंप्रबलकबरीभारातिमिरत्विषां

वृंदैर्वंदीकृतमिवनवीनार्ककिरणं ॥ तनोतुक्षेमंनस्तववदनसौं दर्यलहरीपरीवाहःस्रोतःसरणिरिवसीमंतसरणिः ॥ अत्रवर्ण नीयत्वेनप्रस्तुतायाःसीमंतसरणेर्वदनसौंदर्यपरीवाहत्वोत्प्रेक्ष णेनपरिपूर्णतटाकवत्परीवाहकारणीभूतास्वस्थानेअमान्तीव दनसौंदर्यसमृद्धिःप्रतीयते । सापिवर्णनीयत्वेनप्रस्तुतैव ॥—

रात्रिरिति । हेविलोचनेशिवाकल्याणरूपाकाचनानिर्वचनीयप्रभावारात्रिः । शिशिवरात्रिरित्यर्थः । संनिधत्तेसंनिहिताभवत्सतोयुवांअप्रमत्तेजाग्रतंजाग्रद्रूपेभवतम् । कुतस्तत्राह । युवयोःसकाशेसमीपेअचिरेणसमानधर्मासदृशःसखाकश्चिद्भविष्यति तृतीयंलोचनंभालेभविष्यतीत्यर्थः । तदेकदेशतयेतिशिवरात्रिमाहात्म्यप्रयुक्तत्वेहेतुः तच्चवर्ण्यते । तद्वाच्यमुदाहृतकाव्यवाच्यम् । एवंचैकदेश्येकदेशभावसंबंधनिबंधनत्व मत्रदर्शितम् । वहंतीति । भगवत्याःसीमंतवर्णनमिदम् । अयिशिवेतवसीमंतसरणि र्नःक्षेमंतनोत्वित्यन्वयः । कीदृशी सिंदूरंवहंती । किमिव प्रबलानांकेशपाशरूपांध कारदीनांसमूहैर्वंदीकृतंबालार्ककिरणमिवासरणिःकेव त्वद्वदनसौंदर्यलहरीणांपरीवा हरूपा स्रोतःससरणिरिवेति।परीवाहोजलनिर्गममार्गः।जलोच्छ्वासाःपरीवाहाइत्यमरः॥

यथावा॥अंगासंगिमृणालकांडमयतेभृंगावलीनांरुचंनासामौ क्तिकमिंद्रनीलसरणिंश्वासानिलाद्वाहते ॥ दत्तेयंहिमवालुका पिकुचयोर्धत्तेक्षणंदीपतांतत्प्रायःपतितांबुवत्करतलेधाराम्बुसं लीयते अत्रनायिकायाविरहासहत्वातिशयप्रकटनायसंताप वत्कार्याणिमृणालमालिन्यादीन्यपिवर्णनीयत्वेनविवक्षिता नीतितन्मुखेनसंतापोवगम्यः । यत्रकार्यमुखेनकारणस्यावग तिरपिश्लोकेनिबद्धा नतत्रायमलंकारःकिंत्वनुमानमेवायथा॥ परिम्लानंपीनस्तनजघनसंगादुभयतस्तनोर्मध्यस्यांतःपरिमि लनमप्राप्यहरितं ॥ इदंव्यस्तन्यासंप्रशिथिलभुजाक्षेपवलनैः कृशांग्याःसंतापंवदतिनलिनीपत्रशयनं ॥—

अंगेति । विरहसंतापवर्णनं । अंगसंबद्धंमृणालकांडंभृंगेभ्योविशेषरहितांतत्समां रुचंकांतिमयतेप्राप्नोति । तापातिशयेनमलिनीभावात् । नासामौक्तिकंश्वासानि लादत्युष्णाद्धेतोरिंद्रनीलमणेःपदवींतत्साम्यंगाहतेप्राप्नोति । तथा कुचयोर्दत्तानिहिते यंहिमवालुकाकर्पूरंक्षणंदीपरूपतांधत्ते । एवंकरतलेधारारूपेणसिक्तंजलंतत्प्रायःपिंड

पतितजलवत्संलीयते तापातिशयाच्छोषं प्राप्नोतीत्यर्थः। उदाहरणद्वयेपिकार्यनिबंधनत्वं व्यक्तं नतत्रायमिति। द्वयोरपिवाच्यत्वादितिभावः। अयमित्युपलक्षणम् अप्रस्तुतप्रशंसापिनेतिबोध्यं। किंक्कतस्तर्हितत्रचमत्कारोऽतआह किंत्विति। परीति। रत्नावल्यांस्वविरहातुरायाःसागरिकायाःशयनमुपगतस्यराज्ञइयमुक्तिः। इदंबिसिनीपत्ररचितंशयनंकृशांग्याःसंतापंवदत्यनुमापयति। किंभूतं पीनस्तनजघनसंगादुभयतऊर्ध्वाधोभागयोःपरिम्लानं। तनोःकृशस्यमध्यस्यपरिमिलनंसंघर्षमप्राप्यअंतर्मध्यभागेहरितवर्णं। एवंप्रकर्षेणशिथिलयोर्भुजयोराक्षेपैश्चलनैश्चव्यस्तोविषमीकृतोन्यासोरचनायस्यताहशमिति ॥ ६६ ॥ इत्यलंकारचंद्रिकायांप्रस्तुतांकुरप्रकरणम् ॥

पर्यायोक्तंतुगम्यस्यवचोभंग्यंतराश्रयं ॥ नम
स्तस्मैकृतौयेनमुधाराहुवधूकुचौ ॥ ६७ ॥

यदेवगम्यंविवक्षितंतस्यैवभंग्यंतरेणविवक्षितरूपादपिचारुतरेणकेनचिद्रूपांतरेणाभिधानंपर्यायोक्तं। उत्तरार्द्धमुदाहरणं। अत्रभगवान्वासुदेवःस्वासाधारणरूपेणगम्योराहुवधुकुचवैयर्थ्यकारकत्वेनरूपांतरेणसएवाभिहितः ॥ लोकंपश्यतियस्यांघ्रिःसयस्यांघ्रिंनपश्यति॥ताभ्यामप्यपरिच्छेद्याविद्याविश्वगुरोस्तव॥अत्रगौतमःपतंजलिश्चस्वासाधारणरूपाभ्यांगम्यौरूपांतराभ्यामभिहितौ। यथावा ॥ निवेद्यतांहंतसमापयंतोशिरीषकोशम्रदिमाभिमानम्। पादौकियद्दूरमिमौप्रयासेनिधित्सतेतुच्छदयंमनस्ते ॥अत्राकियद्दूरंजिगामिषेतिगम्यएवार्थोरूपांतरेणाभिहितः ॥—

ननु प्रस्तुतकार्याभिधानमुखेनकारणस्यगम्यत्वमपिप्रस्तुतांकुरविषयश्चेत्किंतर्हिपर्यायोक्तमित्याकांक्षायामाह पर्यायोक्तमिति। वचःप्रतिपादनं भंग्यंतराश्रयंभंग्यंतरप्रकारकं। लक्षणंपरिष्कुरुते यदेवेति। तथाचविवक्षितस्वप्रकारातिरिक्तेनचारुतरेण रूपेणव्यंग्यस्याभिधानंपर्यायोक्तमितिलक्षणं। पर्यायेणभंग्यंतरेणोक्तमभिहितंव्यंग्यं यत्रेतिव्युत्पत्तेः। लक्षणेस्वपदंव्यंग्यपरं। नचव्यंग्यस्यैववाच्यत्वंनिष्फलंविरुद्धंचेतिवाच्यं प्रकारभेदात्। तदुक्तं 'यदेवोच्यतेतदेवव्यंग्यंयथातुव्यंग्यं नतथोच्यत'इति। चारुतरेणेतिविशेषणात्। नमोराहुशिरश्छेदकारिणेदुःखहारिणेइत्यत्रनपर्यायोक्तप्रसंगः स्वासाधारणरूपेणवासुदेवत्वेन। यत्तुराहुशिरश्छेदकारित्वरूपव्यंग्यमादायैवपर्यायोक्तं

नन्कुमर्दनतुविशेषणसामर्थ्यलभ्यंवासुदेवत्वमादायेति तदयुक्तं राहुशिरश्छेदकारित्व स्यवाच्यसिद्ध्यंगत्वेनतेनापिविवक्षितंव्यंग्यंप्रधानभूतंवासुदेवत्वंतदादायैवतत्कथनौचित्यात्।राहुस्त्रीकुचनैष्फल्यकारिणेहरयेनमइत्यत्रतुराहुशिरश्छेदकारित्वमेवविवक्षितंव्यंग्यमितियुक्तंतदादायपर्यायोक्तमितिविभावनीयम्।लोकमिति ।यस्याक्षपादस्यांघ्रिर्लोकंपश्यति अथचसलोकोयस्यपतंजलेःशेषावतारस्यांघ्रिंनपश्यतिउरगत्वात्। ताभ्याअक्षपादपतंजलिभ्यां। अपरिच्छेद्याअनाकलनीया। निवेद्यतामिति। नलंमतिदमयंत्याउक्तिः। तवअल्पदयंमनःकर्तृशिरीषकलिकामृदुत्वाभिमानमपनयंतौइमौपादौकियद्दूरपर्यंतंमयासेनिधातुमिच्छति। हंतखेदे। एतन्निवेद्यतांकथ्यतामित्यर्थः ॥—

यथावा ॥ देवंवंदेजलधिशरधिंदेवतासार्वभौमंव्यासप्रष्ठाभुवनविदितायस्यवाहाधिवाहाः॥ भूषापेटीभुवनमधरंपुष्करंपुष्पवाटीशाटीपालाःशतमखमुखाश्चंदनद्रुर्मनोभूः ॥ अत्रयस्यवेदावाहाभुजंगमाभूषणानीत्यादितद्वाक्यार्थव्यवस्थितौवेदत्वाद्याकारेणावगम्याएववेदादयोव्यासप्रमुखविनेयत्वाद्याकारेणाभिहिताः परंतुदेवतासार्वभौमत्वस्फुटीकरणायविशेषणविशेष्यभावव्यत्यासेनप्रतिपादिताः। अत्रालंकारसर्वस्वकृतापिपर्यायोक्तस्यसंप्रदायागतमिदमेवलक्षणमंगीकृतंगम्यस्यापिभंग्यंतरेणाभिधानंपर्यायोक्तमिति। 'चक्राभिघातप्रसभाज्ञयैवचकारयोराहुवधूजनस्य ॥ आलिंगनोद्दामविलासवंध्यंरतोत्सवंचुंबनमात्रशेषं' इतिप्राचीनंतदुदाहरणंत्वन्यथायोजितं। राहुवधूगतेनविशिष्टेनरतोत्सवेनराहुशिरश्छेदःकारणरूपोगम्यतइति ॥—

देवमिति। देवतासार्वभौमंसकलदेवताऽधीश्वरंदेवंवंदे। कीदृशं जलधिरेवशरधिस्तूणंयस्यतथाभूतंत्रिपुरसंहारेशरीरकृतस्यविष्णोर्विश्रांतिस्थानत्वात्। तथाभुवनेषुविदिताःख्याताःव्यासःप्रष्ठोऽग्र्योयेषांतेव्यासप्रमुखावसिष्ठाद्यायस्यवाहानांवाहनानांवेदानामधिवाहावाहनाधिकृताभवंति। पुरोऽगाग्रेसरप्रष्ठाऽग्रतःसरपुरःसराइत्यमरः। एवमधरंभुवनंपातालंभूषणपेटिका सर्पभूषणत्वात्। पुष्करमाकाशंपुष्पवाटिका पुष्पस्थानीयचंद्रोद्गमाधारत्वात्। शतमखइंद्रस्तत्प्रमुखाअग्न्यादयोदिक्पालाःशाटीपालनाधिकृताः दिगंबरत्वेनदिशामेवशाटीरूपत्वात्। मनोभूश्चंदनतरुः चं

दनस्थानीयभस्मसंबंधित्वात् । मदनभस्मनाशिवेनांगानामनुलेपनस्यपुराणेपुप्रसिद्धेः । अत्रलक्षणंसंगमयति अत्रेति । व्यवस्थितौविवक्षायांसत्यां । अवगम्याव्यंग्याः । विनेयत्वेति शिक्षणीयत्वेत्यर्थः । आदिनापातालगुप्तत्वादिपरिग्रहः । अभिहिताइति । वाह्याद्यधिकृतत्वादिनाव्यासादिप्रतिपत्तौसमानवित्तिवेद्यत्वेनव्यासादिविनेयत्वादेरपितेष्ववगमादितिभावः। साक्षादेवव्यासादिविनेयत्वाद्याकारेणकिमितिननिर्दिष्टाइत्याशंक्याह परंत्विति। यद्यप्युक्तविशेष्यविशेषणभावेपिदवतासार्वभौमत्वमवगम्यतेतथापिस्फुटप्रतिपत्त्यर्थंतद्वैपरीत्यंकृतमित्यर्थः । चक्रेति । योदेवःसुदर्शनचक्रस्याभिघातेयाप्रसभंआज्ञातयैवराहुवधूजनस्यसुरतोत्सवमालिंगनस्योद्दामाउद्भटायेविलासास्तैर्वंध्यंरहितंचुंबनमात्रावशेषंचकारेत्यन्वयः । विशिष्टेनोक्तविशेषणविशिष्टेन । एवंच दृशोदाहरणयोजनेच । अनुपपत्तिमिति । गम्यस्यराहुशिरश्छेदस्यभंग्यंतरेणानभिधानादव्याप्तिमाशंक्येत्यर्थः । अभिधानायोगादिति । अयमाशयः । अत्रहिराहुशिरश्छेदकारीतिवावासुदेवइतिवाव्यंग्यंराहुवधूजनसंवधितादृशरतोत्सवकारित्वेनप्रकारांतरेणाभिधीयतइतिनवक्तुंशक्यं । धर्मिणोवासुदेवस्यप्रक्रांतत्वेनयच्छब्दाभिहितत्वेनचव्यंग्यत्वायोगात्।व्यंग्यस्यचराहुशिरश्छेदकारित्वस्यवासुदेवत्वस्यवाधर्मस्यप्रकारांतरेणानभिधानात्।तस्मात्पर्यायेणकार्यादिद्वारेणोक्तंगम्यमाक्षिप्तंवेतिलक्षणार्थः॥

एवंचगम्यस्यैवाभिधानमितिलक्षणस्यानुपपत्तिमाशंक्याह॥ यद्गम्यं तस्यैवाभिधानायोगात्कार्यादिद्वारेणैवाभिधानंलक्षणे विवक्षितमितिलक्षणंक्लिष्टगत्यायोजितम् । लोचनकृतापर्यायोक्तंयदन्येनप्रकारेणाभिधीयतइतीदमेवलक्षणमंगीकृत्यतदुदाहरणेचकार्येणशब्दाभिहितेनकारणंव्यंग्यंप्रदर्श्यतत्रलक्षणंलक्ष्यनामचक्लिष्टगत्यायोजितं।वाच्यादन्येनप्रकारेणव्यंग्येनोपलक्षितंसद्यदभिधीयतेतत्पर्यायेणप्रकारान्तरेणव्यंग्येनोपलक्षितमुक्तमितिसर्वोयंक्लेशःकिमर्थइतिनाविद्मः।प्रदर्शितानिहिगम्यस्यैवरूपांतरेणाभिधानेबहून्युदाहरणानि चक्राभिघातप्रसभाज्ञयैवेतिप्राचीनोदाहरणमपिस्वरूपेणगम्यस्यभगवतोरूपांतरेणाभिधानसत्त्वात्सुयोजमेव ॥—

अभिधानमाक्षेपोव्यंजनंवा । पर्यायोक्तमिति । क्वचित्पर्यायोक्तइतिपाटस्त्वयुक्तः व्यंगेनोपलक्षितमुक्तमितिव्याख्यानग्रंथविरोधात् । नविद्मइति । यच्छब्दाभिहितस्यापिभगवतोवासुदेवत्वादिनारूपांतरेणव्यंग्यतयायथाश्रुतेबाधकाभावादितिभावः ।

नचाभिधाविषयेकथंव्यंजनेतिवाच्यं। वासुदेवत्वादिनाप्रतीयमानेभगवत्यभिधाविषयत्वासंभवात्। तस्याःस्वावच्छेदकधर्मेणैवबोधकत्वात्। अतएवोक्तं 'शक्यादन्येनरूपेणज्ञातेभवतिलक्षणा' इति। इहतुलक्षणाहेत्वभावाद्व्यंजनोपगम्यतइति॥—

यत्तु तत्रराहुशिरश्छेदावगमनंतत्रप्रागुक्तरीत्याप्रस्तुतांकुरएव। प्रस्तुतेनचराहोःशिरोमात्रावशेषेणालिंगनवंध्यत्वाद्यापादानरूपेवाच्येभगवतोरूपांतरेउपपादिते तेनभगवतःस्वरूपेणावगमनंपर्यायोक्तस्यविषयः॥—

ननुप्रस्तुतेनतादृशरतोत्सवरूपेणकार्येणप्रस्तुतस्यैवराहुशिरश्छेदरूपकारणस्यप्रतीतौचमत्कृतिविशेषस्तस्याअलंकारत्वंगमयति। तच्चलोच्यमानप्रस्तुतप्रशंसायाअसंभवाद्युक्तरीत्यापर्यायोक्तरूपतयैवस्वीकर्तव्यमित्याशंक्याह। यत्त्विति। अलंकाराणामियत्तानियमाभावेनप्रस्तुतांकुरस्याप्यलंकारांतरत्वादेवंविधशब्दास्वारस्यभंगेनप्राचीनलक्षणव्याख्यानमयुक्तमितिभावः। संक्षेपतोदर्शितमपिपर्यायोक्तविषयंविशदयति प्रस्तुतेनेत्यादिना। यत्तुभगवद्रूपेणावगमनंविशेषणमर्यादालभ्यत्वेनासुंदरंपर्यायोक्तस्यविषयइतितदविचारितरमणीयम्। नहिपर्यायोक्तेव्यंग्यसौंदर्यकृतोविच्छित्तिविशेषः किंतुभंग्यंतराभिधानकृतएव। व्यंग्यंतुभंग्यंतराभिधानतोऽसुंदरमेवप्रायशोदृश्यते। यथाइहागंतव्यमितिविवक्षितेव्यंग्ये अयंदेशोऽलंकरणीयः सफलतामुपनेतव्यइत्यादावतस्तदसुंदरत्वोद्भावनमकिंचित्करमेव। अलंकारसर्वस्वकारग्रंथविरोधोद्भावनंतु तच्छिक्षाकारिणंप्रतिनशोभते। उपजीव्यत्वाद्भावनमपिग्रंथस्याकिंचित्करमेवयुक्तिविरोधइतिपरोत्कर्षासहिष्णुत्वमात्रमुद्भावयितुरवगमयतीत्यलंविस्तरेण॥ ६७॥

पर्यायोक्तंतदप्याहुर्यद्व्याजेनेष्टसाधनम्॥ या
मिचूतलतांद्रष्टुंयुवाभ्यामास्यतामिह॥ ६८॥

अत्रनायिकांनायकेनसंगमय्यचूतलतादर्शनव्याजेननिर्गच्छंत्यासख्यातत्स्वाच्छंद्यसंपादनरूपेष्टसाधनंपर्यायोक्तं।यथावा॥ देहिमत्कंदुकंराधेपरिधाननिगूहितं॥इतिविस्रंसयन्नीवींतस्याः कृष्णोमुदेस्तुनः॥ पूर्वत्रपरेष्टसाधनमत्रकंदुकशोधनार्थेनीवीविस्रंसनव्याजेनस्वेष्टसाधनमितिभेदः॥ ६८॥

प्रकारांतरेणपर्यायोक्तंलक्षयति। पर्यायोक्तमिति। रमणीयेनव्याजेनमिषेणस्वस्यपरस्यवाइष्टस्ययत्साधनंसंपादनंतदपिपर्यायोक्तम्। पर्यायेणव्याजरूपेणोक्तंयत्रेति व्युत्पत्तेः। संपादनेति। संपादनरूपंयदिष्टंतत्साधनंतत्करणमित्यर्थः। देहीति।

परिधानेनाधरवस्त्रेणनिगूहितमाच्छादितमित्यर्थः । एवंचप्रकारद्वयसाधारणंतदन्यतरत्वंसामान्यलक्षणंबोध्यम् ॥ ६८ ॥ इत्यलंकारचंद्रिकायांपर्यायोक्तप्रकरणम् ॥ ॥

उक्तिर्व्याजस्तुतिर्निंदास्तुतिभ्यांस्तुतिनिंदयोः ॥ कः स्वर्धुनिविवेकस्तेपापिनोनयसेदिवम् ॥ ६९ ॥ साधु दूतिपुनःसाधुकर्तव्यंकिमतःपरम् ॥ यन्मदर्थेविल नासिदंतैरपिनखैरपि ॥ ७० ॥

निंदयास्तुतेःस्तुत्यानिंदायावाअवगमनंव्याजस्तुतिः । कः स्वर्धुनीत्युदाहरणेविवेकोनास्तीतिनिंदाव्याजेनगंगासुकृतिवदेवमहापातकादिकृतवतोपिस्वर्गंनयतीतिव्याजरूपयानिन्दयातत्प्रभावातिशयस्तुतिः साधुदूतीत्युदाहरणेमदर्थेमहांतंक्लेशमनुभूतवत्यसीतिव्याजरूपयास्तुत्या मदर्थंनगतासि किन्तु रंतुमेवगतासि धिक्त्वांदूतिकाधर्मविरुद्धकारिणीमितिनिंदावगम्यते ॥—

उक्तिरिति । अत्रनिंदास्तुतिभ्यामितिस्तुतिनिंदयोरितिचेतरेतरयोगोनविवक्षितः । तथाचनिंदयास्तुतेःस्तुत्याचनिंदायाःस्तुत्यास्तुतेश्चोक्तिरभिव्यक्तिर्व्याजस्तुतिरित्यर्थः । प्रथमेव्याजेनस्तुतिरितिचरमयोर्व्याजरूपास्तुतिरितिचव्युत्पत्तेः । अतएवव्याजस्तुतिपदार्थानुगमाभावान्निंदयानिंदाभिव्यक्तिर्व्याजनिंदाख्यमलंकारांतरमित्यग्रेवक्ष्यते । एवमाद्येप्रकारद्वयेस्तुतिनिंदयोः समानविषयत्वभिन्नविषयत्वाभ्यांप्रत्येकंद्वैविध्यमिति चत्वारोभेदाः । अंत्यस्तुभिन्नविषयस्तुतिकएकएवेतिपंचभेदाः । लक्षणंतुव्याजनिंदाभिन्नत्वसतिस्तुतिनिंदान्यतरपर्यवसायिस्तुतिनिंदान्यतरत्वंसर्वानुगतंबोध्यम् ॥—

यथावा ॥ कस्तेशौर्यमदोयोद्धुंत्वय्येकंसप्तिमास्थिते ॥ सप्तसप्तिसमारूढाभवंतिपरिपंथिनः ॥ अर्द्धंदानववैरिणागिरिजयाप्यर्द्धंशिवस्याहृतंदेवेत्थंजगतीतलेस्मरहराभावेसमुन्मीलति ॥ गंगासागरमंबरंशशिकलानागाधिपःक्ष्मातलंसर्वज्ञत्वमधीश्वरत्वमगमत्त्वांमांचभिक्षाटनं ॥ अत्राद्योदाहरणेसप्तसप्तिपदगतश्लेषमूलनिंदाव्याजेनस्तुतिर्व्यज्यते । द्वितीयोदाहरणेसर्वज्ञःसर्वेश्वरोऽसीतिराज्ञःस्तुत्याव्याजरूपयामदीयवैदुष्यादिदा

रिद्यादिसर्वं जानन्नपि बहुप्रदानेन रक्षितुं शक्तोऽपि मह्यं किमपि न ददासीति निंदाऽव्यज्यते। सर्वमिदं निंदास्तुत्योरेकविषयत्वे उदाहरणम् ॥—

कस्तइति । नृपं प्रतिकवेरुक्तिः । त्वयि योद्धुमेकं सप्तिमश्वमास्थिते आरूढे सति परिपंथिनः शत्रवः सप्ताश्वसमारूढा भवंतीत्यन्वयः । लप्तसप्तयोऽश्वा अस्येति सूर्यः सप्तसप्तचते सप्तयोऽश्वास्तत्समारूढा इति द्वितीयोर्थो निंदाद्योतकः । त्वया संमुखाहताः सूर्यमंडलं भित्वा दिवमुपगता इति स्तुतौ पर्यवसानं । अर्द्धमिति । शिवस्य देहार्धं दानवानां वैरिणा हरिणा आहृतं । हरिहरात्मकस्यैकस्य विग्रहस्य प्रसिद्धेः । एवं गिरिजयाप्यवशिष्टार्धमाहृतं । हे देवराजन्नित्थमुक्तप्रकारेण जगतीतले स्मरहरस्याभावे समुन्मीलति प्रकाशमाने सति गंगा सागरं प्रसगमदिसाद्यन्वयः । नागाधिपः शेषः क्ष्मातलं पातालं । त्वामिति पूर्वान्वितं । वैदुष्यादीति । विद्वत्तादीत्यर्थः । आदिना तपःशीलादिपरिग्रहः । दारिद्र्यादीत्यादिपदेन कुटुंबवाहुल्यादिपरिग्रहः । नचात्र राजवर्णनप्रस्तावे कथं स्तुतेर्व्याजरूपत्वमिति वाच्यं । स्तुतिपर्यवसानविवक्षायां स्वकीयभिक्षाटनोद्घाटनस्यासंगतत्वेन स्तुतेरुक्तनिंदारूपोपालंभपर्यवसानस्यानुभवसिद्धस्याविरुद्धत्वात् ॥ —

भिन्नविषयत्वे निंदया स्तुत्याभिव्यक्तिर्यथा ॥ कस्त्वं वानर रामराजभवने लेखार्थसंवाहको यातः कुत्र पुरागतः स हनुमान्निर्दग्धलंकापुरः॥ बद्धो राक्षससूनुनेति कपिभिः संताडितस्तर्जितः सव्रीडात्तपराभवो वनमृगः कुत्रेति न ज्ञायते। अत्र हनुमन्निंदया इतरवानरस्तुत्यभिव्यक्तिः । स्तुत्या निंदाभिव्यक्तिर्यथा ॥ यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा नैषां गर्ववचः शृणोषि न च तान्प्रत्याशया धावसि । काले बालतृणानि खादसि परं निद्रासि निद्रागमे तन्मे ब्रूहि कुरंग कुत्र भवता किन्नाम तप्तं तपः ॥ अत्र हरिणस्तुत्या राजसेवानिर्विण्णस्यात्मनो निंदाभिव्यज्यते। अयमप्रस्तुतप्रशंसाविषय इत्यलंकारसर्वस्वकारः ॥—

कस्त्वमिति । अंगदं प्रति कस्यचिद्राक्षसस्य प्रश्नः । रामरूपस्य राज्ञो भवने लेखार्थस्य संदेशस्य वाहकोस्मीत्युत्तरं । पुरा पूर्वमागतो निर्दग्धलंकापुरः स हनुमान् कुत्र यात इति पुनः पूर्वस्य प्रश्नः । बद्ध इत्याद्युत्तरार्धमंगदस्योत्तरं । राक्षसस्य रावणस्य सूनुना बद्ध इति हेतोः कपिभिर्वानरैः सम्यक्ताडितस्तर्जितः स वनमृगो हनुमान् व्रीडया लज्जया आत्तः प्राप्तः पराभ

चोयेनताहशःकुत्रयातइतिनज्ञायतइत्यन्वयः । यदिति । हेकुरंग यद्यस्माद्धनिनांमुखं मुहुर्मुहुर्वारंवारंनेक्षसेनपश्यसि । मृषामिथ्या चाटून्प्रियशब्दान्नवदसि । यदितिसर्व त्रसंबध्यते । एषांधनिनांगर्वयुक्तंवचनंनशृणोषि । तान्धनिकान्प्रतिआशयाधनाश यानधावसि । परंकेवलंकालेक्षुधासमये खादसिभक्षयसि निद्रायाआगमेचनिद्रांमाप्नो षि । तत्तस्मात्कुत्रतीर्थेकिंनामतपस्तप्तंतद्ब्रूहीत्यन्वयः । निर्विण्णस्यखिन्नस्य ॥–

तेनहिसारूप्यनिबंधनाप्रस्तुतप्रशंसोदाहरणांतरंवैधर्म्येणापिद्द श्यते । यथा ॥ धन्याःखलुवनेवाताःकाल्हाराःसुखशीतलाः ॥ राममिंदीवरश्यामंयेस्पृशंत्यनिवारिताः ॥ अत्रवाताधन्याइत्य प्रस्तुतार्थादहमधन्यइतिवैधर्म्येणप्रस्तुतोर्थःप्रतीयतइतिव्युत्पा दितं इयमेवाप्रस्तुतप्रशंसानकार्यकारणनिबंधनेति दंडीयदाह "अप्रस्तुतप्रशंसास्यादप्रकांडेतुयास्तुतिः ॥ सुखंजीवंतिहरिणा वनेष्वपरसेविनः ॥ अर्थैरयत्नसुलभैर्जलदर्भांकुरादिभिः ॥ से यमप्रस्तुतैवात्रमृगवृत्तिःप्रशस्यते ॥ राजानुवर्तनक्लेशनिर्विण्णे नमनस्विना" इति । वस्तुतस्त्वत्रव्याजस्तुतिरित्येवयुक्तं स्तु त्यानिन्दाभिव्यक्तिरित्यप्रस्तुतप्रशंसातोवैचित्र्यविशेषसद्भावा त् । अन्यथाप्रसिद्धव्याजस्तुत्युदाहरणेष्वप्यप्रस्तुताभ्यांनिंदा स्तुतिभ्याम्प्रस्तुतेस्तुतिनिन्देगम्येतेइत्येतावताव्याजस्तुतिमा त्रमप्रस्तुतप्रशंसास्यात् । एवंचानयाप्रक्रिययायत्रान्यगतस्तु तिविवक्षयान्यस्तुतिःक्रियतेतत्रापिव्याजस्तुतिरेव । अन्यस्तु तिव्याजेनतदन्यस्तुतिरित्यर्थानुगमसद्भावात् । यथा ॥ शि खरिणिक्वनुनामकियच्चिरंकिमभिधानमसावकरोत्तपः ॥ तरु णियेनतवाधरपाटलंदशतिबिंबफलंशुकशावकः । अत्रशुक शावकस्तुत्यानायिकाधरसौभाग्यातिशयस्तुतिर्व्यज्यते॥ ७०॥

तेनह्रीसस्यइतिव्युत्पादितमित्यग्रेतनेनान्वयः । कल्हारंजलपुष्पविशेषः तत्संबंधि नःकाल्हाराः सुखयंतीतिसुखाश्चतेशीतलाश्चेत्यर्थः । अप्रकांडेअप्रस्तावे । तथाचाप्रस्तु ताचासौप्रशंसाचेतिव्युत्पत्तिरितिभावः । नपरसेविनोऽपरसेविनः प्रशस्यतेस्तूयते । मतद्वयेप्यस्वरसबीजंदर्शयति वस्तुतस्त्वति । अभिव्यक्तिरिति । योऽप्रस्तुतप्रशंसातो

वैचित्र्यस्यविषयआलंवनभूतोविशेषइसन्वयः। अन्यथा ततोवैंचित्र्येपितदंतर्भावांगी कारे। एवंचेति। अन्यगतस्तुतिर्निंदाभ्यामन्यगतानिंदास्तुसभिव्यक्त्योर्व्याजस्तुतित्व सिद्धौचेसर्थः। प्रक्रिययाप्रकारेण शिखरिणीति। नायकांप्रतिनायकस्योक्तिः। हेतरु णिप्रसौशुकबालको नामवितर्के क्वनुकस्मिन्शिखरिणिपर्वतेकियत्कालंचिरंकिमभि धानंकिंनामकंतपअकरोद्येनहेतुनातवाधरवत्पाटलंरक्तवर्णंबिंवफलंदशतीसन्वयः॥७०
इसलंकारचंद्रिकायांव्याजस्तुतिप्रकरणम्॥ ॥ ॥ ॥ ॥

निंदायानिंदयाव्यक्तिर्व्याजनिंदेतिगीयते॥ वि
धेसनिंद्योयस्तेप्रागेकमेवाहरच्छिरः ॥ ७१ ॥

अत्रहरनिंदयाविषमविपाकंसंसारंप्रवर्तयतोविधेरभिव्यंग्या निंदाव्याजनिंदा। यथावा॥ विधिरेवविशेषगर्हणीयःकरट त्वंरटकस्तवापराधः॥ सहकारतरौचकारयस्तेसहवासंसरलेन कोकिलेन॥अन्यस्तुत्यान्यस्तुत्याभिव्यक्तिरितिपंचमप्रकारव्या जस्तुतिप्रतिबंदीभूतेयंव्याजनिंदा ननुयत्रान्यस्तुत्यान्यस्तु तेरन्यनिंदयान्यनिंदायाश्चप्रतीतिस्तत्रव्याजस्तुतिव्याजनिं दालंकारयोरभ्युपगमेस्तुतिनिंदारूपाप्रस्तुतप्रशंसोदाहरणेष्व प्रस्तुतप्रशंसानवक्तव्या तेषामपिव्याजस्तुतिव्याजनिंदाभ्यां क्रोडीकारसंभवादितिचेदुच्यते। यत्राप्रस्तुतवृत्तांतात्स्तुति निंदारूपात्तत्सरूपःप्रस्तुतवृत्तांतःप्रतीयते। अंतश्छिद्रा णिभूयांसीत्यादौतत्रलब्धावकाशासारूप्यानिबंधनाप्रस्तुतप्र शंसा अत्रापिवर्तमानाननिवारयितुंशक्या। अन्यस्तुत्याऽ न्यस्तुतिरन्यनिंदयान्यनिंदेत्येवंव्याजस्तुतिव्याजनिंदेअपि संभवतश्चेत्कामंतेअपिसंभवेताम्। नत्वस्यापरित्यागः। य द्यपिविधिरेवविशेषगर्हणीयइतिश्लोकेविधिनिंदयातन्मूलका कनिंदयाचाविशेषज्ञस्यप्रभोस्तेनचविद्वत्समतयास्थापितस्य मूर्खस्यचनिंदाप्रतीयतइतितत्रसारूप्यानिबंधनाऽप्रस्तुतप्रशं साप्यास्ति तथापिसैवव्याजनिंदामूलेतिप्रथमोपस्थितासापि तत्रदुर्वारा। एवंव्याजनिंदामूलकव्याजनिंदारूपेयमप्रस्तुत

प्रशंसेतिचमत्कारातिशयः । एवमेवव्याजस्तुतिमूलकव्या जस्तुतिरूपाप्यप्रस्तुतप्रशंसादृश्यते ॥—

व्याजनिंदांलक्षयति ॥ निंदायाइति । यत्रान्यनिंदयाऽन्यस्यनिंदायाअभिव्यक्तिः पर्यवस्यतिसाव्याजनिंदा । इतरनिंदाव्याजेननिंदेतिव्युत्पत्तेः । विधेइति । हेविधेअ हमन्प्राक्पूर्वंतेतवैकमेवशिरोयोऽहरदच्छिनत्सएवार्थाद्धरोनिंद्यइत्यन्वयः । निंदयेत भिव्यंग्येत्यनेनान्वितं । निंदयाभिव्यंग्याविधेर्निंदाव्याजनिंदेत्यन्वयः । विषमविपा कंदारुणपरिणामं । विधिरेवेति । विशेषतोगर्हणीयोनिंदनीयः । हेकरटकाकलरंटर टनंकुरु । योसौविधिराम्रवृक्षेसरलेनसौम्येनकोकिलेनसहवासंतवचकारेत्यन्वयः । ननु केनाप्यालंकारिकेणानुक्तायाव्याजनिंदायाः कथमलंकारत्वेनांगीकरणमित्याशं क्याह प्रतिबंदीति । तुल्ययुक्त्याप्रतिबंदीस्थानीयेत्यर्थः । तथाचस्तुतिवन्निंदाया मप्यप्रस्तुतप्रशंसातोवैचित्र्यविशेषात्तदनंतर्भावेव्याजस्तुतौचार्थानुगमाभावादनंतर्भावे पृथगलंकारतायाऔचित्यायातत्वात्प्राचीनैरनुक्तापिस्वीकर्तुमुचितेत्याशयः । प्रागु क्तयोरेकःकृतीशकुंतेष्विसावद्धकृत्रिमेत्यनयोरप्रस्तुतप्रशंसोदाहरणत्वासंगतिमाशंकते नन्विति । क्रोडीकारःस्वविषयीकरणम् । अन्यत्रलब्धात्मकस्यालंकारद्वयस्यक्वचि त्संकरेपिनदोषइत्याशयेनसमाधत्ते यत्रेति । एतच्चइत्यादावित्यनेनान्वितं । अस्या अप्रस्तुतप्रशंसायाः । सैवाप्रस्तुतप्रशंसैव । लावण्येति ॥—

यथावा ॥ लावण्यद्रविणव्ययोनगणितःक्लेशोमहानर्जितः स्वच्छंदंचरतोजनस्यहृदयेचिंताज्वरोनिर्मितः । एषापिस्व गुणानुरूपरमणाभावाद्वराकीहता कोर्थश्चेतसिवेधसाविनिहि तस्तन्वीमिमांतन्वता ॥ अत्राप्रस्तुतायास्तरुण्याःसृष्टिनिंदा व्याजेनतन्निंदाव्याजेनचतत्सौन्दर्यप्रशंसाप्रशंसनीयत्वेनक विविवक्षितायाःस्वकवितायाःसृष्टिनिंदाव्याजेनतन्निंदाव्या जेनचशब्दार्थचमत्कारातिशयप्रशंसायांपर्यवस्यति । अस्य श्लोकस्यवाच्यार्थविषयेयद्यपिनात्यंतसामंजस्यं नहीमेविक ल्पावीतरागस्येतिकल्पयितुंशक्यम् । रसाननुगुणत्वाद्वीत रागहृदयस्याप्येवंविधविषयेष्वप्रवृत्तेश्च । नापिरागिणइति युज्यते।तदीयविकल्पेषुवराकीतिकृपणतालिंगितस्यहतेत्यमं गलोपहितस्यचवचसोऽनुचितत्वात्तुल्यरमणाभावादित्यस्या

त्यन्तमनुचितत्वाच्चस्वात्मनितदनुरूपतासंभावनायामपिरा गित्वेहिपशुप्रायतास्यात् । तथापिविवक्षितप्रस्तुतार्थतायान्न किंचिदसामंजस्यम् । अतएवास्यश्लोकस्याप्रस्तुतप्रशंसापर त्वमुक्तंप्राचीनैः । वाच्यासंभवेप्यप्रस्तुतप्रशंसोपपत्तेरिति॥७१॥

इमांतन्वींतन्वतासृजतावेधसाचेतसिकोऽर्थःकामनाविषयभूतोविनिहितोऽभिसंहितः। किंप्रयोजनमुद्दिश्येयंनिर्मितेत्यर्थः । नन्वनायासेनातिसुंदरतन्वीनिष्पत्तिरेवप्रयोजनं तदभावेपिवालीलामात्रेणतन्निर्माणंस्यादतआह लावण्येत्यादि । यतोलावण्य रूपस्यद्रविणस्यधनस्यव्ययोनगणितः महान्क्लेशोर्ज्जितःकृतः स्वेच्छाचारिणोजन स्यउदासीनस्यापिहृदयेचिंतैवज्वरोनिर्मितः । एषापिवराकीदीनास्वगुणानुरूपस्यव रस्याभावाद्धतेवहतानष्टप्रायात। थाचवन्ध्यायासत्साध्यत्वादनिष्टानुबंधित्वाच्चनतन्व्याः प्रयोजनत्वमुनापिलीलामात्रेणतन्निर्माणंचसंभवतीतिभावः । तन्निदाव्याजेनतरुणी निंदाव्याजेन । तत्सौंदर्यप्रशंसाशब्दार्थचमत्कारातिशयप्रशंसायांपर्यवस्यतीत्यन्व यः । तन्निदाव्याजेनस्वकवितानिंदाव्याजेन । कवितासौंदर्यरूपा । प्रस्तुतार्थ स्यात्यंतमस्फुटत्वात्कथमस्यपद्यस्यतत्परत्वमित्याशंकामपनेतुंभूमिकामारचयति अस्ये त्यादि । रसाननुगुणत्वादिति । वीतरागेशृंगारस्यासंभवादितिभावः । ननुशृं गारसंभवेपितन्वीनिर्माणनिंदया शांतरसपरिपोषादस्त्येवरसानुगुणत्वमतआह वीत रागेति । नापिरागिणइत्यनंतरंइमेविकल्पाइत्यनुपज्यते । विवक्षितेति ।स्वकवितासौं दर्यरूपेत्यर्थः । अतएववाच्यार्थासामंजस्यादेव । वाच्यासंभवेपिवाच्यसामंजस्या संभवेपि । तथाचवाच्यार्थासामंजस्यमेवास्फुटेप्यप्रस्तुतार्थेतात्पर्यंगमयतीतिभावः ॥ ७१ ॥ इत्यलंकारचंद्रिकायांव्याजनिंदाप्रकरणं ॥

आक्षेपः स्वयमुक्तस्यप्रतिषेधोविचारणात् ॥ चं द्रसंदर्शयात्मानमथवास्तिप्रियामुखं ॥ ७२ ॥

अत्रप्रार्थितस्यचंद्रदर्शनस्यप्रियामुखसत्वेनानर्थक्यंविचार्या थवेत्यादिसूचितःप्रतिषेधआक्षेपः। यथावा ॥ साहित्यपाथो निधिमंथनोत्थंकर्णामृतंरक्षतहेकवींद्राः ॥ यत्तस्यदैत्याइवलुं ठनायकाव्यार्थचोराःप्रगुणीभवंति॥ गृह्णंतुसर्वेयदिवायथेच्छं नास्तिक्षतिःक्वापिकवीश्वराणां ॥ रत्नेषुलुप्तेषुबहुष्वमर्त्यैरद्या पिरत्नाकरएवसिंधुः ॥ अत्रप्रथमश्लोकेनप्रार्थितस्यकाव्यार्थ

चोरेभ्योरक्षणस्यस्वोल्लिखितवैचित्र्याणासमुद्रगतरत्नजालव
दक्षयत्वंविचिंत्यप्रतिषेधआक्षेपः ॥ ७२ ॥

आक्षेपइति। स्वयमुक्तस्यार्थस्यकिंचिन्निमित्तमभिसंधायप्रतिषेधआक्षेपः। सूचिनेति। पक्षांतरपरिग्रहस्यपूर्वपक्षप्रतिक्षेपनियतत्वादितिभावः। नचात्रकैमर्थ्यरूपपंचमप्रतीपप्रभेदेनगतार्थत्वंशंकनीयंतस्यात्रप्रतिषेधप्रतिनिमित्तत्वेनाप्राधान्यात्। असंदिग्धमुदाहरति साहित्येति। हेकविश्रेष्ठाःसाहित्यसमुद्ररूपाणांभारतादीनांमंथनादिवपरिशीलनादुत्थितमुत्पन्नंकर्णयोरमृतमिवाल्हादकंकाव्यंरक्षत। यद्यस्मात्तस्यलुंठनार्थंदस्यइव काव्यरूपस्यार्थस्यवित्तस्यचोराःप्रगुणीभवंतिबहुलीभवंतीत्यन्वयः। शृण्हंत्विति। यदिवेत्यथवेत्यनेनसमानार्थं। लुप्तेष्वपहृतेषु। स्वोल्लिखितेति स्वयमुद्भावितेत्यर्थः। वैचित्र्याणामर्थवैचित्र्याणाम् ॥ ७२ ॥

निषेधाभासमाक्षेपंबुधाःकेचनमन्वते ॥ नाहं
दूतीतनोस्तापस्तस्याःकालानलोपमः॥७३॥

केचिदलंकारसर्वस्वकारादयइत्थमाहुः।ननिषेधमात्रमाक्षेपः किंतुयोनिषेधोबाधितःसन्नर्थान्तरपर्यवसितःकिंचिद्विशेषमाक्षिपतिसआक्षेपः।यथादूत्याउक्तौनाहंदूतीतिनिषेधोबाधितत्वादाभासरूपःसंघटनकालोचितकैतववचनपरिहारेण यथार्थवादित्वेपर्यवस्यन्निदानीमेवागत्य नायिकोज्जीवनीयेतिविशेषमाक्षिपति। यथावा ॥नरेंद्रमौले नवयंराजसंदेशहारिणः॥ जगत्कुटुंबिनस्तेऽद्यनशत्रुःकश्चिदीक्ष्यते ॥ अत्रसंदेशहारिणामुक्तौनवयंसंदेशहारिणइतिनिषेधोनुपपन्नः संधिकालोचितकैतववचनपरिहारेणयथार्थवादित्वेपर्यवस्यन्सर्वजगतीपालकस्यतवनकश्चिदपिशत्रुभावेनावलोकनीयः किंतुसर्वेपिराजानोभृत्यभावेनसंरक्षणीयाइतिविशेषमाक्षिपति ॥ ७३ ॥

अर्थांतरपर्यवसिताऽर्थांतरप्रतियोगिकत्वेनावस्थितः। विशेषंव्यंग्यार्थविशेषं। संघटनेति। संयोजनकालेउचितंयत्कैतववचनंमिथ्यावचनंतस्यपरिहारस्तेनोपलक्षितेयथार्थवादित्वेइत्यर्थः। नाहंदूतीत्यत्रहिदूतीपदेनदूतीगतमिथ्यावादित्वविशिष्टंलक्ष्यतेतदभावस्तुयद्यपिनयथार्थवादित्वंतथापितदुपलक्ष्यत्वात्तत्पर्यवसानोक्तिः।नरेंद्रेति।संधिकरणार्थमागतानांदूतानामुक्तिः। नरेंद्राणांराज्ञांमौलिःश्रेष्ठः। संधीति। संधिकालेउचि

तंयत्कैतववचनंतत्परिहारेणोपलक्षितेइतिपूर्ववदर्थः । अत्राहुः।संदेशहारिषुतन्निषेधस्य धाधात्संदेशहारिपदेनकैतववचनप्रयोक्तृत्वविशिष्टंलक्ष्यते । तन्निषेधेनचसत्यवादित्वरूपोविशेषोव्यज्यतइत्ययमेवनिषेधेनविशेषाक्षेपो नतु सर्वजगतीपालकस्येत्यादिर्विशेषो निषेधेनकेवलेनाक्षेप्तुंशक्यते । तस्यजगत्कुटुंबिनइत्युत्तरार्धगम्यत्वात् । एवंस्थितेकथमुच्यतेतवनकश्चिदपीत्यादीति ।तत्रोच्यते । नत्वयमितिनिषेधाभावेकेवलादुत्तरार्धान्नोक्तविशेषावगतिःस्यात् । संधिकालोचितकैतववचनत्वेनैवसंभाव्यमानत्वात् । अपितुतत्कालीनसंध्यभिप्रायमात्रावगमः । निषेधेनतुतत्परिहारेयुक्तउक्तविशेषावगमइत्यनुभवसाक्षिकमेतत् । सत्यवादित्वादिकंतूक्तविशेषेव्यंजनीयेद्वारभूतंनतुतदेवविशेषरूपमचमत्कारित्वात् ।अतएवनाहंदूतीत्यत्रवस्तुवादित्वादिर्विशेषोव्यज्यतइत्यलंकारसर्वस्वकारः। वस्तुवादित्वमादिर्द्वारभूतंयस्यतादृशोविशेषइतितदर्थइति एतेननाहंदूतीतिपूर्वोदाहरणमपिव्याख्यातम् ॥ ७३ ॥

आक्षेपोन्योविधौव्यक्तेनिषेधेचतिरोहिते ॥ ग
च्छगच्छसिचेत्कांततत्रैवस्याज्जनिर्मम ॥ ७४ ॥

अत्रगच्छेतिविधिर्व्यक्तः मागाइतिनिषेधस्तिरोहितः कांतोद्देश्यदेशेनिजजन्मप्रार्थनयात्ममरणसंसूचनेनगर्भीकृतः । यथावा ॥ नचिरंममतापायतवयात्राभविष्यति ॥ यदियास्यसियातव्यमलमाशंकयापिते ॥ अत्रापिनचिरंममतापायेति स्वमरणसंसूचनेनगमननिषेधोगर्भीकृतः ॥ ७४ ॥

अस्यैवप्रभेदांतरमाह आक्षेपोन्यइति । प्रार्थनयामरणसूचनद्वारेणगर्भितोव्यंग्यत्वेनांतर्भावितः । एतच्चतिरोहितइत्यस्यार्थकथनंतदेवमपन्हुतिभिन्नत्वेसतिचमत्कारकारिनिषेधत्वंसामान्यलक्षणंबोध्यं ॥७४॥ इत्यलंकारचंद्रिकायामाक्षेपालंकारप्रकरणम् ॥

आभासत्वेविरोधस्यविरोधाभासइष्यते ॥ वि
नापितन्विहारेणवक्षोजौतवहारिणौ ॥ ७५ ॥

अत्रहाररहितावपिहारिणौहृद्यावितिश्लेषमूलकोविरोधाभासः । यथावा ॥ प्रतीपभूपैरिवकिंततोभियाविरुद्धधर्मैरपिभेत्तृतोज्झिता ॥ अमित्रजिन्मित्रजिदोजसासयद्विचारदृक्चारदृगप्यवर्तत ॥ अत्रविरोधसमाधानोत्प्रेक्षाशिरस्कोविरोधाभासइतिपूर्वस्माद्भेदः ॥ ७५ ॥

आभासत्वइति। विरोधस्याभासत्वेआपाततोभासमानत्वेसतिविरोधाभासोनामालंकारः। आभासतइत्याभासः। विरोधश्चासावाभासश्चेतिव्युत्पत्तेः। ईषदर्थकेनचाङ्भानस्यापातरूपत्वमर्थांतरपरिहार्यत्वरूपंवोध्यते। तथाचैकाधिकरण्येनप्रतीयमानयोःकार्यकारणत्वेनागृह्यमाणयोर्धर्मयोराभासमानाऽपर्यवसन्नविरोधत्वंलक्षणंद्रष्टव्यं। शनिरशनिश्चतमुच्चैरित्यादावतिव्याप्तिवारणायाद्यंविशेषणं। अप्यलाक्षारसासिक्तंरक्तंतवचरणद्वयमितिविभावनावारणायद्वितीयं। पर्यवसितस्यविरोधस्यदोषत्वादपर्यवसन्नत्वंविरोधविशेषणमितिदिक्। श्लेषेति। हारोऽनयोरस्तीत्यर्थेविरोधः मनोहरिणावित्यर्थेनतत्परिहारः। प्रतीपेति। तस्मान्नलाद्भयेनकृताप्रतिकूलनृपैरिवविरुद्धधर्मैरपिभेत्तृताभेदकारितासक्ताकिंमित्युत्प्रेक्षा। यस्मात्सनलःअमित्राणांशत्रूणांजयकृदपिओजसामित्रस्यरवेर्जयकृत् अथचमित्रजिदेवनमित्रजिदितिविरोधः।-चारदृष्टिरपिविचारेदृष्टिर्यस्यताहशः विगतचारहगितिचविरोधः। विरोधेति विरोधसमाधानरूपोत्प्रेक्षाशिरःप्रधानंयस्यताहशइत्यर्थः। यत्तुविरोधसमाधानात्मिकयामुखस्थितयोत्प्रेक्षयाविरोधस्योत्थानमेवभग्नमितिकथमत्रविरोधालंकारइतिकेनचित्सुमनसापिविमनसेवाभिहितं तदसारं विरोधभानमंतरेणविरुद्धधर्मैरपीत्यांद्युत्प्रेक्षायाएवानुत्थानेनश्लेषमूलमाभासमानंविरोधमुपजीव्यैवत्विरोधत्यागोत्प्रेक्षायाअर्थांतरानुगृहीतायास्तत्समाधानत्वेनपश्चादवस्थितत्वादिति ॥ ७५ ॥ इत्यलंकारचंद्रिकायांविरोधाभासप्रकरणम् ॥

विभावनाविनापिस्यात्कारणंकार्यजन्मचेत् ॥
अप्यलाक्षारसासिक्तंरक्तंत्वच्चरणद्वयम् ॥७६ ॥

अत्रलाक्षारसासेकरूपकारणाभावेपिरक्तिमाकथितः। स्वाभाविकत्वेनविरोधपरिहारः। यथावा॥अपीतक्षीबकादंबमसंमृष्टामलांबरं॥ अप्रसादितसूक्ष्मांबुजगदासीन्मनोरमं॥ अत्रपानादिप्रसिद्धहेत्वभावेपिक्षीबत्वादिनिबद्धं। विभाव्यमानशरत्समयहेतुकत्वेनविरोधपरिहारः। यथावा॥वरतनुकबरीविधायिनासुरभिनखेननरेंद्रपाणिना। अवचितकुसुमापिवल्लरीसमजनिवृंतनिलीनषट्पदा। अत्रवल्लर्यांपुष्पाभावेपिभृंगालिंगनंनिबद्धं तत्रवरतनुकबरीसंक्रांतसौरभनरपतिनखसंसर्गरूपंहेत्वंतरंविशेषणमुखेनदर्शितमितिविरोधपरिहारः

विभावनेति। प्रसिद्धेकारणाभावेपिकार्योत्पत्तिर्विभावनालंकारः। विभाव्यतेकार

णांतरंयस्यामितिव्युत्पत्तेः । कारणाभावश्चशाब्दआर्थोवेतिसर्वत्रलक्षणसमन्वयो बोध्यः । एतदेवतंत्रेणसकलविभावनाप्रकारसाधारणंसामन्यलक्षणमाद्यप्रकारविशेषलक्षणंचबोध्यं । तत्राद्यंदर्शितमेव । द्वितीयंतुकारणान्विताभावकथनपूर्वकंकार्योत्पत्तिकथनमित्युदाहरणविशेषबलादेवगम्यतइतिविविच्यनदर्शितं । प्रतिबंधकेसतिकार्योत्पत्तिरूपेतृतीयप्रकारेऽतिव्याप्तेर्वारणायान्वितेति । तत्रप्रतिबंधकस्यवस्तुतःकारणाभावरूपस्यकथनेपिकारणान्वितत्वेनकथनमितितन्निरासः । प्रकारपंचकेपिकारणान्विताभावस्यार्थतोगम्यत्वात्कथनेति । अप्यलाक्षेति । लाक्षारसेनआसमंतात्सिक्तं लाक्षारसासिक्तं पश्चान्नञ्समासः । तस्याःकामिन्याः । अपीतेति । अपीताःपानशून्याः । क्षीवामत्ताःकादंबाःकलहंसायत्र । तथा असंमृष्टंसंमार्जनशून्यममलमंबरमाकाशंयत्र । एवमप्रसादितंवस्त्रगालनकतकक्षोदप्रक्षेपादिनायत्प्रसादनंतच्छून्यंसूक्ष्मंलघ्वंबुयत्र । एवंभूतंजगन्मनोहरमासीदित्यन्वयः । परमार्थतस्तुशुद्धान्विसेवकाव्यादर्शेदृष्टःपाठः । विभाव्यमानेति । वर्ण्यमानेत्यर्थः । वरेति । वरतनोःकेशपाशरचनासंपादकेनातएव सुरभिनखेनराज्ञोहस्तेनावचितकुसुमालूनपुष्पापिलतात्वंतासक्तभ्रमरासंजातेत्यर्थः ।७६

हेतूनामसमग्रत्वेकार्योत्पत्तिश्चसामता ॥ अस्त्रै
रतीक्ष्णकठिनैर्जगज्जयतिमन्मथः ॥ ७७ ॥

अत्रजगज्जयेसाध्येहेतूनामस्त्राणामसमग्रत्वतीक्ष्णत्वादिगुणवैकल्यं । यथावा ॥ उद्यानमारुतोद्धूताश्चूतचंपकरेणवः ॥ उदस्रयंतिपांथानामस्पृशंतोविलोचने ॥ अत्रवाष्पोद्गमनहेतूनामसमग्रत्वंस्पर्शनक्रियावैकल्यं । इमांविशेषोक्तिरितिदंडीव्याजहार । यतस्तत्रप्रथमोदाहरणेमन्मथस्यमहिमातिशयरूपोद्वितीयोदाहरणेचंपकरेणूनामुद्दीपकतातिशयरूपश्चविशेषःख्याप्यतइति । अस्माभिस्तु तीक्ष्णत्वादिवैकल्यमपिकारणविशेषाभावरूपमितिविभावनाप्रदर्शिता ॥

हेतूनामिति । असमग्रत्वेहेतुतावच्छेदकस्यधर्मस्यतत्संबंधस्यवावैकल्येसति । अस्त्रैरितिधर्मवैकल्योदाहरणं । संबंधवैकल्येऽदाहरति उद्यानेति । विलोचनेकर्मभूतेउदस्रयंति उद्गताश्रूणिकुर्वंतीत्यर्थः । क्रियेतिधात्वर्थत्वाभिप्रायं स्पर्शनस्यसंयोगरूपत्वात् । इमांद्वितीयप्रकाररूपांविभावनां व्याजहारेति गुणजातिक्रियादीनांयत्रवैकल्यदर्शनं ॥ विशेषदर्शनायैवसाविशेषोक्तिरिष्यते इतिग्रंथेनव्यवहृतवानित्यर्थंएतेनप्रथमप्रकार

द्वितीयप्रकारस्यवैलक्षण्यंदुरुपपादमितिवदन्नपास्तः । वैलक्षण्याभावेहिप्राचामलंकारांतरत्वेनकथनमसंतानुपपन्नमेवस्यात् । अस्तिचस्वरूपतःकारणाभावकथनात्कारणगतधर्मवैकल्यद्वारेणतद्विशिष्टकारणाभावकथनेसहृदयसिद्धोविच्छित्तिविशेषः । प्रकारांतरास्वीकारेलाघवमितितुस्वीयलाघवोद्भावनमितिकृतमधिकेन ॥७७॥

कार्योत्पत्तिस्तृतीयास्यात्सत्यापिप्रतिबंधके ॥
नरेंद्रानेवतेराजन्दशत्यसिभुजंगमः ॥ ७८ ॥

अत्रनरेंद्राविषवैद्याः सर्पदंशप्रतिबंधकमंत्रौषधिशालिनः श्लेषेणगृहीताइतिसत्येवप्रतिबंधकेकार्योत्पत्तिः । यथावा ॥ चित्रंतपतिराजेंद्रप्रतापतपनस्तव ॥ अनातपत्रमुत्सृज्यसातपत्रंद्विषद्गणम् ॥ ७८ ॥

अकारणात्कार्यजन्मचतुर्थीस्याद्विभावना ॥ शंखाद्वीणानिनादोयमुदेतिमहदद्भुतं ॥ ७९ ॥

अत्रशंखत्वेनकमनीयःकामिनीकंठस्तंत्रीनिनादत्वेनतद्गीतंचाध्यवसीयतइत्यकारणात्कार्यजन्म । यथावा ॥ तिलपुष्पात्समयातिवायुश्चंदनसौरभः । इंदीवरयुगाच्चित्रंनिःसरंतिशिलीमुखाः ॥ ७९ ॥

कार्योत्पत्तिरिति । प्रतिबंधकेसत्यपिकार्योत्पत्तिकथनंतृतीयाविभावना । नरेंद्रानिति । 'नरेंद्रोवार्त्तिकेराज्ञिविषवैद्येपिकथ्यतइतिविश्वः' असिःखड्गएवभुजंगमः । चित्रमिति । प्रतापएवतपनः सूर्यः । आतपत्रंछत्रंतद्रहितमनातपत्रंआतपत्रेणसहितंसातपत्रं ॥ ७८ ॥ ७९ ॥

विरुद्धात्कार्यसंपत्तिर्दृष्टाकाचिद्विभावना ॥ शीतांशुकिरणास्तन्वींहंतसंतापयंतितां ॥ ८० ॥

अत्रतापनिवर्त्तकतयातापविरुद्धैरिंदुकिरणैस्तापजनिरुक्ता । यथावा ॥ उदितेकुमारसूर्येकुवलयमुल्लसतिभातिनक्षत्रं ॥ मुकुलीभवंतिचित्रंपरराजकुमारपाणिपद्मानि । यथावा ॥ अविवेकिकुचद्वंद्वंहंतुनामजगत्त्रयं श्रुतिप्रणयिनोरक्ष्णोरयुक्तंजन

मारणं। पूर्वोदाहरणयोःकारणस्यकार्यविरोधित्वंस्वाभाविकं इहतुश्रुतिप्रणयित्वरूपागंतुकगुणप्रयुक्तमितिभेदः ॥

उदितइति । कस्यचिद्राजकुमारस्यप्रतापवर्णनं । कुमाररूपेसूर्येउदितेसतिकोः पृथिव्यावलयंमंडलमेवकुवलयंकुमुदमुल्लासंप्राप्नोति । क्षत्रंक्षत्रियकुलंनभाति । अथ चनक्षत्रंभातीतिचित्रं । तथापरेषांराजकुमाराणांपाणिकमलानिमुकुलीभवंतिसंकुचंति अंजलिबंधात्तदाकृतीनिभवंतीत्यर्थः । अविवेकीति । विवेकोविशेषदर्शनंविश्लेषश्च तच्छून्यं । परस्परंसंश्लिष्टत्वात् । कुचयुगंकर्तृजगत्त्रयंहंतुनाम । श्रुतिर्वेदःकर्णश्च । प्रणयःपरिचयः ॥ ८० ॥

कार्यात्कारणजन्मापिदृष्टाकाचिद्विभावना ॥ यशःपयोराशिरभूत्करकल्पतरोस्तव ॥ ८१ ॥

यथावा ॥ जातालताहिशैलेजातुलतायांनजायतेशैलः । संप्रतितद्विपरीतंकनकलतायांगिरिद्वयंजातम् ॥ ८१ ॥

यशइति । करएवदातृत्वात्कल्पतरुः । अत्रपयोधिजन्यात्कल्पतरोःकारणस्यपयोधेरुत्पत्तिःषष्ठीविभावना । जातेति । जातुकदाचित् । कनकलतेव कनकलताकामिनी । गिरिद्वयमिवस्तनद्वयं ॥ ८१ ॥ इत्यलंकारचंद्रिकायांविभावनाप्रकरणम् ॥

कार्याजनिर्विशेषोक्तिःसतिपुष्कलकारणे ॥ हृदिस्नेहक्षयोनाभूत्स्मरदीपेज्वलत्यपि ॥ ८२ ॥

यथावा ॥ अनुरागवतीसंध्यादिवसस्तत्पुरःसरः ॥ अहोदैवगतिश्चित्रातथापिनसमागमः ॥ ८२ ॥

विशेषोक्तिलक्षयति । कार्याजनिरिति। पुष्कलेसहकारिसंपन्नेकारणेसति प्रसिद्धकारणसमूहेसतीतियावत् कार्यस्याजनिरनुत्पत्तिर्विशेषोक्तिः । विशेषस्यानुत्पत्तिनिमित्तस्योक्तिरवगतिर्यत्रेतिव्युत्पत्तेः । अनुरागेति । अनुरागोरक्तिमारतिश्च । पुरःसरोग्रवर्तीआज्ञाकरश्च । पूर्वोदाहरणेऽनुक्तनिमित्ताइहदैवगतिवैचित्र्यस्यनिमित्तस्योपादानादुक्तनिमित्तेतिभेदः ॥ ८२ ॥ इतिविशेषोक्तिप्रकरणम् ॥

असंभवोर्थनिष्पत्तेरसंभाव्यत्ववर्णनं ॥ कोवेदगोपशिशुकःशैलमुत्पाटयेदिति ॥ ८३ ॥

यथावा॥अयंवारामेकोनिलयइतिरत्नाकरइतिश्रितोस्माभि

स्तृष्णातरलितमनोभिर्जलनिधिः॥कएवंजानीतेनिजकरपुटी कोटरगतंक्षणादेनंताम्यत्तिमिमकरमापास्यतिमुनिः ॥ ८३ ॥

असंभवइति । कस्यचित्पदार्थस्यनिष्पत्तेरसंभावनीयत्ववर्णनमसंभवोनामालंकारः । गोपशिशुकोगोपालबालकः । निंदायांस्वार्थेवाकमसयः । उत्पाटयेदुद्धरेत् । अयमिति । वारांजलानां निलयःस्थानं तृष्णापिपासाअर्थाभिलापश्च तरलितंचंचलीकृतं श्रितआश्रितः मुनिरगस्त्यः एनंसमुद्रंक्षणात्आसमंतात्पास्यतिइदंकोजानीतइसन्वयः । कीदृशं । निजकरपुटीकरसंपुटमेवकोटरंबिलंतद्गतं । तथाताम्यंतोग्लायंतस्तिमयोमत्स्यामकराश्चयस्यैवंभूतमिसर्थः ॥ ८३ ॥ इत्यसंभवालंकारप्रकरणम् ॥

विरुद्धंभिन्नदेशत्वंकार्यहेत्वोरसंगतिः ॥ विषं जलधरैःपीतंमूर्च्छिताःपथिकांगनाः ॥ ८४ ॥

ययोःकार्यहेत्वोर्भिन्नदेशत्वंविरुद्धं तयोस्तन्निबध्यमानमसंगत्यलंकारः । यथात्रविषपानमूर्च्छयोर्भिन्नदेशत्वं । यथावा॥अहोखलभुजंगस्यविचित्रोयंवधक्रमः॥अन्यस्यदशतिश्रोत्रमन्यःप्राणैर्वियुज्यते॥क्वचिदसंगतिसमाधाननिबंधनेनचारुतातिशयः । यथावा ॥ अजस्रमारोहसिदूरदीर्घांसंकल्पसोपानततिंतदीयां॥श्वासान्सवर्षत्यधिकंपुनर्यद्ध्यानात्तवत्वन्मयतामवाप्य॥विरुद्धमितिविशेषणाद्यत्रकार्यहेत्वोर्भिन्नदेशत्वंनविरुद्धंतत्रनासंगतिः। यथा॥भ्रूचापवल्लींसुमुखीयावन्नयतिवक्रतां॥तावत्कटाक्षविशिखैर्भिद्यतेहृदयंमम ॥ ८४ ॥

विरुद्धमिति । अदृष्टमिसर्थः । भिन्नदेशत्वंभिन्नाधिकरणत्वं । विषंजलंहालाहलंच । संगतस्यभावःसांगसंतदभावोऽसांगत्यं । अजस्रमिति । दमयंतींप्रतिहंसोक्तिः हेदमयंतित्वंतदीयांनलसंबंधिनींदूरमत्यंतंदीर्घांसंकल्पोमनोरथस्तद्रूपसोपानपरंपरामजस्रंनिरंतरमारोहसि । सपुनर्नलोऽधिकंश्वासान्वर्षतिमुंचतीतियत्तत्तवध्यानात्त्वन्मयतांतत्स्वरूपतामवाप्येसन्वयः । अत्रचतुर्थपादेनासंगतिसमाधानं । भ्रूचापेति । भ्रूचापवल्लींभ्रूस्वरूपधनुर्लतां । यावदितिपरिमाणार्थं । वक्रतांनयति आकर्षतीतियावत् । तावत्परिमाणंहृदयंभिद्यतइसर्थः । अत्रहृदयभेदधनुराकर्षणयोःकार्यकारणयोर्भिन्नदेशत्वमेवदृष्टमितिनासंगतिरलंकारः ॥ ८४ ॥

अन्यत्रकरणीयस्यततोन्यत्रकृतिश्चसा ॥ अन्यत्कर्तुंप्रवृत्त स्यतद्विरुद्धकृतिस्तथा ॥ ८५ ॥ अपारिजातांवसुधांचिकीर्ष न्द्यांतथाकृथाः ॥ गोत्रोद्धारप्रवृत्तोपिगोत्रोद्भेदंपुराकरोः ८६

अत्रकृष्णंप्रतिशक्रस्यसोपालंभवचनेभुविचिकीर्षिततयातत्र करणीयमपारिजातत्वंदिविकृतमित्येकासंगतिः। पुरागोत्राया उद्धारेप्रवृत्तेनवराहरूपिणातद्विरुद्धंगोत्राणांदलनंखुरकुट्टनैः कृतमितिद्विविधापिश्लेषोत्थापिता। यथावा ॥ त्वत्खड्गखंडि तसपत्नविलासिनीनांभूषाभवंत्यभिनवाभुवनेकवीर॥नेत्रेषु कंकणमथोरुपुपत्रवल्लीचोलेंद्रसिंहतिलकंकरपल्लवेषु ॥ मोहं जगत्रयभुवामपनेतुमेतदादायरूपमखिलेश्वरदेहभाजां॥निः सीमकांतिरसनीरधिनामुनैवमोहंप्रवर्धयसिमुग्धविलासिनी नां॥ अत्राद्योदाहरणेकंकणादीनामन्यत्रकर्तव्यत्वंप्रसिद्धमि तिनोपन्यस्तं। भवतिनाभावनारूपाअन्यत्रकृतिराक्षिप्यतइ तिलक्षणानुगतिः ॥

अन्यत्रेति । अन्यत्रकर्तव्यस्यवस्तुनस्ततोन्यस्मिन्नधिकरणेयाकृतिःकरणंतदप्य संगतिरित्यनुषज्यते। तथाअन्यत्कार्यंकर्तुंप्रवृत्तस्यतद्विरुद्धकार्यकरणंतृतीयाअसंगतिः। अपगतपारिजातंयस्यास्तां द्यांस्वर्गं । तथापारिजाततरुरहितां अकृथाः कृतवान् । एवंगोत्रायाःपृथिव्याउद्धारायपुरावराहावतारेप्रवृत्तोपित्वंगोत्राणांपर्वतानामुद्भेदंदल नमकरोःकृतवानित्यर्थः । श्लेषोत्थापिताश्लेषमूलकाभेदाध्यवसायोत्थापिता । य थावेति। हेभुवनैकवीर चोलदेशाधिपसिंहसदृश तवखड्गेनखंडितायेसपत्नाःशत्र वस्तद्विलासिनीनामभिनवाअदृष्टपूर्वाभूषाभूषणानिभवंति। यथानेत्रेषुकंकणं जलकण मेवकंकणंवलयंभवतीत्यनुषंगः।अथेतिसमुच्चये।ऊरुषुचपत्रयुक्तावल्लीसैवपत्रिकारचना। करपल्लवेषुतिलयुक्तंकंजलमेवललाटभूषणमिति । मोहमिति । हेअखिलेश्वरजगत्त्रय वर्तिनांदेहधारिणांमोहमपनेतुमेतत्रूपंकृष्णशरीरमादायमर्यादातिक्रांतकांतिरूपरसस मुद्रेणामुनैवरूपेणसुंदरस्त्रीणांमोहंप्रवर्द्धयसीत्यन्वयः । अत्रेति । अनयोर्मध्यइत्यर्थः । आद्योदाहरणेइतिलक्षणानुगतिरित्यन्वयः । भवतिनाभवत्यर्थेनभवनेनेतियावत् । भावनारूपाभवनप्रयोजकव्यापाररूपा । यत्तु अन्यत्रकरणीयस्येत्याद्यसंगतिप्रकार द्वयांतरकथनमयुक्तं । अपारिजातामित्युदाहरणेपारिजातराहित्यचिकीर्षारूपकारण-

स्यकार्येण पारिजातराहित्यनेनवैयधिकरण्यापेनिवधंननेप्राथमिकासंगतितोवैलक्षण्यानुपपत्तेः । आलंबनाख्यविषयतासंबंधनचिकीर्षायाः सामानाधिकरण्येनकार्यमात्रंप्रतिहेतुत्वात् । एवंनेत्रेषुकंकणमित्यादौकंकणत्वनेत्रालंकारत्वयोर्विरुद्धयोः सामानाधिकरण्यवर्णनाद्विरोधाभासत्वमुचितं । एवंगोत्रोद्धारप्रवृत्तोपीत्युदाहरणे । विरुद्धात्कार्यसंपत्तिर्दृष्टाकाचिद्विभावनेत्युक्तविभावनाप्रकारेणैवगतार्थत्वादसंगतिभेदांतरकल्पनानुचिता । मोहमित्यादावपिमोहनिर्वर्तकत्वमोहजनकत्वयोर्विरुद्धयोरेकत्रवर्णनाद्विरोधाभासएवेतिकैश्चिदुक्तं तदसंगतं उक्तसंबंधेनचिकीर्षायाहेतुत्वासिद्धेः।नहियदधिकरणेकार्यचिकीर्षा तदधिकरणमंतर्भाव्योक्तसंबंधेनचिकीर्षायाःकार्यहेतुत्वंतांत्रिकसंमतंयुक्तंवा । अन्यत्रचिकीर्षितस्यापिप्रमादादिनान्यत्रकरणेनव्यभिचारात् । अतएवैवंविधवैयधिकरण्यस्यविरुद्धत्वादपिनप्राथमिकासंगसंतर्भावसंभवः । वस्तुतस्तु विषंजलधरैःपीतंमूर्छिताःपथिकांगनाइत्यत्रेवनात्रकार्यकारणवैयधिकरण्यप्रयुक्तोविच्छित्तिविशेषोपित्वन्यत्रकर्तव्यस्यान्यत्रकरणप्रयुक्तएवेतिसहृदयमेवप्रष्टव्यं । एवंनेत्रेषुकंकणमित्यत्रसत्यपिविरोधाभासेऽन्यत्रचमत्कारित्वेनक्लृप्तालंकारभावाऽन्यत्रकरणरूपाऽसंगतिरपिप्रतीयमानानशक्यानिराकर्तुं । एवंगोत्रोद्धारप्रवृत्तोपीत्युदाहरणे गोत्रोद्धारविषयकप्रवृत्तेर्गोत्रोद्भेदरूपकार्यविरुद्धत्वाद्विरुद्धाकार्यसंपत्तिरपिविभावनेत्यपिनयुक्तं । गोत्रोद्धारप्रवृत्तेर्गोत्रोद्भेदनिवर्तकत्वाभावेनतद्विरुद्धत्वाभावात् । कथंचित्तदभ्युपगमेप्यन्यत्कार्यंकर्तुंप्रवृत्तेनतद्विरुद्धकार्यांतरकरणरूपाऽसंगतिरपिमोहजगत्रयभुवामित्यादौचमत्कारित्वेनलब्धात्मिकाननिवारयितुंशक्यते । नचात्रापिमोहनिवर्त्तकान्मोहोत्पत्तेःसैवविभावनेतिवाच्यं । मोहनिवर्तकस्यसिद्धवदप्रतीतेः । अतएवनविरोधाभासोपिविशेषोक्तिकथनं तत्रासंगतमेव । नहिगोत्रोद्धारविषयकप्रवृत्तिरूपकारणसत्वेपिगोत्रोद्धाररूपस्यकार्यस्यानुत्पत्तिरिहप्रतिपाद्यते किंतु विरुद्धकार्योत्पत्तिरेवेतिविभावनीयं ॥ ८५ ॥ इत्यसंगतिप्रकरणम् ॥

विषमंवर्ण्यतेयत्रघटनाननुरूपयोः ॥ क्वे
यंशिरीषमृद्वंगीक्वतावन्मदनज्वरः॥८६॥

अत्रापिमृदुत्वेनातिदुःसहत्वेनचाननुरूपयोरंगनामदनज्वरयोर्घटना। यथावा ॥ अभिलषसियदींदोवक्त्रलक्ष्मींमृगाक्ष्याः पुनरपिसकृदब्धौमज्जसंक्षालयांकं ॥ सुविमलमथाबिंबंपारिजातप्रसूनैःसुरभयवदनोचेत्त्वंक्वतस्यामुखंक्व ॥ पूर्वत्रवस्तुसतीघटना। अत्रचचंद्रवदनलक्ष्म्योस्तार्किताघटनेतिभेदः ॥

विषममिति । परस्परमानुरूप्यरहितयोःपदार्थयोर्वत्रघटनासंबंधोवर्ण्यतेतत्रविषमं नामालंकारः । संबंधश्चसंयोगादिः । उत्पाद्योत्पादकभावश्चेतिसर्वप्रकारसाधारणमेत ल्लक्षणंबोध्यं । अभिलपसीति । अंकंकलंकं संक्षाल्य प्रक्षाल्य अथप्रक्षाळनानंतरं । नोचेत्तस्यामुखंक लंक इतिवदेत्सन्वयः । वस्तुसतीवस्तुगत्या विद्यमाना । चंद्रेति । चंद्रश्च वदनलक्ष्मीश्चतयोरित्यर्थः । विरूपकार्यस्येति । कारणविलक्षणस्वरूपस्येत्यर्थः ॥८७॥

विरूपकार्यस्योत्पत्तिरपरंविषमंमतं ॥ की
र्तिंप्रसूतेधवलांश्यामातवकृपाणिका॥ ८८॥

अत्रकारणगुणप्रक्रमेणविरुद्धाच्छ्यामाद्धवलोत्पत्तिः । कार्य कारणयोर्निवर्त्यनिवर्तकत्वेपंचमीविभावना । विलक्षणगुण शालित्वेत्वयंविषमइतिभेदः ॥

कृपाणिका खड्गः । प्रक्रमेणेति । प्रक्रमः परिपाटी स्वसजातीयकार्यगुणोपाद कत्वरूपाविरुद्धाकार्यसंपत्तिरितिपंचमविभावनाप्रकारेणाभेदमाशंक्याह कार्येति । अयंविषमउक्तविषमालंकारप्रभेदः ॥ ८८ ॥

अनिष्टस्याप्यवाप्तिश्चतदिष्टार्थसमुद्यमात् ॥ भ
क्ष्याशयाहिमंजूषांदृष्ट्वाखुस्तेनभक्षितः ॥ ८९॥

इष्टार्थमुद्दिश्यकिंचित्कर्मारब्धवतोनकेवलमिष्टस्याऽनवाप्तिः किंतुततोनिष्टस्यापिप्रतिलंभश्चेत्तदपिविषमं ।यथाभक्ष्यप्रेप्स यासर्पपेटिकांदृष्ट्वाप्रविष्टस्यमूषकस्यनकेवलंभक्ष्यालाभः किं तुस्वरूपहानिरपीति । यथावा ॥ गोपालइतिकृष्णत्वंप्रचुर क्षीरवाञ्छया॥श्रितोमातृस्तनक्षीरमप्यलभ्यंत्वयाकृतं ॥इद मर्थावाप्तिरूपेष्टार्थसमुद्यमादिष्टानवाप्तावनिष्टप्रतिलंभेचोदा हरणं । अनर्थपरिहारार्थरूपेष्टार्थसमुद्यमात्तदुभयंयथा॥दिवि श्रितवतश्चंद्रंसैंहिकेयभयाद्रुचि॥शशस्यपश्यतन्वंगिसाश्रयस्य ततोभयं॥अत्रनकेवलंशशस्यस्वानर्थपरिहारानवाप्तिः किंतुसा श्रयस्याप्यनर्थावाप्तिरितिदर्शितं।प्राग्निष्टप्रापणरूपेष्टार्थसमु द्यमात्तदुभयंयथा॥दिधक्षन्मारुतेर्वालंतमादीप्यदशाननः॥

आत्मीयस्य पुरस्यैव सद्योदहनमन्वभूत्॥ पुरस्यैवेत्येवकारेणप रानिष्टप्रापणाभावोदर्शितः। अनिष्टस्याप्यवाप्तिश्चेतिश्लोकेऽ निष्टावाप्तेरपिशब्दसंगृहीतायाइष्टानवाप्तेश्चप्रत्येकमपिविषम पदेनान्वयः। ततश्चकेवलानिष्टप्रतिलंभः केवलेष्टानवाप्तिश्चे त्यन्यदपिविषमद्वयंलक्षितंभवति ॥–

तृतीयप्रकारमाह अनिष्टस्यापीति । अपिर्भिन्नक्रमः इष्टार्थसमुद्यमादनिष्टस्यावा प्तिरपिच तद्विषमित्यर्थः । अपिनाइष्टानवाप्तिःसंगृह्यते चकारःपूर्वोक्तविषमसमुच्च यार्थः। भक्ष्येति । अहिमंजूषांसर्पपेटिकांदष्ट्वाभक्ष्यस्याशयाप्रविष्टआखुर्मूषकस्तेना हिनाभक्षितइत्यन्वयः। यत्तुप्रविष्टइत्यस्यागम्यमानत्वान्न्यूनपदत्वमितिकेनचिदुक्तंतदभि निवेशदुष्टस्वहृदयानुभवविकत्थनमित्युपेक्षणीयं। अनिष्टस्यापिप्रतिलंभइत्यत्राप्यपिर्भि न्नक्रमोबोध्यः। गोपालइति। हेकृष्णत्वंगोपालइतिहेतोर्बहुदुग्धवांछयाश्रितआश्रितः त्वयातुमातृस्तनदुग्धमप्यलभ्यंकृतं मुक्तिदानेनेतिभावः। पूर्वत्रेष्टानवाप्तिरर्थगम्या इहत्व पिशब्दगम्येतिविशेषः। इदमितिउदाहरणमितिचजातावेकवचनं। दिवीति। भुविसैंहि केवलस्यासिंहि पुत्रस्यासिंहस्यभयात्दिविआकाशेचंद्रमाश्रितवतःशशस्यसाश्रयस्याश्र यसहितस्य ततःसैंहिकेयाद्राहोर्भयमेतत् हेतन्वंगिपश्येत्यन्वयः। परेति परस्यानिष्टावाप्ति रूपोयइष्टार्थइत्यर्थः। तदुभयंइष्टानवाप्त्यनिष्टावाप्तिद्वयं। दिधक्षन्निति। दशाननोरावणो मारुतेर्हनुमतोवालंपुच्छंदग्धुमिच्छन्तंवालमादीप्यदीपयतिस्मेत्यर्थः। प्रत्येकमपीति। अपिनाइष्टानवाप्तिसमुच्चितायाअनिष्टावाप्तेर्विषमपदेनान्वयःसमुच्चीयते । विषमपदे नविषमपरामर्शकेनतत्पदेन । तथाचतात्पर्यबलाद्वाक्यमावर्तनीयमितिभावः । य त्त्वनिष्टस्यैवतदुत्तरापिशब्दसमुच्चितायाइष्टानवाप्तेरप्याप्तो तिनैवान्वयोनतुतत्पदपरामृ ष्टेनविषमेणान्युत्पत्तेरिति । तत्प्रागेवापिशब्दान्वयव्याख्यानेननिरस्तंवेदितव्यं ॥–

तत्रकेवलानिष्टप्रतिलंभोयथा॥ पद्मातपत्ररसिकेसरसीरुहस्य किंबीजमर्पयितुमिच्छसिवापिकायां॥कालःकलिर्जगदिदंनकृ तज्ञमङ्गेस्थित्वाहरिष्यतिमुखस्यतवैवलक्ष्मीं ॥अत्रपद्मातपत्र लिप्सयापद्मबीजावापंकृतवत्यास्तल्लाभोऽस्त्येवकिंतुमुखशो भाहरणरूपोत्कटानिष्टप्रतिलंभः। केवलेष्टानवाप्तिर्यथा॥ खि न्नोसिमुंचशैलंबिभृमोवयमितिवदत्सुशिथिलभुजः॥ भरभु ग्नविततबाहुषुगोपेषुहसन्हरिर्जयति ॥ अत्रयद्यपिशलस्योप

रिपतनरूपानिष्टावाप्तिरपिप्रसक्तातथापिभगवत्करांबुजस्सं सर्गमहिम्नासानजातेतिशैलधारणरूपेष्टानवाप्तिमात्रम् ॥–

पद्मेति । दयितांप्रतिनायकोक्तिः । पद्मस्यातपत्रंछत्रंतत्ररसिकेहेतन्विवापिकायां सरसीरुहस्यपद्मस्यकंदमर्पयितुंकिमितीच्छसि । यतः हेअज्ञेकलियुगरूपःकालःइदं जगत्कृतज्ञंचनभवति। ततःकिं तत्राह। इदंसरसीरुहंस्थितत्वातवैवमुखस्यलक्ष्मींहरिष्य ति नत्वन्यस्याइत्यर्थः । खिन्नोसीति। विभूमोधारयामः । वदत्सुगोपेषुशिथिलौभुजौ यस्यसः भरेणशैलभारेणभुग्नावक्राःविततविस्तीर्णाबाहवोयेषांतथाभूतेषुसत्सुहसन् । अत्रेति। नच भरभुग्नेत्यनेनबाहुगतास्थिसंधिभंगरूपानिष्टप्राप्तेः साक्षादुपात्तत्वात्स र्वांगचूर्णीभावगर्वापहाररूपायाश्चस्फुटंगम्यमानत्वात्कथमिष्टाप्राप्तिमात्रमित्युच्यतइ तिवाच्यं । अस्थिसंधिभंगस्याशब्दार्थत्वाद्भगवद्भुजशैथिल्यप्रयुक्तभाराधिक्येनवक्र तापात्रस्यशब्दोपात्तस्यचक्लेशविशेषानाधायकत्वेनानिष्टव्यपदेशानर्हत्वात् सुहृद्भूतानां गोपानामनिष्टप्राप्तौहास्यानुपपत्तेश्च । अतएवनसर्वांगचूर्णीभावोपिगम्यः । गर्वप्रस क्त्यभावाच्चनतदपहारोपि । यतश्चिरकालशैलधारणजन्यश्रमपरिजिहीर्षयागोपानामि ष्टत्तिरिहावगम्यतइतिनिरवद्यं ॥–

यथावा ॥ लोकेकलंकमपहातुमयंमृगांकोजातोमुखंतवपुन स्तिलकच्छलेन॥तत्रापिकल्पयसितन्विकलंकरेखांनार्यःसमा श्रितजनंहिकलंकयंति॥अत्रानिष्टपरिहाररूपेष्टानवाप्तिः। य थावा ॥ शापोप्यदृष्टतनयाननपद्मशोभेसानुग्रहोभगवतामप यिपातितोयं॥कृष्यांदहन्नपिखलुक्षितिमिंधनेद्धोबीजप्ररोहज ननींदहनःकरोति॥ अत्रपरानिष्टप्रापणरूपेष्टानवाप्तिः। स्व तोऽनिष्टस्यापिमुनिशापस्यमहापुरुषार्थपुत्रलाभावश्यंभावग र्भतयादशरथेनेष्टत्वेनसमर्थितत्वात्। यत्रकेनचित्स्वेष्टसिद्ध्य र्थंनियुक्तेनान्येननियोक्तुरिष्टमुपेक्ष्यस्वस्यैवेष्टंसाध्यते तत्रापी ष्टानवाप्तिरूपमेवविषमं ॥–

लोकइति । हेतन्वि लोकेप्रसिद्धंकलंकमपहंतुंनिवारयितुंमृगांकस्तवमुखंजातस्त त्रापिपुनस्तिलकव्याजेनकलंकरेखांत्वंकल्पयसिकरोषि । हियस्मान्नार्यःसमाश्रि तजनंस्त्र्याश्रितजनंकलंकिनंकुर्वंतीत्यन्वयः । शापोपीति । मृगयायांप्रमादतोहतपुत्रेण तापसेनत्वमपिपुत्रशोकान्मरिष्यसीतिशापेदत्तेतंप्रतिदशरथस्येयमुक्तिः । अदृष्टपुत्रमु

खपंकजशोभेमयिभगवतात्वयापातितोऽयंशापोऽपिसानुग्रहोभवतिखलुनिश्चितं इंधनैरिद्धोदीप्तोदहनःकृषियोग्यांक्षितिंदहन्नपिवीजांकुरजननींकरोतीतिदृष्टांतः । परेति । परस्यदशरथस्यानिष्टप्रापणरूपंयदिष्टंतस्यानवाप्तिरर्थात्तापसस्येत्यर्थः । कुतस्तत्राह स्वतइति । नियोक्तुःप्रेषयितुः ॥—

यथा॥यंप्रतिप्रेषितादूतीतस्मिन्नेवलयंगता॥ सख्यःपश्यतमौढ्यंमेविपाकंवाविधेरमुं ॥ तस्मिन्नेवलयंगतेतिनायकेदूत्याःस्वाच्छंद्यंदर्शितं । यथावा ॥ नपुंसकमितिज्ञात्वाप्रियायैप्रेषितंमनः ॥ तत्तुतत्रैवरमतेहताःपाणिनिनावयं॥एतानिसर्वथैवेष्टानवाप्तेरुदाहरणानि ॥कदाचिदिष्टावाप्तिपूर्वकंतदनवाप्तिर्यथामदीयेवरदराजस्तवे। भानुर्निशासुभवदंघ्रिमयूखशोभालोभात्प्रताप्यकिरणोत्करमाप्रभातं॥तत्रोद्धृतेहुतवहात्क्षणलुप्तरागेतापंभजत्यनुदिनंसहिमंदतापः॥ यथावा॥ त्वदङ्कसाम्यमयमंबुजकोशमुद्राभंगात्ततत्सुषुमभित्रकरोपकृत्या ॥ लब्ध्वापिपर्वणिविधुःक्रमहीयमानःशंसत्यनीत्युपचितांश्रियमाशुनाशाम् ॥—

यंप्रतीति । मौढ्यंमूढत्वम् । एवंविधायामासत्वबुद्धेर्विधेर्दैवस्यविपाकंपरिपाकम् फलमितियावत् । भानुरिति । हेहरेभानुःसूर्योभवच्चरणकिरणशोभायालोभात्स्वीयकिरणसमूहंनिशासुप्रभातपर्यंतम्प्रताप्यरात्रौसूर्यकिरणानामग्नौप्रवेशात्तापयित्वातत्रतस्मिन्किरणोत्करेहुतवहादग्नेःसकाशादुद्धृतेसति रक्ततादर्शनान्मंदसंतापःसन्क्षणमात्रेणलुप्तरागेनष्टलौहित्येसत्यनुदिनंतापंभजतीत्यन्वयः । त्वदङ्केति । हेहरेअयंविधुःपर्वणिपूर्णिमायामंबुजस्यकोशःकुड्मलःसएवांबुजरूपभांडारगृहंतस्यमुद्रामुकुलीभावोमुद्रणंच तस्यभंगेनात्ताग्रहीतातत्सुषमातच्छोभायैस्तादृशायेमित्रकराः सूर्यकिरणाःसुहृत्पाणयश्चतेषामुपकृत्यालाभेनत्वदङ्कस्यकांतिंलब्ध्वाऽपिक्रमेणहीयमानः क्षीयमाणःसन्नीत्योपचितांप्रवृद्धांश्रियंआशुनाशोयस्यास्तांशंसतिकथयतीत्यन्वयः ॥ —

अत्राद्यश्लोकेसूर्यकिरणानांरात्रिष्वग्निप्रवेशनमागमसिद्धं ।सूर्यस्यानिजाकिरणेषुभगवच्चरणारुणिमप्रेप्सयातत्कृतंतेषामग्नौप्रतापनंपरिकल्प्यतेषामुदयकालदृश्यमरुणिमानंचतप्तोद्धृतनाराचानामिवाग्निसन्तापनप्रयुक्तारुणिमानुवृत्तिम्परिकल्प्यसूर्य

स्यमहतापिप्रयत्नेनतात्कालिकेष्टावाप्तिरेवजायते नसार्वका-
लिकेष्टावाप्तिरितिदर्शितं । द्वितीयश्लोकेचंद्रस्यभगवन्मुखल
क्ष्मींलिप्समानस्यसुहृत्त्वेनमित्रशब्दश्लेषवशात्सूर्यंपरिकल्प्य
तत्किरणस्यकमलमुकुलविकासनंचंद्रानुप्रवेशनंच सुहृत्पाणे
र्भगवन्मुखलक्ष्मीनिधानकोशगृहमुद्रामोचनपूर्वकमृततोगृही
तभगवन्मुखलक्ष्मीकस्यतयाभगवन्मुखलक्ष्म्या चंद्रप्रसाधना
र्थंचंद्रस्पर्शरूपंचपरिकल्प्यैतावतापिप्रयत्नेन पौर्णमास्यामेव
भगवन्मुखसाम्यरूपेष्टप्राप्तिर्जायते नसार्वकालिकेतिदर्शितं ।
क्वचिदिष्टानवाप्तावपितदवाप्तिभ्रमनिबंधनविच्छित्तिविशेषः ।
यथावा ॥ वल्लालक्षोणिपालत्वदहितनगरेसंचरंतीकिरातीर-
त्नान्यादायकीर्णान्युरुतरखदिरांगारशंकाकुलांगी ॥क्षिप्त्वाश्री
खंडखंडंतदुपरिमुकुलीभूतनेत्राधमन्तीश्वासामोदप्रसक्तैर्मधुक
रपटलैर्धूमशंकांकरोति ॥ अत्रप्रभूताग्निसंपादनोद्योगात्तत्संपा
दनालाभेऽपितल्लाभोभ्रमोपन्यासमुखेननिबद्धः ॥ ८९ ॥

अत्रेति । आगमसिद्धंतस्माद्दिवाग्निरादित्यंप्रविशतिरात्रावादित्यस्तमितिश्रुति सिद्धंप्रवेशनंतत्कृतंसूर्यकृतंतेषांकिरणानामग्नौप्रतापनरूपंपरिकल्प्यउत्प्रेक्ष्य एवंतेषां किरणानामरुणिमानमारक्तत्वंचारुणिमनुवृत्तिरूपंपरिकल्प्य इतिदर्शितमित्यन्वयः। एवमग्रेपिसुहृत्त्वेनसूर्यंपरिकल्प्यतत्किरणस्यचंद्रानुप्रवेशंचशास्त्रसिद्धंसुहृत्पाणेर्यथोक्त विशेषणविशिष्टस्यचंद्रस्पर्शरूपंचपरिकल्प्य इतिदर्शितमित्यन्वयः । वल्लाले ति । हे एतन्नामकभूपाल त्वच्छत्रुनगरेसंचरंतीभिल्लीप्रकीर्णानिरत्नान्यादाय उरुतरामहतीयाखदिरांगारस्यशंकाभ्रांतिस्तयाव्याकुलांगीतदुपरिश्रीखंडकाष्ठशकलं क्षिप्त्वामुकुलीभूतनेत्राफूत्कारंकुर्वतीसती श्वासपरिमलेनप्रसक्तैरागतैर्भ्रमरसमूहैर्धूमशं कांकरोतीत्यन्वयः । प्रभूतेतिबहुलेत्यर्थः । एतेषुचसर्वेषूत्पाद्योत्पादकभावरूपसंबं धगर्भेषुप्रभेदेषुकार्यकारणयोःक्वचिद्विलक्षणगुणशालित्वेनानुरूप्याभावात्क्वचिच्चेष्टोपा दकत्वेनाभिमतस्यकारणस्येष्टानवाप्त्यनिष्टावाप्तिरूपकार्येणानुरूप्याभावत्सामान्यल क्षणसमन्वयोबोध्यः ॥ ८९ ॥ इत्यलंकारचंद्रिकायांविषमालंकारः ॥

समंस्याद्वर्णनंयत्रद्वयोरप्यनुरूपयोः ॥ स्वा
नुरूपंकृतंसद्महारेणकुचमंडलम् ॥ ९० ॥

प्रथमविषमप्रतिद्वंद्वीदंसमं । यथावा ॥ कौमुदीवतुहिनांशु मंडलंजान्हवीवशशिखंडमंडनं ॥ पश्यकीर्तिरनुरूपमाश्रिता त्वांविभातिनरसिंहभूपते॥चित्रंचित्रंवतवतमहाच्चित्रमेतद्विचित्रंजातोदैवादुचितघटनासंविधाताविधाता॥यन्निंबानांपरिणतफलस्फीतिरास्वादनीया यच्चैतस्याःकवलनकलाकोविदःकाकलोकः ॥ पूर्वस्तुतिपर्यवसायीदंनिंदापर्यवसायीतिभेदः ॥९०॥

सममिति । अनुरूपयोरिसनंतरसंबंधस्येतिशेषः । परस्परमनुरूपयोः । संबंधस्यवर्णनंसमंनामालंकारः । सद्मस्थानम् । शशिखंडमंडनंचंद्रकलाभूषणंहरं । चित्रमिति । अत्रचित्रबतशब्दयोर्वीप्साविस्मयातिशयद्योतनाय । परिणतंपक्कम् । स्फीतिः समृद्धिः । एतस्याःफलसमृद्धेःकवलनकलाभक्षणचातुर्यंतत्रकोविदःपंडितः ॥ ९० ॥

सारूप्यमपिकार्यस्यकारणेनसमंविदुः ॥ नीचप्रवणतालक्ष्मीर्जलजायास्तवोचिता॥९१॥

इदंद्वितीयविषमप्रतिद्वंद्विसमं । यथावा ॥ दवदहनादुत्पन्नो धूमोघनतामवाप्यवर्षैस्तं ॥ यच्छमयतितद्युक्तंसोपिचदवमेव निर्दहति ॥ यथावा ॥ आदौहालाहलहुतभुजादत्तहस्तावलंबोबाल्येशंभोर्निटिलमहसाबद्धमैत्रीनिरूढः ॥ प्रौढोराहोरपि मुखविषेणांतरंगीकृतोयःसोयंचंद्रस्तपतिकिरणैर्मामितिप्राप्तमेतत् ॥ पूर्वत्रकारणस्वभावानुरूप्यंकार्यस्यात्रागंतुकतदीयदुष्टसंसर्गानुरूप्यमितिभेदः ॥ ९१ ॥

सारूप्यमपीति । कार्यस्यकारणेनसारूप्यमपिसमालंकारः । नीचेति । नीचप्रवणतानीचासक्तता । जलजायाःसमुद्ररूपजलाज्जातायाः । उचितेति जलस्यतादृशत्वादितिभावः । दवेति । घनतांमेघरूपतांवर्षैर्जलवर्षणैःशमयतिनाशयति । हियस्मात्सोपिदवदहनोपिदवमेवस्वोत्पादकंविनिर्दहति । तथाचकारणस्यस्वोत्पादकनाशकत्वात्कार्यस्यापिधूमस्यतथात्वमुचितमित्यर्थः । आदाविति । विरहिण्याइयमुक्तिः । सोयंचंद्रोमांकिरणैस्तपतीत्येतत्प्राप्तं न्यायमाप्तमित्यर्थः । सकः यआदौहालाहलरूपेणहुतभुजाऽग्निनादत्तोहस्तावलंबोयस्यसः । निटिलंललाटंतत्संबंधिमहसानेत्राग्निनाबद्धयासंबद्धयामैत्र्यानिरूढःप्रसिद्धः । प्रौढोयुवा । राहोर्मुखसंबंधिभिर्विषैरंतरंगीकृतः

ग्रहणकालेसंपर्कातिशयादंतरंगतांप्रापितइसर्थः। अत्रकार्यस्यतापस्यकारणीभूतचंद्र गतदुष्टसंसर्गानुरूपत्वम् ॥ ९१ ॥

विनानिष्टंचतत्सिद्धिर्यमर्थंकर्तुमुद्यमः॥ युक्तो
वारणलाभोयंस्यान्नतेवारणार्थिनः ॥ ९२ ॥

इदंसममानिष्टस्याप्यवाप्तिश्चेत्यर्थिसंगृहीतस्यात्रिविधस्यापिविषमस्यप्रतिद्वंद्वि। इष्टावाप्तिरनिष्टस्याप्रसंगाच्च। अत्रगजार्थितयाराजानमुपसर्पंतं तद्दौवारिकैर्वार्यमाणं प्रतिनर्मवचनमुदाहरणं। नचात्रनिवारणमनिष्टमापन्नमित्युनुदाहरणत्वंशंकनीयं। राजद्वारिक्षणनिवारणंसंभावितमितितदंगीकृत्यप्रवृत्तस्यविषमालंकारोदाहरणेष्विवातर्कितोत्कटाऽनिष्टापत्त्यभावात्। किंच यत्रातर्कितोत्कटानिष्टसत्त्वेश्लेषमाहिम्नाइष्टार्थप्रतिपत्तिस्तत्रापिसमालंकारोऽप्रतिहतएव। उच्चैर्गजैरटनमर्थयमानएवत्वामाश्रयन्निहचिरादुषितोस्मिराजन्॥ उच्चाटनंत्वमपिलंभयसेतदेवमाद्यनैवविफलामहतांहिसेवा॥अत्रयद्यपिव्याजस्तुतौस्तुत्यानिंदाभिव्यक्तिविवक्षायांविषमालंकारस्तथापिप्राथमिकस्तुतिरूपवाच्यविवक्षायांसमालंकारोननिवार्यते॥—

भेदांतरमाह। विनेती। अनिष्टंविनायमर्थंकर्तुमुद्यतस्तत्सिद्धिरपिसममित्यनुवृत्त्यायोज्यं। यदर्थमितिपाठेयश्चासावर्थश्चेसर्थः। युक्तइति। वारणंनिवार्णं वारणोगजश्च युक्तोनस्यादपितुस्यादेवेसर्थः। शोभतइतिक्वचित्पाठःसाधुरेव। अपि, संगृहीतस्यापिशब्दसंगृहीतस्य। नर्मवचनंपरिहासवचनम्। अत्रेष्टावाप्तिःश्लेषकल्पितावोध्या। इष्टार्थप्रतीतिरितिइष्टार्थत्वेनप्रतीतिरिसर्थः। अप्रतिहतइति। अनिष्टस्येष्टाभिन्नत्वेनज्ञानकालेऽनिष्टत्वेनाप्रतिभासादितिभावः। उच्चैरिति। गजैरटनंतदारोहणपूर्वकंगमनम्। इहत्वन्नगरे उषितोस्मिवासंकृतवानस्मि। तदेवंत्प्रार्थ्यमानमेवउच्चाटनंदूरनिरसनमेव। उच्चैर्गजैरटनंप्रतिमांलंभयसेप्रापयसि। हियस्मात् महतांसेवाविफलानभवतीतिमुखेस्तुतिः। ततोदूरनिरसनरूपार्थांतरपरिग्रहेणविषमालंकारस्फूर्त्यानिंदायांपर्यवसानम्। एतेनवैषम्यस्यनिंदारूपस्यव्याजस्तुतिविषयत्वेनतयाऽपवादइतिनिरस्तम्। विषमस्यानिंदामूलत्वेनतद्रूपत्वाभावादिति॥—

एवंयत्रेष्टार्थावाप्तिसत्त्वेपिश्लेषवशादसतोनिष्टार्थस्यप्रतीतिस्त त्रापिसमालंकारस्यनक्षतिः। यथा॥शस्त्रंनखलुकर्तव्यमितिपि त्रानियोजितः॥ तदेवशस्त्रंकृतवान्पितुराज्ञानलंघिता॥ अत्र पितुराज्ञानलंघितेत्यनेनविरोधालंकाराभिव्यक्त्यर्थंनखल्वित्य त्रपदद्वयविभागात्मकरूपांतरस्यापिविवक्षायाःसत्त्वेपिनखलुना तीतिनखल्वित्येकपदेन वस्तुसदर्थांतरपररूपांतरमादाय समा लंकारोप्यस्त्येव। श्लेषलब्धासदिष्टावाप्तिप्रतीतिमात्रेणापिगत मुदाहरणं। यथा॥सत्यंतपःसुगत्यैयत्त्वांबुपुरविप्रतीक्षंसत्॥ अनुभवतिसुगतिमब्जंत्वत्पदजन्मनिसमस्तकमनीयं॥ ९२॥

इष्टार्थावाप्तिसत्त्वेपिवास्तविकेष्टार्थप्राप्तिसत्त्वेपिनक्षतिरिति। अनिष्टप्रतीतेराभासरूप त्वेनापर्यवसानादितिभावः। शस्त्रमिति। तदेवनखल्वेव। एकपदत्वेनेत्युपलक्षणेतृती या। एकपदत्वोपलक्षितंयद्वस्तुसदर्थांतरपरंरूपांतरमित्यर्थः। अर्थांतरंचवास्तविकं पदव्युत्पत्तिकथनेनदर्शितमेव श्लेषलब्धेति। श्लेषेणलब्धाअसतीवस्तुतोऽविद्यमाना याइष्टावाप्तिस्तत्प्रतीतिमात्रेणसमालंकारोदाहरणमपिगतमधिगतम्। मात्रपदेनानिष्टा वाप्तिप्रतीतिव्यवच्छेदः। युक्तोवारणलाभोयमित्यत्रकिंचिदनिष्टस्योच्चैरित्यत्रचोत्कटा निष्टस्यप्रतीतिसत्त्वादुदाहरणांतरमाह यथेति। नायिकांप्रतिनायकस्योक्तिः। हेतन्वि तपःशोभनगत्यैवभवतीतिसत्यंयद्यस्मादब्जंकमलमंबुपुजलेपुरविप्रतीक्षतेतादृशंसत्त्वत्त्वा तपःकृत्वात्वत्पदरूपेजन्मनिसमस्तेभ्यःकमलेभ्यःकमनीयंसुंदरंसत्सुगतिंशोभनांगतिमनु भवतीत्यन्वयः। अत्रकमलस्योत्तमलोकरूपगतिप्राप्त्ययेतपस्यतस्तदलाभेपिशोभनगम नस्यगतिशब्दश्लेषबलादिष्टत्वेनप्रतीतेरिष्टावाप्तिप्रतीतिमात्रंनत्वनिष्टप्रतिभासोपीति॥ ॥ ९२॥ इत्यलंकारचंद्रिकायांसमालंकारः॥

विचित्रंतत्प्रयत्नश्चेद्विपरीतः फलेच्छया॥ नमं तिसंतस्त्रैलोक्यादपिलब्धुंसमुन्नतिम्॥ ९३॥

यथावा॥ मलिनयितुंखलवदनंविमलयतिजगंतिदेवकीर्ति स्ते॥ मित्राल्हादंकर्तुंमित्रायद्रुह्यतिप्रतापोपि॥ ९३॥

विचित्रमिति। फलेच्छयाविपरीतःप्रयत्नश्चेद्विचित्रंनामालंकारः। इष्टविपरी ताचरणमितियावत्। नमंतीति नम्रीभवंतीत्यर्थः। समुन्नतिमुच्चताम्। मलिनयितु

मिति मलिनीकर्तुमित्यर्थः । विमलयति निर्मलीकरोति । जगंतित्रिभुवनानि । मित्रं सुहृन्मित्रःसूर्यश्च ॥ ९३ ॥ इतिविचित्रालंकारः

अधिकंपृथुलाधारादाधेयाधिक्यवर्णनं ॥ ब्र
ह्मांडानिजलेयत्रतत्रमांतिनतेगुणाः ॥ ९४ ॥

अत्रयत्रमहाजलौघेऽनंतानिब्रह्मांडानिबुद्बुदकल्पानीत्याधारस्यातिविशालत्वंप्रदर्श्यतत्रनमांतीत्याधेयानांगुणानामाधिक्यंवर्णितं । यथावा ॥ युगांतकालप्रतिसंहृतात्मनोजगंतियस्यांसविकाशमासत॥तनौममुस्तत्रनकैटभद्विषस्तपोधनाभ्यागमसंभवामुदः ॥ ९४ ॥

अधिकमिति । पृथुलादाधेयापेक्षयाविशालादाधारादाधेयस्याधिक्यवर्णनमेकोधिकालंकारः । युगांतेति । युगांतकालेप्रलयेप्रतिसंहृतःस्वस्मिंल्लयंप्रापितआत्मास्वविलासरूपःप्रपंचोयेनतादृशस्यकैटभद्विषःश्रीकृष्णस्य यस्यांतनौजगंतिभुवनानिविकाशसहितंयथास्यात्तथाआसतस्थितानि तत्रतस्यांतनौतपोधनस्यनारदस्याभ्यागमात्संभवोयासांतामुदःप्रीतयोनममुरित्यन्वयः ॥ ९४ ॥

पृथ्वाधेयाद्यदाधाराधिक्यंतदपितन्मतं ॥ कियद्वाक्ब्रह्मयत्रैतेविश्राम्यंतिगुणास्तव ॥ ९५ ॥

अत्रैतइतिप्रत्यक्षदृष्टमहावैभवत्वेनोक्तानां गुणानां विश्राम्यतीत्यसंबाधावस्थानोक्त्याधारस्यवाग्ब्रह्मणआधिक्यंवर्णितं । यथावा ॥ अहोविशालंभूपालभुवनत्रितयोदरं ॥ मातिमातुमशक्योपियशोराशिर्यदत्रते ॥ अत्रयद्यप्युदाहरणद्वयेपिकियद्वाग्ब्रह्मेति अहोविशालमितिचाऽधारयोःप्रशंसाक्रियते तथापितनुत्वेनसिद्धवत्कृतयोःशब्दब्रह्मभुवनोदरयोर्गुणयशोराश्यधिकरणत्वेनाधिकत्वंप्रकल्प्यैवप्रशंसाक्रियतइतितत्प्रशंसाप्रस्तुतगुणयशोराशिप्रशंसायामेवपर्यवस्यति ॥ ९५ ॥

पृथ्विति । विशालादाधेयाद्यदाधारस्याधिक्यंतदप्यधिकं । कियदिति अपरिमितमित्यर्थः । वाक्शब्दएवब्रह्म इयंचपरमेश्वरंप्रतिभक्तस्योक्तिः । असंबाधेति । असंकटेत्यर्थः । अहोइति । मातिसंमाति । मातुमशक्योऽपरिमितः । अत्रभुवनत्रयोदरे । नन्वाधारयोःशब्दब्रह्मभुवनोदरयोरप्रस्तुतत्वेनाप्रशंसनीयत्वात्तदाधिक्यवर्णनमयुक्तमि

साशंक्याह । अत्रेति । नचात्राप्रस्तुतप्रशंसाशंकनीया । प्रस्तुतस्याप्यभिधानादिति । इत्थंचाधाराधेयान्यतरस्यतनोरप्याधिक्यवर्णनमितिसामान्यलक्षणंबोध्यं ॥९५॥ इत्यलंकारचंद्रिकायामधिकालंकारः ॥

अल्पंतुसूक्ष्मादाधेयाद्यदाधारस्यसूक्ष्मता ॥ मणिमालोर्मिकातेऽद्यकरेजपवटीयते ॥ ९६ ॥

अत्रमणिमालामयोर्मिकातावदंगुलिमात्रपरिमितत्वात्सूक्ष्मा साऽपिविरहिण्याःकरेकंकणवत्प्रवेशितातस्मिन्जपमालावल्लंबतइत्युक्त्यातताेऽपिकरस्यविरहकार्श्यादतिसूक्ष्मतादर्शिता । यथावा ॥ यन्मध्यदेशादपितेसूक्ष्मंलोलाक्षिदृश्यते ॥ मृणालसूत्रमपितेनसंमातिस्तनांतरे ॥ ९६ ॥

अल्पमिति । यदितिसामान्येनपुंसकं । स्वापेक्षयासूक्ष्मादाधेयादाधारस्यसूक्ष्मता यत्तदल्पंनामालंकारः । मणीति । मणिपंक्तिरूपाऊर्मिकाअंगुलीयकंतेकरेअद्यविरहावस्थायांजपमालायतइत्यर्थः । वटशब्दस्यगुटिकापर्यायत्वात् । अतिसूक्ष्मता आधेयभूतमालापेक्षयापिसूक्ष्मता । यदिति । हेचंचलाक्षितवमध्यभागादपियत्सूक्ष्मंदृश्यतेतत्मृणालसूत्रमपितवस्तनयोरंतरेमध्येनमातीत्यन्वयः ॥९६॥ इत्यल्पालंकारः ॥

अन्योन्यंनामयत्रस्यादुपकारःपरस्परं ॥ त्रियामाशशिनाभातिशशीभातित्रियामया ॥९७॥

यथावा । यथोर्ध्वाक्षःपिबत्यंबुपथिकोविरलांगुलिः ॥ तथाप्रपापालिकापिधारांवितनुतेतनुं ॥ अत्रप्रपापालिकायाःपथिकेन स्वासक्त्यापानीयदानव्याजेन बहुकालंस्वमुखावलोकनमभिलषंत्याविरलांगुलिकरणतश्चिरंपानीयदानानुवृत्तिसंपादनेनोपकारःकृतः। तथाप्रपापालिकयापिपानीयपानव्याजेनचिरंस्वमुखावलोकनमभिलषतःपथिकस्यधारातनूकरणतश्चिरंपानीयपानानुवृत्तिसंपादनेनोपकारःकृतः। अत्रोभयोर्व्यापाराभ्यां स्वस्वोपकारसद्भावेपिपरस्परोपकारोपिननिवार्यते ॥ ९७॥

अन्योन्यमिति । यत्रपरस्परमुपकारःस्यात्तत्रान्योन्यंनामालंकारः । त्रियामारात्रिः । यथेति । ऊर्ध्वाक्षऊर्ध्वनयनः । प्रपापलिकाप्रपादानाधिकृताकाचिद्वनिता । धारांजलधारां । तनुंसूक्ष्मां । अत्रेति । प्रपापालिकायापथिकेनो

पकारःकृतइत्यन्वयः । स्वासक्त्येत्यादिप्रपापालिकायाविशेषणं । संपादनेनकरभूतेन । एवंप्रपापालिकयापिपथिकस्योपकारःकृतइत्यन्वयः । यत्तुस्वमुखावलोकनमभिलपंत्साइत्यत्रस्वशब्दस्यप्रपापालिकाबोधकत्वमेवन्याय्यंनपांथबोधकत्वं । यद्विशेषणघटकत्वेनस्वनिजादिशब्दाउपात्तास्तद्बोधकाइतिव्युत्पत्तिरितिकैश्चिदुक्तंतदयुक्तं । मुख्यविशेष्यविशेषणघटकस्यैवस्वनिजादिशब्दस्यमुख्यविशेष्यमात्रगामित्वव्युत्पत्तेःयथादेवदत्तस्यपुत्रःस्वमातृकभक्तइत्यादौस्वशब्दस्यतादृश्यपुत्रगामित्वंनतुगुणभूतदेवदत्तगामित्वं । अतएवेदृशस्थलएव निजतनुस्वच्छलावण्यवापीसंभूतांभोजशोभांविदधमभिनवोदंडपादोभवान्याइत्यत्राभवन्मरूयोगत्वंदूषणमुदाहृतंमम्मटभट्टैःकाव्यप्रकाशिकायां । अन्यत्रतुनस्वविशेष्यगामित्वनियमः । स्वाश्रितानांविप्राणामयंपालकःस्वाज्ञाकारिणांभृत्यानामयंकल्पवृक्षइत्यादौव्यभिचारात् । नचैवंस्वदाररतानांविप्राणामहंभक्तइत्यत्रमदीयदाररतानामितिप्रतीतिःस्यादितिवाच्यं । तात्पर्यस्यनियामकत्वेनापत्त्यभावादिति ॥ ९७ ॥ इत्यन्योन्यालंकारः ॥

विशेषःख्यातमाधारंविनाप्याधेयवर्णनं ॥ ग
तेपिसूर्येदीपस्थास्तमश्छिंदंतितत्कराः ॥९८॥

यथावा ॥ कमलमनंभसिकमलेकुवलयएतानिकनकलतिकायां ॥ साचसुकुमारसुभगेत्युत्पातपरंपराकेयं ॥ अत्राद्येसूर्यस्यप्रसिद्धाधारस्याभावेपितत्कराणामन्यत्रावस्थितिरुक्ता । द्वितीयेत्वंभसः प्रसिद्धाधारस्याभावेपिकमलकुवलययोरन्यत्रावस्थितिरुक्ता । क्वचित्प्रसिद्धाधाररहितानामाधारांतरानिर्देशांविनैवाप्रलयमवस्थितेर्वर्णनंदृश्यते । यथा ॥ दिवमप्युपयातानामाकल्पमनल्पगुणगणायेषां ॥ रमयंतिजगंतिगिरःकथमिवकवयोनतेवंद्याः ॥ अत्रकवीनामभावेपितद्गिरामाधारांतरनिर्देशांविनैवाप्रलयमवस्थितिर्वर्णिता ॥ ९८ ॥

विशेषइति । ख्यातंप्रसिद्धं । तदुक्तं । 'विनाप्रसिद्धमाधारमाधेयस्यव्यवस्थितिरिति' । छिंदंतिनाशयंति । तत्कराःसूर्यकिरणाः । रात्रावादित्यस्याग्नौप्रवेशश्रवणादीपस्थत्वं । कमलमिति । अत्रकमलत्वादिनामुखादेरध्यवसानंबोध्यं । कुवलयेनेत्रे । एतानिकमलकुवलयानि कनकलतारूपायांकामिन्यां । साचकनकलतिकाच । निर्देशःकथनं । आप्रलयंप्रलयपर्यंतंदिवमिति । दिवमुपयातानामपियेषामनल्पगुणगणयुक्तागिरः । आकल्पंकल्पपर्यंतंजगंतिभुवनानिरमयंतीत्यन्वयः ॥ ९८ ॥

विशेषःसोपियद्येकंवस्त्वनेकत्रवर्ण्यते ॥ अं
तर्बहिःपुरःपश्चात्सर्वदिक्ष्वपिसैवमे ॥ ९९ ॥
यथावा ॥ हृदयान्नापयातोसिदिक्षुसर्वासुदृश्यसे ॥ वत्सराम
गतोसीतिसंतापेनानुमीयसे ॥ ९९ ॥

प्रभेदांतरमाह । यदीति ॥ ९९ ॥ ॥ ॥ ॥ ॥

किंचिदारंभतोशक्यवस्त्वंतरकृतिश्चसः ॥ त्वां
पश्यतामयालब्धंकल्पवृक्षनिरीक्षणं ॥ १००॥
यथावा ॥ स्फुरदद्भुतरूपमुत्प्रतापज्वलनंत्वांसृजतानवद्यवि
द्यं॥विधिनाससृजेनवोमनोभूर्भुविसत्यंसवितावृहस्पतिश्च ॥
अत्राद्येराजदर्शनारंभेणकल्पवृक्षदर्शनरूपाशक्यवस्त्वंतरकृ
तिः । द्वितीयेराजसृष्ट्यारंभेणमनोभवादिसृष्टिरूपाशक्यव
स्त्वंतरकृतिः ॥ १०० ॥

तृतीयंप्रकारमाह । किंचिदिति । किंचित्पदार्थारंभेणाशक्यस्यवस्त्वंतरस्यकृतिः करणंचसविशेषः । त्वामितिप्रभुंप्रतियाचकोक्तिः । स्फुरदिति । उत्कटःप्रतापरूपोज्वलनोग्निर्यस्येसर्थः । उक्तविशेषणंत्वांसृजताविधिनाभुविनवोमनोभवादिःससृजेसृष्टइतिसत्यमित्यन्वयः । अत्रचोक्तभेदत्रयान्यतमत्वंसामान्यलक्षणंवोध्यं ॥ १०० ॥ इत्यलंकारचंद्रिकायांविशेषालंकारः ॥

स्याद्व्याघातोन्यथाकारितथाकारिक्रियेतचेत् ॥
यैर्जगत्प्रीयतेहंतितैरेवकुसुमायुधः ॥ १०१ ॥
यद्यत्साधनत्वेनलोकेऽवगतंतत्केनचित्तद्विरुद्धसाधनंक्रियेतचे
त्सव्याघातः। यद्वा । यत्साधनतयाकेनचिदुपात्तंतदन्येनतत्प्र
तिद्वंद्विनातद्विरुद्धसाधनंक्रियेतचेत्सोपिव्याघातः । तत्राद्यउ
दाहृतः। द्वितीयोयथा ॥दृशादग्धंमनसिजंजीवयंतिदृशैवयाः॥
विरूपाक्षस्यजयिनीस्ताःस्तुवेवामलोचनाः ॥ १०१ ॥

स्यादिति । तथाकारितत्कार्यसाधनवस्तु अन्यथाकारितत्कार्यविरुद्धकार्यसाधनं चेत्क्रियेत तदाव्याघातोऽलंकारःस्यादित्यर्थः। यैरिति। यैःकटाक्षविभ्रमादिभिर्जगत्प्रीयतेसंतुष्यतितैरेवकुसुमायुधोहंतीत्यन्वयः । विरूपाक्षस्यहरस्य । जयिनीर्विजयकारिणीः । स्तुवेस्तौमि ॥ १०१ ॥

सौकर्येणनिबद्धापिक्रियाकार्यविरोधिनी ॥ दया
चेद्बालइतिमय्यपरित्याज्यएवते ॥ १०२ ॥

कार्यविशेषनिष्पादकतयाकेनचित्संभाव्यमानादर्थादन्येनका र्यविरोधिक्रियासौकर्येणसमर्थ्यतेचेत्सोपिव्याघातः। कार्यवि रुद्धक्रियायांसौकर्यंकारणस्यसुतरांतदानुगुण्यं ।यथा जैत्रया त्रोन्मुखेनराज्ञायुवराजस्यराज्यएवस्थापनेयत्काणत्वेनसंभा वितंबाल्यंतत्प्रत्युततद्विरुद्धस्यसहनयनस्यैवकारणतयायुवरा जेनपरित्यागस्यायुक्तत्वंदर्शयतासमर्थ्यते ।यथावा॥ लुब्धो नविसृजत्यर्थंनरोदारिद्र्यशंकया ॥दातापिविसृजत्यर्थंतयैवन नुशंकया ॥ अत्रपूर्वोत्तरार्द्धेपक्षप्रतिपक्षरूपेकयोश्चिद्वचनेइति लक्षणानुगतिः ॥ १०२ ॥

भेदांतरमाह । सौकर्येणेति । कारणस्यानुगुण्याधिक्येनेत्यर्थः । निबद्धाकविवर्णि ता । कार्यविरोधिनीपराभिमतकार्यविरुद्धा । दयेति । दिग्विजयायप्रस्थितंराजानं प्रतियुवराजस्योक्तिः । बालइत्यतोमयिदयायौवराज्येस्थापनरूपाचेत्तदातस्मादेवहे तोरहंतवापरित्याज्यएव किंतुस्वेनसहनेतव्यइत्यर्थः । अर्थादितिहेतौपंचमी । अन्व यश्चास्यसमर्थ्यते इत्यनेन अन्येनवक्त्रा । जैत्रेति। जयसाधनेत्यर्थः।लुब्धइति ।तयैवशं कया दारिद्र्यशंकयैव । ननुनिश्चितं । अत्रपूर्वार्धेलुब्धस्यदानाभावसाधकत्वाभिमत दारिद्र्यशंकारूपपूर्वपक्षनिरूपणं। दातुस्तुसैवविरुद्धदानसाधकत्वेनसंमतेतिपूर्वविरुद्धप क्षनिरूपणमुत्तरार्द्धे ।यद्यपिदारिद्र्यस्यतात्कालिकत्वेनजन्मांतरीयत्वेनचशंकाभिन्ना त थाप्यभेदाध्यवसायान्नलक्षणासमन्वयइतिबोध्यं । सामान्यलक्षणंपूर्ववदन्यतमघटि तमनुसंधेयमितिदिक् ॥ १०२ ॥ इतिव्याघातालंकारः ॥

गुंफःकारणमालास्याद्यथाप्राक्प्रांतकारणैः ॥ नये
नश्रीः श्रियात्यागस्त्यागेनविपुलंयशः ॥ १०३ ॥

उत्तरोत्तरकारणभूतपूर्वपूर्वैः पूर्वपूर्वकारणभूतोत्तरोत्तरैर्वावस्तु भिःकृतोगुंफःकारणमालाआद्योदाहृता॥ द्वितीयायथा ॥भवं तिनरकाःपापात्पापंदारिद्र्यसंभवं ॥ दारिद्र्यमप्रदानेनतस्मा द्दानपरोभवेत् ॥ १०३ ॥

गुंफइति । रचनेत्यर्थः । कैस्तत्राह यथेति । प्राक्चप्रांतंचप्राक्प्रांते तेअनतिक्र

स्येतियथाप्राक्प्रातंयानिकारणानितैः। पूर्वपूर्वप्रतिकारणैरुत्तरोत्तरंप्रतिकारणैश्चेत्सर्थः। एवंचोत्तरोत्तरेत्यादिव्युत्क्रमेणाभिधानमुदाहरणक्रमानुरोधेनेतिज्ञेयं ॥ १०३॥ इति अलंकारचंद्रिकायां कारणमालालंकारः ॥ १०३॥

गृहीतमुक्तरीत्यार्थश्रेणिरेकावलिर्मता ॥ नेत्रेकर्णांत विश्रांतेकर्णौदोस्तंभदोलिनौ ॥ १०४ ॥ दोस्तंभैाजा नुपर्यंतप्रलंबनमनोहरौ ॥ जानुनीरत्नमुकुराकारेत तस्यहिभूभुजः ॥ १०५ ॥

उत्तरोत्तरस्यपूर्वपूर्वविशेषणभावः पूर्वपूर्वस्योत्तरोत्तरविशेषण भावोवा गृहीतमुक्तरीतिः। तत्राद्यःप्रकारउदाहृतः। द्वितीयो यथा। दिक्कालात्मसमैवयस्याविभुतायस्तत्रविद्योततेयत्रामु ष्यसुधीभवंतिकिरणाराशेःसयासामभूत् ॥ यस्तात्पित्तमुषः सुयोऽस्यहविषेयस्तस्यजीवातवे वोढायद्गुणमेषमन्मथरिपो स्ताःपांतुनोमूर्त्तयः ॥ १०४ ॥ १०५ ॥

गृहीतेति। वक्ष्यमाणयागृहीतमुक्तरीसानिवद्धार्थपंक्तिरेकावलिरलंकारः। नेत्रइ ति। तस्यभूभुजइतिसर्वत्रसंबध्यते। दोस्तंभयोर्भुजस्तंभयोर्दोलितमांदोलनंययोस्तौ। दोलनाविविपाठेदोलादोलनंययोरस्तीतिविग्रहः। रत्नमुकुरोरत्नदर्पणः। दिक्काले ति। दिक्कालात्मभिस्तुल्यायस्याकाशस्यविभुता। यश्चतत्राकाशेविशेषेणद्योततेसूर्यः। यत्रचचंद्रेअमुष्यसूर्यस्यकिरणाअमृतरूपाभवंति। सचचंद्रोयासामपांराशेःसमुद्रादभूत्। यश्चाग्निस्तासामपांपित्तंभवति। 'शुचिरप्पित्तमितिकोशात्'। यश्चयजमानउपस्सुप्रातः कालेप्यस्यवन्हेर्हविषेहविर्दानायभवति। यश्चवायुःप्राणरूपस्तस्ययजमानस्यजीवात वेजीवनौषधायभवति। यस्याश्चपृथिव्यागुणंगंधंप्रेषवायुर्वोढातामन्मथरिपोर्हरस्याष्टौमू र्त्तयोवोयुष्मान्पांत्विसन्वयः ॥ १०४ ॥ १०५ ॥ इत्येकावल्यलंकारः ॥–

दीपकैकावलीयोगान्मालादीपकमिष्यते ॥ स्मरे णहृदयेतस्यास्तेनत्वयिकृतास्थितिः ॥ १०६ ॥

अत्रास्थितिरितिपदमेकं स्मरेणतस्याहृदयेस्थितिःकृता हृदयेन त्वयिस्थितिःकृतेत्येवंवाक्यद्वयान्वयि अतोदीपकं। गृहीतमुक्त रीतिसद्भावादेकावलीचेतिदीपकैकावलीयोगः। यथावा ॥

संग्रामांगणमागतेनभवताचापेसमारोपिते देवाकर्णययेनयेन सहसायद्यत्समासादितं॥कोदंडेनशराःशरैरिशिरस्तेनापिभूमं डलं तेनत्वंभवताचकीर्तिरतुलाकीर्त्याचलोकत्रयं ॥ अत्रयेनये नसहसायद्यत्समासादितमितिसंक्षेपवाक्यस्थितमेकं समासा दितपदं कोदंडेनशराइत्यादिषुषट्स्वपिविवरणवाक्येषु तत्तदु चितालिंगवचनविपारिणामेनान्वेतीतिदीपकं । शरादीनामुत्तरो त्तरविशेषणभावादेकावलीचेतिदीपकैकावलीयोगः ॥१०६॥

मालादीपकमिति ।मालादीपकंनामालंकारः। एकमितिवाक्यद्वयान्वयीत्यनेनान्वितं । अतइति । एतावन्मात्रेणदीपसादृश्याद्दीपकंनतुप्रागुक्तदीपकालंकारः । भक्तता भक्ततानांसादृश्यस्यगम्यत्वेतदंगीकारादितिभावः । संग्रामेति । कोदंडेनधनुषाशराः समासादिताः शरैःशत्रुमस्तकंसमासादितं तेनशत्रुमस्तकेनापिभूमंडलं तेनभूमंडलेन नत्वंपालकःसमासादितो भवताकीर्तिरासादिता कीर्त्याचलोकत्रयंसमासादितमित्यनुषंगेणन्वायः ॥ १०६ ॥ इत्यलंकारचंद्रिकायामालादीपकं ॥

उत्तरोत्तरमुत्कर्षःसारइत्यभिधीयते ॥ मधु
रंमधुतस्माच्चसुधातस्याःकवेर्वचः ॥१०७॥

यथावा ॥ अंतर्विष्णोस्त्रिलोकीनिवसतिफणिनामीश्वरेसोपि शेतेसिंधोःसोप्येकदेशेतमपिचुलकयांकुंभयोनिश्चकार ॥ धत्ते खद्योतलीलामयमपिनभसिश्रीनृसिंहक्षितींद्रत्वत्कीर्त्तेःकर्णनी लोत्पलमिदमपिचप्रेक्षणीयंविभाति ॥ अयंश्लाघ्यगुणोत्कर्षः । अश्लाघ्यगुणोत्कर्षोयथा । तृणाल्लघुतरस्तूलस्तूलादपिचयाच कः॥ वायुनाकिन्ननीतोसौमामयंप्रार्थयेदिति॥उभयरूपोयथा॥ गिरिर्महान्गिरेरब्धिर्महानब्धेर्नभोमहत् ॥ नभसोपिमहद्ब्रह्मत तोप्याशागरीयसी ॥अत्रब्रह्मपर्यंतेषुमहत्त्वंश्लाघ्यगुणः । प्रकृ तार्थाशायामश्लाघ्यगुणः ॥ १०७ ॥

सारइति । सारोनामालंकारः । तस्याःसुधातः । अंतरिति । विष्णोरंतरुदरे । त्रयाणांलोकानांसमाहारस्त्रिलोकी सोपिविष्णुरपिफणिनांनागानामीश्वरेशेषेशेतेनि द्राति। सोपिशेषोपिसिंधोरेकदेशेतिष्ठतीतिविशेषः। तमपिसिंधुमपिकुंभयोनिरगस्त्यश्चु लकयांचकारपीतवान् । अयमगस्त्योपिनभसिगगनेखद्योतशोभांधत्ते । इदंगगनमपि

प्रेक्षणीयंसुंदरंत्वत्कीर्त्तेःकर्णभूषणंनीलोत्पलंविभातीत्यन्वयः । तूलः कार्पासः प्रकृतार्थाशायां प्रकृतार्थरूपायामाशायाम् ॥ १०७ ॥ इत्यलंकारचंद्रिकायांसारालंकारः॥

यथासंख्यंक्रमेणैवक्रमिकाणांसमन्वयः ॥ शत्रुंमित्रंविपत्तिंचजयरंजयभंजय ॥ १०८ ॥

यथावा ॥ शरणंकिंप्रपन्नानिविषवन्मारयंतिवा॥नत्यज्यतेनभुज्यंतेकृपणेनधनानियत्। अमुंक्रमालंकारइतिकेचिद्व्याजह्रुः ॥ १०८ ॥

यथासंख्यमिति । क्रमिकाणांक्रमेणोक्तानां पदार्थानां । तेनैवक्रमेणान्वयोयथासंख्यंनामालंकारः । शरणमिति । कृपणेनधनानियत्नत्यज्यंतेतात्किंतानिशरणंप्रपन्नानियच्चनभुज्यंतेतात्किंविषवन्मारयंतीतिक्रमेणान्वयः । केशिद्वामनादयः ॥ १०८ ॥ इत्यलंकारचंद्रिकायांयथासंख्यालंकारः ॥

पर्यायोयदिपर्यायेणैकस्यानेकसंश्रयः ॥ पद्मंमुक्त्वागताचंद्रंकामिनीवदनोपमा॥१०९॥

अत्रैकस्यकामिनीवदनसादृश्यस्यक्रमेणपद्मचंद्ररूपानेकाधारसंश्रयणंपर्यायः। यद्यपिपद्मसंश्रयणंकंठतोनोक्तंतथापिपद्मंमुक्त्वेतितत्परित्यागोक्त्याप्राक्तत्संश्रयाक्षेपेणपर्यायनिर्वाहः अतएव"श्रोणीबंधस्त्यजतितनुतांसेवतेमध्यभागःपद्भ्यांमुक्तास्तरलगतयःसंश्रितालोचनाभ्यां ॥ धत्तेवक्षःकुचसचिवतामद्वितीयंतुवक्त्रंत्वद्गात्राणांगुणविनिमयःकल्पितोयौवनेन"इत्यत्रपर्यायंकाव्यप्रकाशकृदुदाजहार।सर्वत्रशाब्दःपर्यायोयथा॥ नन्वाश्रयस्थितिरियंतवकालकूटकेनोत्तरोत्तरविशिष्टपदोपदिष्टा ॥ प्रागर्णवस्यहृदयेवृषलक्ष्मणोथकंठेधुनावससिवाचिपुनःखलानां॥सर्वोप्ययंशुद्धपर्यायः। संकोचपर्यायोयथा॥प्रायश्चरित्वावसुधामशेषांछायासुविश्रम्यततस्तरूणां ॥ प्रौढिंगतेसंप्रतितिग्मभानौशैत्यंशनैरंतरपामयासीत्॥अत्रशैत्यस्योत्तरोत्तरमाधारसंकोचात्संकोचपर्यायः। विकासपर्यायोयथा॥विंबोष्ठएवरागस्तेतन्विपूर्वमदृश्यत॥अधुनाहृदयेप्येषमृगशावा

क्षिद्दृश्यते ॥ अत्ररागस्यपूर्वाधारापरित्यागेनाधारांतरसंक्रमण मितिविकासपर्यायः ॥ १०९ ॥

पर्यायइति । पर्यायेणक्रमेण । अनेकसंश्रयोऽनेकाश्रितत्वं । तदुक्तं । एवंक्रमेणानेकस्मिन्पर्यायइति । पद्ममिति । रात्रौपद्मसंकोचात्त्यागः । अतएवत्यागेनपूर्वसंश्रयणाक्षेपादेव । श्रोणीति । जघनबंधस्तनुतांकृशतांत्यजतिमध्यभागस्तांसेवतेआश्रयति । वक्षःस्थलंकुचसचिवतांकुचसहितत्वंधत्ते । वक्रंत्वद्वितीयं अत्रपूर्वंवक्षसोऽद्वितीयत्वावगमात्पर्यायसंभवोज्ञेयः । अद्वितीयत्वंद्वितीयरहितत्वमनुपमत्वंचैकत्वेनाध्यवसितं । एवंचोदाहरणद्वयेपिपूर्वाधारसमाश्रयणंगम्यं उत्तराधारसमाश्रयणंशाब्दमितिसर्वत्रसर्वाधारसमाश्रयणांशे । नन्विति । हेकालकूटउत्तरोत्तरविशिष्टमुत्कृष्टंपदंस्थानंयस्यतादृशीयमाश्रयस्थितिस्तवकेनोपदिष्टेत्यन्वयः । हृदयेअभ्यंतरे । अवसइतिशेषः । अथानंतरंवृषलक्ष्मणोहरस्यकंठे । अधुनापुनरितिसंबंधः । शुद्धः संकोचविकासामिश्रितः । प्रायइति शैत्यंप्रायोशेषांवसुधांहेमंतेचरित्वाततोवसंतेतरूणांछायासुविश्रम्यसंप्रतिग्रीष्मेतिग्मभानौसूर्येप्रौढिंप्रागल्भ्यंप्राप्तेसतिशनैरपांजलानामंतरभ्यंतरेअयासीत्गच्छतिस्मेत्यर्थः । बिंबोष्ठएवेति । बिंबफलसदृशेओष्ठे । रागोरक्तिमाअनुरागश्च । एपरागः । अत्ररागस्यभेदेप्यभेदाध्यवसायादेकत्वं । यत्तुएकसंबंधनाशोत्तरमपरसंबंधेसत्येवलोकेपर्यायपदप्रयोगात् श्रोणीबंधइतिप्रकाशोदाहृतेतथैवदृष्टत्वाच्चबिंबोष्ठएवेत्यत्रपर्यायकथनमयुक्तमितिकेनचिदुक्तंतत्प्रकाशएवबिंबोष्ठइत्युदाहरणेपर्यायसमर्थनात् भ्रांतमलपनमिवोपेक्षणीयं । आलंकारिकपरिभाषितानांशब्दानांलोकव्यवहारविसंवादस्याकिंचित्करत्वाच्चेतिदिक् ॥ १०९ ॥

एकस्मिन्यद्यनेकंवापर्यायःसोपिसंमतः ॥ अ
धुनापुलिनंतत्रयत्रस्रोतःपुराजनि ॥ ११० ॥

यथावा ॥ पुराभूदस्माकंप्रथममविभिन्नातनुरियंततोनुत्वंप्रेयान्वयमपिहताशाःप्रियतमाः । इदानींनाथस्त्वंवयमपिकलत्रंकिमपरंहतानांप्राणानांकुलिशकठिनानांफलमिदं ॥ अत्रदंपत्योःप्रथममभेदस्ततःप्रेयसीप्रियतमभावस्ततोभार्यापतिभावइत्याधेयपर्यायः ॥ ११० ॥

भेदांतरमाह एकस्मिन्निति । पर्यायेणेत्यनुवर्तते । एकस्मिन्नाधारेक्रमेणयद्यनेकंभवति सोपिपर्यायालंकारःसंमतइत्यर्थः । पुरेति । अस्माकमित्यस्मदोद्वयोश्चेतिद्वयोरपिबहुवचनं । पुरेत्यनेनस्थूलोतीतकालउच्यते । तत्रापिप्रथमंतनुरविभिन्नाऽभूत् ततोनुवितर्के त्वं प्रियतमः वयंप्रियतमाः । इदानींतुत्वंनाथःपतिः वयंभार्याः । इतोपरंकिमनिष्टमितिशेषः ।

कुलिशंवज्रं। अत्रत्वंप्रेयानित्येकवचनेनएकरूपप्रेमपात्रत्वंव्यज्यते प्रियतमाइत्यादिवहुव चनेनैकरूपतद्व्यतिरेकइतिवोध्यं ॥ ११० ॥ इत्यलंकारचंद्रिकायांपर्यायालंकारः ॥

परिवृत्तिर्विनिमयोन्यूनाभ्यधिकयोर्मिथः ॥ ज ग्राहैकंशरंमुक्त्वाकटाक्षात्सरिपुश्रियं ॥ १११ ॥

यथावा ॥ तस्यचप्रवयसोजटायुषःस्वर्गिणःकिमिवशोच्यतेधु ना॥येनजर्जरकलेवरव्ययात्क्रीतमिंदुकिरणोज्ज्वलंयशः ॥१११

परिवृत्तिरिति । न्यूनाधिकयोर्मिथःपरस्परंविनिमयः परिवृत्तिरलंकारः । ज ग्राहेति । कटाक्षपूर्वकमेकंशरंमुक्त्वारिपोःश्रियंजग्राहेत्यर्थः । तस्यचेति । प्रवयसोऽति वृद्धस्यजटायुषोगृध्रविशेषस्यस्वर्गंगतवतःकिमिवशोचनीयं नकिंचित् । जर्जरंजीर्णतरं कलेवरंशरीरंतस्यव्ययोरावणेनसहयुद्धेत्यागस्तस्माद्यशःक्रीतं । शरीरंदत्वायशोगृहीत मित्यर्थः ॥ १११ ॥ इत्यलंकारचंद्रिकायांपरिवृत्त्यलंकारः ॥

परिसंख्यानिषिध्यैकमेकस्मिन्वस्तुयंत्रणं ॥ स्ने हक्षयःप्रदीपेषुनस्वांतेषुनतभ्रुवां ॥ ११२ ॥

यथावा ॥ विलंघयंतिश्रुतिवर्त्मयस्यांलीलावतीनांनयनोत्प लानि ॥ बिभर्तियस्यामपिवक्रिमाणमेकोमहाकालजटार्धचं द्रः ॥ आद्योदाहरणेनिषेधःशाब्दो द्वितीयेत्वार्थः॥ ११२ ॥

परिसंख्येति । एकंवस्तुप्रतिषिध्यापरस्मिन्वस्तुनोनियंत्रणंनियमनं परिसंख्या लंकारः । स्नेहेति । स्नेहस्तैलादिस्निग्धद्रव्यमनुरागश्च । स्वांतेषुचित्तेषु । विलंघयंतीति । यस्यामुज्जयिनीपुर्यां । श्रुतिःकर्णौवेदश्च । वर्त्ममार्गं । वक्रिमाणंकौटिल्यं वक्राकारतां च । महाकालइतितत्रैवख्यातंशिवलिंगं ॥ ११२ ॥ इतिपरिसंख्यालंकारः ॥

विरोधेतुल्यबलयोर्विकल्पालंकृतिर्मता ॥ स द्यःशिरांसिचापान्वानमयंतुमहीभुजः॥११३॥

अत्रसंधिविग्रहप्रमाणप्राप्तयोःशिरश्चापनमनयोर्युगपदुपस्थि तयोर्युगपत्कर्तुमशक्ययोर्विकल्पः । यथावा ॥ पतत्यविरतं वारिनृत्यंतिचकलापिनः ॥ अद्यकांतःकृतांतोवादुःखस्यांतं करिष्यति ॥ प्रियसमागमश्चेन्नमरणमाशंसनीयंमरणेतुनप्रिय समागमसंभवइतितयोराशंसायांविकल्पः ॥ ११३ ॥

संधिविग्रहप्रमाणेति । संधिविग्रहयोः कर्तव्यताबोधकप्रमाणेत्यर्थः ॥ ११३ ॥
इत्यलंकारचंद्रिकायां कल्पालंकारः ॥

बहूनांयुगपद्भावभाजांगुंफःसमुच्चयः ॥ नश्यं
तिपश्चात्पश्यंतित्रस्यंतिचभवद्विषः ॥११४॥

अविरोधेनसंभावितयौगपद्यानांनाशादीनांगुंफनंसमुच्चयः । यथावा ॥ विभ्राणाहृदयेत्वयाविनिहितंप्रेमाभिधानंनवंश ल्यंयद्विदधातिसाविधुरितासाधोतदाकर्ण्यतां॥शेतेशुष्यतिता म्यतिप्रलपतिप्रम्लायतिप्रेंखतिभ्राम्यत्युल्लुठतिप्रणश्यतिगल त्युन्मूर्च्छतित्रुट्यति॥अत्रकासांचित्क्रियाणांकिंचित्कालभेद संभवेपिशतपत्रपत्रशतभेदन्यायेनयौगपद्यंविरहातिशयद्योत नायविवक्षितमितिलक्षणानुगतिः ॥ ११४ ॥

बहूनामिति । युगपद्भावोभवनंतद्भाजांबहूनांगुंफोनिबंधोवर्णनमितियावत् ससमुच्चयालंकारः । विभ्राणेति । नायकंप्रतिदूत्याइयमुक्तिः । हेसाधोत्वयाहृदयेविनिहितं प्रेमाभिधानंनवंशल्यंधारयंती विधुरिताविरहविह्वलासानायिकायद्विदधातितदाकर्ण्य तामित्यन्वयः । किंतदित्यपेक्षायामाह । शेतेनिद्राति । ताम्यतिग्लानिंप्राप्नोति । प्रकर्षेणम्लायति । प्रेंखतिचलति । प्रणश्यति नैर्बल्यातिशयेनमृतप्रायाभवति । गल ति खेदातिशयात् ।त्रुट्यति क्षीणाभवतीति ।कासांचित् शयनभ्रमणादीनां। शतपत्रस्यकमलस्य पत्रशतंदलशतं ॥ ११४ ॥

अहंप्राथमिकाभाजामेककार्यान्वयेपिसः ॥ कु
लंरूपंवयोविद्याधनंचमदयंत्यमुम् ॥ ११५ ॥

येत्रैकःकार्यसिद्धिहेतुत्वेनप्रक्रांतस्तत्रान्येपियद्यहमहमिकया खलेकपोतन्यायेनतत्सिद्धिंकुर्वंतिसोपिसमुच्चयः।यथामदेआ भिजात्यमेकंसमग्रंकारणन्ताद्दृगेवरूपादिकमपितत्साधनत्वे नावतरतीति । यथावा ॥ प्रदानंप्रच्छन्नंगृहमुपगतेसंभ्रमविधि र्निरुत्सेकोलक्ष्म्यामनभिभवगंधाःपरकथाः ॥ प्रियंकृत्वामौनं सदसिकथनंचाप्युपकृतेःश्रुतेत्यन्तासक्तिःपुरुषमभिजातंकथ यति ॥ ११५ ॥

अहंप्राथमिकेति। अहंपूर्विकेत्यर्थः। 'अहंपूर्वमहंपूर्वमित्यहंपूर्विकास्त्रियामित्यमरः'। एककार्यान्वयेएककार्यसाधकत्वे। स समुच्चयालंकारः। अहमहमिकयापरस्पराहंकारेण। आभिजात्यंकुलीनत्वं। समग्रंपुष्कलं। प्रदानमिति। प्रच्छन्नंगुप्तं। गृहंप्रत्युपगतेऽर्थोदतिथौ। लक्ष्म्यांसत्यांनिरुत्सेकोगर्वाभावः। अभिभवोनिंदातद्गंधशून्याः। मौनमनुद्घाटनं। सदसिसभायांपरेणकृतायाउपकृतेःकथनं। श्रुतेशास्त्रश्रवणे। सर्वप्रथमांतानांपुरुषमभिजातंप्रथयतीत्यनेनान्वयः। अभिजातंकुलीनं। प्रथयतिकथयति ॥ ११५॥
॥ इत्यलंकारचंद्रिकायांसमुच्चयालंकारः ॥

क्रमिकैकगतानांतुगुंफःकारकदीपकं ॥ गच्छत्यागच्छतिपुनःपांथःपश्यतिपृच्छति॥११६॥

यथावा ॥ निद्रातिस्नातिभुंक्तेचलतिकचभरंशोषयत्यंतरास्तेदीव्यत्यक्षैर्नचायंगदितुमवसरोभूयआयाहियाहि॥ इत्युद्दन्डैःप्रभूणामसकृदधिकृतैर्वारितान्द्वारिदीनानस्मान्पश्याऽब्धिकन्येसरसिरुहरुचामंतरंगैरपांगैः ॥ आद्योदाहरणेश्रुतस्यपांथस्यकर्तृकारकस्यैकस्यगमनादिष्वन्वयः द्वितीयेत्वध्याहृतस्यप्रभुकर्तृकारकस्यनिद्रादिष्वन्वयइत्येकस्यानेकवाक्यार्थान्वयेनदीपकच्छायापत्त्याकारकदीपकं प्रथमसमुच्चयप्रतिद्वंद्वीदं ॥११६॥

क्रमिकेति। क्रमिकाणामर्थात्क्रियाणामेककारकगतानांगुंफोनिबंधः कारकदीपकंनामालंकारः। तदुक्तं 'सैवक्रियासुबह्वीषुकारकस्येतिदीपकमिति'। सैवसकृद्वृत्तिः। पश्यतिसार्थं। पृच्छतिमार्गं। निद्रातीति। हेअब्धिकन्येप्रभूणामुद्यतदंडैर्द्वारिअधिकृतैर्द्वारपालैरित्यसकृद्वारितानतएवदीनानस्मान्सरसिरुहद्युतीनांपरमपरिचितैरपांगैःकटाक्षैःपश्येत्यन्वयः। इतिकिं। प्रभुर्निद्रातीत्यादि। अंतःअंतःपुरे। अक्षैःपाशैर्दीव्यतिक्रीडति। भूयःपुनः। छायासादृश्यंमुख्यदीपकस्यपूर्वोक्तप्रकारेणसंभवादितिभावः। प्रतिद्वंद्विविपरीतं ॥ ११६ ॥ इतिकारकदीपकालंकारः ॥

समाधिःकार्यसौकर्यंकारणांतरसंनिधेः ॥ उत्कंठिताचतरुणीजगामास्तंचभानुमान्॥११७॥

यथावा ॥ मानमस्यानिराकर्तुंपादयोर्मेपतिष्यतः ॥ उपकारायदिष्ट्यैतदुदीर्णंघनगर्जितं॥केनचिदारिप्सितस्यकार्यस्यकारणांतरसन्निधानाद्यत्सौकर्यंतत्सम्यगाधानात्समाधिः । द्वि

तीयसमुच्चयप्रतिद्वंद्वीअयंसमाधिः । तत्रवहूनाप्रत्येकंसमर्था नांखलेकपोतिकान्यायेनयुगपत्कार्यसाधनत्वेनावतारः । अत्रत्वेकेनकार्येसमारिप्सितेऽन्यस्यकाकतालीयन्यायेनापातितस्य तत्सौकर्याधायकत्वमात्रं । अत्रोदाहरणमुत्कंठितेति । उत्कंठैवप्रियाभिसरणेपुष्कलंकारणंनांधकारागममपेक्षते'अत्यारूढो हिनारीणामकालज्ञोमनोभव'इतिन्यायात् । दैवादापततात्वंधकारेणतत्सौकर्यमात्रंकृतमिति । एवंद्वितीयोदाहरणेपियोज्यं११७

समाधिरिति। कारणांतरसंनिधेर्वशात्कार्यस्यसुकरत्वंसमाधिरलंकारः। उत्कंठिता नायकसमीपंगंतुं । मानमिति । मानंनिराकर्त्तुमस्याःपादयोःपतिष्यतोममोपकारायदिष्ट्याभाग्येनेदंघनगर्जितमुदीर्णमुद्गतमित्यन्वयः । समुच्चयेकारणानांतुल्यकक्षत्वमिहतुतद्विपरीतमतुल्यकक्षत्वमितिप्रतिद्वंद्वित्वंतत्रेत्यादिनादर्शितं॥११७॥ इतिसमाध्यलंकारः॥

प्रत्यनीकंवलवतःशत्रोःपक्षेपराक्रमः ॥ जैत्र
नेत्रानुगौकर्णावुत्पलाभ्यामधःकृतौ ॥ ११८॥

यथावा ॥ ममरूपकीर्तिमहरद्भुवियस्तदनुप्रविष्टहृदयेयमिति ॥ त्वयिमत्सरादिवनिरस्तदयःसुतरांक्षिणोतिखलुतांमदनः ॥ एवंवलवतिप्रतिपक्षेप्रतिकर्त्तुमशक्तस्यतदीयवाधनंप्रत्यनीकमितिस्थितेसाक्षात्प्रतिपक्षेपराक्रमःप्रत्यनीकमितिकैमुतिकन्यायेनफलति । यथा॥मधुव्रतौघःकुपितःस्वकीयमधुप्रपापद्मनिमीलनेन॥ विंवंसमाक्रम्यवलात्सुधांशोःकलंकमंके ध्रुवमातनोति ॥ ११८ ॥

प्रत्यनीकमिति । वलवतःशत्रोःपक्षेपक्षांतःपातिनितदीयेयःपराक्रमस्तत्प्रत्यनीकं नामालंकारः । अनीकप्रतिनिधिरूपत्वात् । जैत्रेति उत्पलाभ्यांस्वजयकारिनेत्रानुसारिणौकर्णावधःकृतौतिरस्कृतौ । अवतंसत्वयातदुपरिस्थितत्वादधस्तात्कृतौचेतिश्लेषः । ममेति। भुविभूलोकेममरूपख्यातिंयोहृतवान्तस्मिन्ननुप्रविष्टमनुरक्तंहृदयंयस्यास्तस्यानुप्रविष्टंहृदयंयस्यांवातादृशंयमितित्वायमत्सरादिवखलुनिश्चितंनिरस्तदयामदनस्तांक्षिणोतिक्षीणांकरोतीत्यन्वयः । अत्रमत्सरादिवेतिहेतूत्प्रेक्षात्वेपितद्धेतुकप्रतिपक्षसंबंधिवाधनंप्रत्यनीकालंकारस्यविविक्तोविषयइतिवोध्यं । अतएवमम्मटभट्टैरपि 'त्वंविनिर्जितमनोभवरूपःसाचसुंदरभवत्यनुरक्ता॥ पंचभिर्युगपदेवशरैस्तांतापयत्यनुश

यादिवकाम' इत्युदाहृतं । एवंचहेतूत्प्रेक्षयैवगतार्थत्वान्नेदमलंकारांतरंभवितुमर्हतीतिक स्यचिद्वचनमनादेयं। कैमुतिकेति । तत्संबंधिबाधनापेक्षयासाक्षात्तद्बाधनेविशेषादिति भावः।मध्विति । भ्रमरौघः । स्वकीयमधुप्रपारूपस्यपद्मस्यनिमीलनेनकुपितःसन्सुधांशो र्बिंबबलात्तमाकृष्यतस्यांकेमध्यभागेकलंकंध्रुवमातनोतीत्यन्वयः ॥ ११८ ॥ इत्यलं कारचंद्रिकायांप्रत्यनीकालंकारः ॥

कैमुत्येनार्थसंसिद्धिःकाव्यार्थापत्तिरिष्यते ॥ सजि
तस्त्वन्मुखेनेंदुःकावार्तासरसीरुहाम् ॥ ११९ ॥

अत्रसइत्यनेनपद्मानियेनजितानीतिविवक्षितं तथाचसोपिये नजितस्तेनपद्मानिजितानीतिकिमुवक्तव्यमितिदंडापूपिका न्यायेनपद्मरूपस्यार्थस्यसंसिद्धिःकाव्यार्थापत्तिः । तांत्रिका भिमतार्थापत्तिव्यावर्तनायकाव्येतिविशेषणं । यथावा ॥ अ धरोयमधीराक्ष्याबंधुजीवप्रभाहरः ॥ अन्यजीवप्रभांहंतहरती तिकिमद्भुतं ॥ स्वकीयंहृदयंभित्वानिर्गतौयौपयोधरौ । हृद यस्यान्यदीयस्यभेदनेकाकृपातयोः ॥ ११९ ॥

कैमुत्येनेति । कैमुत्यन्यायेनेत्यर्थः । काव्येलंकाररूपार्थापत्तिःकाव्यार्थापत्तिः।दं डापूपिकेति।दंडाकर्षणेतदवलंबिनामपूपानामाकर्षणंयथार्थसिद्धंतद्वदित्यर्थः । व्याव र्तनायेति। लक्ष्यतावारणायेत्यर्थः । अधरोयमिति । बंधुजीवंबंधूकपुष्पंतत्प्रभाहरोबंधु भूतानांजीवानांप्रभाहरश्चयस्त्वेतल्लक्षणमयुक्तं। कैमुतिकन्यायस्यन्यूनार्थविषयत्वेनाधि कार्थापत्तावव्याप्तेः। यथा 'तवाग्रेयदिदारिद्र्यंस्थितंभूपद्विजन्मनां ॥ शनैःसवितुरप्यग्रे तमःस्थास्यत्यसंशयम्'॥ अत्रशनैःशब्दमहिम्नाराजाग्रेदारिद्र्यस्थित्यपेक्षयासूर्याग्रेतमो वस्थानंदुःशंकमेवेत्यवगतमपिन्यायसाम्यादापद्यते।ननुकैमुतिकन्यायेनेतिकेनचिदुक्तं तत्रेदंवक्तव्यं।केनचिदर्थेनतुल्यन्यायत्वादर्थांतरस्यापत्तिरर्थापत्तिरितितदुक्तलक्षणम युक्तं। कावार्तासरसीरुहामित्यादिकैमुत्यन्यायविषयार्थापत्तावव्याप्तेः। कैमुतिकन्याय स्यन्यूनार्थविषयत्वेनतुल्यन्यायत्वाभावादापादनाप्रतीतेश्चेति । नचात्रकैमुत्यन्यायता मात्रंनत्वलंकारत्वमितियुक्तं । अलंकारतत्वाभियुक्तानांप्राचीनानांशून्यहृदयतायाअ पामरेणसंभावयितुमशक्यत्वात् । लोकव्यवहारेपिकैमुत्यन्यायस्यचमत्कारित्वानुभवे नतेनैवन्यायेनतस्यालंकारतासिद्धेश्च । इत्थंचत्वदुक्तार्थापत्त्युदाहरणेवक्ष्यमाणःसंभाव नालंकारोयोऽन्यैर्यद्यर्थोक्तौचकल्पनमितियद्यर्थातिशयोक्तित्वेनोक्तः । यद्यर्थातिश योक्तावापाद्यापादकयोर्विपरीतार्थविश्रांतत्वम् इहत्वापादकस्यसिद्धत्वमापाद्यस्यसंभा

न्यमानत्वमिति वैचित्र्यंतुतदवांतरभेदतायाःसाधकं नतुतद्वहिर्भूततााया इतिनतत्राव्याप्तिशंकापीत्यलंविस्तरेण ॥ ११९ ॥ इत्यर्थापत्तिरलंकारः ॥

समर्थनीयस्यार्थस्यकाव्यलिंगंसमर्थनं ॥ जितोसिमंदकंदर्पमच्चित्तेऽस्तित्रिलोचनः॥१२०॥

अत्रकंदर्पजयोपन्यासोदुष्करविषयत्वात्समर्थनसापेक्षः। तस्यमच्चित्तेस्तित्रिलोचनइतिस्वान्तःकरणेशिवसन्निधानप्रदर्शनेनसमर्थनंकाव्यलिंगं । व्याप्तिधर्मतासापेक्षनैयायिकालिंगव्यावर्तनायकाव्यविशेषणं । इदंवाक्यार्थहेतुकंकाव्यलिंगंपदार्थहेतुकं ॥–

समर्थनीयस्येति । समर्थनापेक्षस्यार्थस्यसमर्थनंकाव्यलिंगमलंकारः। अर्थांतरन्यासवारणायसमर्थनापेक्षस्येति । यदात्वर्थांतरन्यासप्रकरणेवक्ष्यमाणरीत्यासामान्यविशेषभावातिरिक्तत्वंनिवेश्यतेतदानोपादेयमेवैतदितिबोध्यं । दुष्करविषयत्वात्दुष्करविषयरूपत्वात् । समर्थनापेक्षस्येत्यनंतरमर्थस्येतिशेषः । नैयायिकेति । नैयायिकाभिमतलिंगस्यलक्ष्यतावारणायेत्यर्थः ॥–

यथा ॥ भस्मोद्धूलनभद्रमस्तुभवतेरुद्राक्षमालेशुभंहासोपानपरंपरेगिरिसुताकांतालयालंकृते ॥ आद्याराधनतोषितेनविभुनायुष्मत्सपर्यासुखालोकोच्छेदिनिमोक्षनामनिमहामोहेनिलीयामहे ॥ अत्रमोक्षस्यमहामोहत्वमप्रसिद्धमितितत्समर्थनेसुखालोकोच्छेदिनीतिपदार्थोहेतुः । क्वचित्पदार्थवाक्यार्थौपरस्परसापेक्षौहेतुभावंभजतः । यथावा ॥ चिकुरप्रकराजयंतितेविदुषीमूर्द्धनियान्बिभर्तिसा ॥ पशुनाप्यपुरस्कृतेनतत्तुलनामिच्छतुचामरेणकः ॥ अत्रचामरस्यदमयंतीकुंतलभारसाम्याभावेविदुषीमूर्द्धनियान्बिभर्तिसेतिवाक्यार्थः। पशुनाप्यपुरस्कृतेनेतिपदार्थश्चेत्युभयंमिलितंहेतुः क्वचित्समर्थनीयार्थसमर्थनार्थेवाक्यार्थेपदार्थेहेतुः ॥–

भस्मोद्धूलनेतिसंबोधनं । शुभमस्त्वितिशेषः । गिरिसुताकांतस्यशिवस्यालयःप्रासादस्तदलंकारभूतेसोपानपंक्तेइत्यपिसंबोधनं । हेतिदैन्ये । विभुनाप्रभुणाशिवेन। युष्मा

कंथासपर्यापूजातत्सुखस्यालोकःप्रकाशस्तदुच्छेदके। निलीयामहेवयमित्यर्थात्। चिकुरेति। चिकुरप्रकराः केशपाशाः। विदुषीपंडितासादमयंती। अपुरस्कृतेनानादृतेन पुरोभागेऽनिहितेनच। पदार्थश्चानेकपदार्थश्च ॥—

यथावा ॥ वपुःप्रादुर्भावादनुमितमिदंजन्मानिपुरापुरारेनक्कापिक्कचिदपिभवंतंप्रणतवान् ॥ नमन्मुक्तःसंप्रत्यहमतनुरग्रेप्यनतिमानितीशक्षंतव्यंतदिदमपराधद्वयमपि॥ अत्रतावदपराधद्वयंसमर्थनीयं। अस्पष्टार्थत्वात्। तत्समर्थनंचपूर्वापरजन्मनोरनमनाभ्यांवाक्यार्थभूताभ्यांक्रियते। अत्रद्वितीयवाक्यार्थेऽतनुत्वमेकपदार्थोहेतुः। अत्रापिसंप्रातिनमन्मुक्तइतिवाक्यार्थोनेकपदार्थोवाहेतुः। क्वचित्परस्परविरुद्धयोःसमर्थनीययोरुभयोःक्रमाद्भौहेतुभावंभजतः ॥—

वपुरिति। पुरापूर्वस्मिन्क्कापिजन्मनिक्कचिदपिक्षणेभवंतंनप्रणतवान्। इतीदंवपुपः शरीरस्यप्रादुर्भावादनुमितं। संप्रतिनमन्नतिंकुर्वन्मुक्तः। अतनुरशरीरः। अहमग्रेप्यनतिमान्नतिरहितः। समर्थनीयंहेतुकथनेनोपपादनीयं। अस्पष्टार्थत्वादस्पष्टहेतुकत्वात्। अत्रानयोर्वाक्यार्थयोर्मध्ये। द्वितीयवाक्यार्थेअग्रेप्यनतिमानितिवाक्यार्थे। अत्राप्यतनुत्वेपि। नमन्मुक्तइत्यस्यावाक्यत्वादाह अनेकपदार्थोवेति ॥—

यथा ॥ असोढातत्कालोल्लसदसहभावस्यतपसःकथानांविस्रंभेष्वथचरसिकःशैलदुहितुः॥ प्रमोदंवोदिश्यात्कपटवटुवेषापनयनेत्वराशैथिल्याभ्यांयुगपदभियुक्तःस्मरहरः॥ अत्राशिवस्ययुगपत्कृत्रिमब्रह्मचर्य्यवेषापनयनत्वरातदनुवर्तनेच्छयोर्विरुद्धयोःक्रमाद्गिरिजातीव्रतपसोसहिष्णुत्वंतत्संल्लापकौतुकंचेत्युभावर्थौहेतुत्वेननिबद्धौ। क्वचित्परस्परविरुद्धयोरुभयोःसमर्थनीययोरेकएवहेतुः। यथा॥ जीयादंबुधितनयाधररसमास्वादयन्मुरारिरयं ॥ अंबुधिमथनक्लेशंकलयन्विफलंचसफलंच॥ अत्रविफलत्वसफलत्वकलनयोरुभयोर्विरुद्धयोरेकएवांबुधितनयाधररसास्वादोहेतुः। इदंकाव्यलिंगंहेत्वलंकारइतिकेचिद्व्याजह्रुः ॥—

अमोदेति । नपश्यंतीमुमामतिवद्ध्वेगेणागतस्यहरस्यवर्णनं । कपटेनयोवटोर्ब्रह्मचारिणोवेषस्तस्यापनयनेनागेत्तराशैथिल्याभ्यांयुगपदभियुक्तआक्रांतः । त्वराशैथिल्यहेतुगर्भकमेणांगत्रिशेषणद्वयमाह । तत्कालेऽल्लसन्प्रादुर्भवन्नसदृभावोदुःसहस्तमर्यादैर्याय स्यतादृशस्यनपरः असोढासहनासमर्थः शैलकन्यायाःकथानांविस्रंभेषुविश्वासेपुरसि कश्चेति । ब्रह्मचर्यब्रह्मचारित्वेषः । जीयादिति । अंबुधेस्तनयायालक्ष्म्याअधररसमास्वादयन्नयंमुरारिर्जीयात्सर्वोत्कर्षेणवर्ततां । कीदृशः । समुद्रमंथनक्लेशमेवंविधांगनालाभात्सफलंकलयन्जानन् । एतदधरमाधुर्येसत्यमृतस्यवैयर्थ्याद्विफलंचकलयन्नित्यर्थः ॥—

'हेगोदावरिदेवितावकतटोद्देशेकलिंगःकविर्वाग्देवींबहुदेशदर्शनसखींत्यक्त्वाविरक्तिंगतः ॥ एनामर्णवमध्यसुप्तमुराभेन्नाभीसरोजासनम्ब्रह्माणंगमयक्षितौकथमसावेकाकिनीस्थास्यती'त्यत्रब्रह्मणःप्रापणंकथंगोदावर्याकर्तव्यमित्यसंभावनीयार्थोपपादकस्यार्णवमध्येत्यादितद्विशेषणस्यन्यसनं श्लेषाख्योगुणइतिश्लेषोविघटमानार्थघटकार्थस्यवर्णनमितिश्लेषलक्षणमितिचजयदेवेनोक्तं । वस्तुतस्त्वत्रापिपदार्थहेतुकंकाव्यलिंगमेव तद्भेदकाभावात् । ननु साभिप्रायपदार्थवाक्यार्थविन्यसनरूपात्परिकरात्काव्यलिंगस्यकिंभेदकं । उच्यते । परिकरेपदार्थवाक्यार्थबलात्प्रतीयमानार्थौवाच्योपस्कारकतांभजतः । काव्यलिंगेतुपदार्थवाक्यार्थावेवहेतुभावंभजतः । ननु यद्यपि सुखावलोकोच्छेदिनीत्यादिपदार्थहेतुककाव्यलिंगोदाहरणेऽग्रेप्यनतिमानित्यादिवाक्यार्थहेतुककाव्यलिंगोदाहरणेचपदार्थवाक्यार्थावेवहेतुभावंभजतस्तथापिपशुनाप्यपुरस्कृतेनेति पदार्थहेतुकोदाहरणे मच्चित्तेऽस्तित्रिलोचनइतिवाक्यार्थहेतुकोदाहरणेच प्रतीयमानार्थस्यापिहेतुकोट्यनुप्रवेशोदृश्यते । पशुनेतिह्यविवेकित्वाभिप्रायगर्भं विदुषीत्यस्य ॥—

हेगोदावरीत्यत्रार्णवमध्येत्यादिब्रह्मविशेषणस्यन्यसनंश्लेषाख्योगुणइतिजयदेवेनोक्तमित्यन्वयः । तावकतटोद्देशेत्वदीयतीरभूमौकलिंगाख्यःकविर्बहूनांदेशानांदर्शनेसहचारिणींविरक्तिमुक्तिःएनांसरस्वतींब्रह्माणंप्रतिगमयनयेतिसंबंधः । कीदृशं । अर्णवमध्येसुप्तोयोमुरभिन्मुरारिस्तन्नाभिकमलस्थं । श्लेषोऽविघटमानेत्यत्राकारप्रश्लेषः ।

अविघटमानस्यानुपपद्यमानस्यार्थस्यघटकउपपादकोयोऽर्थस्तस्यवर्णनंश्लेषाख्योगुणइ
त्यर्थः।पदार्थहेतुकंसमस्तपदार्थहेतुकं।पदार्थवाक्यार्थेतिद्वंद्वः।प्रतीयमानोर्थोव्यंग्योर्थः॥–

प्रतिनिर्देश्यत्वात्त्रिलोचनइतिचकंदर्पदाहकतृतीयलोचनत्वा
भिप्रायगर्भेकंदर्पजयोपयोगित्वात्तस्य सत्यं तथापिनतयोः
परिकरएव किंतु तदुत्थापितंकाव्यलिंगमपि ।प्रतीयमानावि
वेकविशिष्टेनपशुनाऽप्यपुरस्कृतत्वस्यानेकपदार्थस्यप्रतीयमा
नकन्दर्पदाहकतृतीयलोचनविशिष्टस्यशिवस्याचित्तेसान्निधान
स्यचवाक्यार्थस्यवाच्यस्यैवहेतुभावात् ।नहितयोर्वाच्ययोर्हेतु
भावेताभ्यांप्रतीयमानंमध्येकिंचिद्द्वारमस्ति।यथा।सर्वाशुचिनि
धानस्येत्यादिपदार्थपरिकरोदाहरणे सर्वाशुचिनिधानस्येत्या
दिनानेकपदार्थेनप्रतीयमानंशरीरस्यासंरक्षणीयत्वं। तथाच
वाक्यार्थपरिकरोदाहरणे पर्यायोक्तविधयातत्तद्वाक्यार्थेनप्रती
यमानन्नाहंव्यासइत्यादितस्मात्पशुनेत्यत्रत्रिलोचनइत्यत्र
च प्रतीयमानंवाच्यस्यैवपदार्थस्यवाक्यार्थस्यचहेतुभावोपपा
दकतयाकाव्यलिंगस्यांगमेव।यथा यत्त्वन्नेत्रसमानकांतिसलि
लेमग्नंतदिंदीवरमित्यनेकवाक्यार्थहेतुककाव्यलिंगोदाहरणे
त्वन्नेत्रसमानकांतीत्यादिकानि इंदीवरशशिहंसाविशेषणानि
तेषांवाक्यार्थानांहेतुभावोपपादकानीति तत्रवाक्यार्थहेतुक
काव्यलिंगेपदार्थहेतुककाव्यलिंगे पदार्थहेतुककाव्यलिंगमंग
मितिनतयोःकाव्यलिंगोदाहरणत्वेकाचिदनुपपत्तिः॥१२०॥

प्रतिनिर्देश्यत्वादिति। निर्देश्यतेउच्चार्यतइतिनिर्देशःशब्दः तेनविपरीतार्थकशब्दत्वा
दित्यर्थः। तस्यतादृशतृतीयलोचनत्वस्य। तथाचोभयत्रपरिकरालंकारसत्वात्काव्यलिंगो
दाहरणत्वमनुपपन्नमितिभावः। तयोःपशुनेत्याद्युक्तोदाहरणयोः। तदुत्थापितंपरिकरो
पपादितं ।व्यंग्यस्यहेतुकोटावेवानुप्रवेशादितिभावः।एतदेवविवृणोति प्रतीयमानेति।
वाच्यस्यैवेत्येवकारसूचितंव्यंग्याद्वारकत्वंनहीत्यादिनाविवृतंतदयमर्थः यदपश्वादिप
दव्यंग्यंकेशपाशसाम्याभावादेरर्थस्यसाक्षादुपपादकंस्यात्तदात्रपरिकरएवस्यान्नकाव्य-
लिंगं। नत्वेवमस्तिपशुपदप्रतीताविवेकित्वमात्रेणसाम्याभावस्योपपादनासंभवात्।किं

तु तद्विशिष्टपशुपुरस्कृतज्ञाभावएवसाक्षादुपपदाकइति तत्कोटिनिविष्टंव्यंग्यंकाव्यलिंगरूपस्यतस्यांगमेव । व्यंग्यांतरंतुनोक्तकाव्यलिंगगम्यमर्थोपपादकमस्तीतिनिराबाधमेवकाव्यलिंगमिति । ननुस्वयमन्योपपादकस्यकाव्यलिंगस्याप्युपपादकंकदृष्टमित्याशंक्योदाहरति यत्वन्नेत्रेति। एतत्प्रतीपालंकारेप्रागुदाहृतं।अनेकवाक्यार्थहेतुकेति पूर्वपादत्रयवाक्यार्थत्रयस्यचतुर्थपादार्थेहेतुत्वमितिज्ञेयं हेतुभावोपपादकानीति । इंदीवरस्यनेत्रसमानकांतित्वंविनापटादेरिवतददर्शनस्यदैवगतकांतासादृश्यविनोदासहिष्णुत्वेहेतुत्वासंभवादितिभावः । समाहितमर्थमुपसंहरति । इतीति । तयोःपशुनापीतिमच्चित्तेस्तीसेतयोः ॥ १२० ॥ इतिकाव्यलिंगालंकारः ॥

उक्तिरर्थांतरन्यासःस्यात्सामान्यविशेषयोः ॥ हनुमानब्धिमतरद्दुष्करंकिंमहात्मनाम् ॥ १२१ ॥
गुणवद्वस्तुसंसर्गाद्याति स्वल्पोपिगौरवम् ॥ पुष्पमालानुसंगेनसूत्रंशिरसिधार्यते ॥ १२२ ॥

सामान्यविशेषयोर्द्वयोरप्युक्तिरर्थांतरन्यासस्तयोश्चैकम्प्रस्तुतमन्यदप्रस्तुतंभवति ततश्चविशेषेप्रस्तुते तेनसहाप्रस्तुतसामान्यरूपस्य सामान्येप्रस्तुतेतेनसहाप्रस्तुतविशेषरूपस्यार्थांतरस्यन्यसनमर्थांतरन्यासइत्युक्तंभवति । तत्राद्यस्यद्वितीयार्द्धमुदाहरणं द्वितीयस्या[illegible]यश्लोकः । नन्वयंकाव्यलिंगान्नातिरिच्यते । तथाहि । उदाहरणद्वयेप्यप्रस्तुतयोःसामान्यविशेषयोरुक्तिःप्रस्तुतयोर्विशेषसामान्ययोःकथमुपकरोतीतिविवेक्तव्यं । नहिसर्वथैवप्रस्तुतानन्वय्यप्रस्तुताभिधानंयुज्यते । नतावदप्रस्तुतप्रशंसायामिवप्रस्तुतव्यञ्जकतयाप्रस्तुतयोरपि विशेषसामान्ययोःस्वशब्दोपात्तत्वान्नाऽप्यनुमानालंकारइव प्रस्तुतप्रतीतिजनकतयातद्वदिहव्याप्तिपक्षधर्मताद्यभावात् । नापिदृष्टांतालंकारइवउपमानतया 'विस्रब्धघातदोषःस्ववधायखलस्यवीरकोपकरः। नवतरुभंगध्वनिरिवहरिनिद्रातस्करःकरिण' इत्यादिपुसामान्येविशेषस्योपमानत्वदर्शनेपिविशेषेसामान्यस्यक्वचिदपितददर्शनात् ॥उपमानतयातदन्वयेसामंजस्याप्रतीतेश्च तस्मात्प्रस्तुतसमर्थकतयैवाप्रस्तुतस्योपयोगइहापिवक्तव्यः॥—

मस्तुतव्यंजकतयेति। अप्रस्तुताभिधानंयुज्यतइत्यनुपज्यते। एवमग्रेपि। विस्रब्धेति। खलस्यविश्वस्तघातरूपोदोषःस्वस्यैववधायभवति यतोवीराणांकोपकारकः।सिंहनिद्रापहारीनवतरुभंगजन्यध्वनिःकरिणोवधाययथेत्यर्थः । तददर्शनादुपमानत्वादर्शनात् । ननुमहापुरुषाकृतिरिवगंभीरेयमस्याकृतिरित्यादौसामान्यस्याप्युपमानतादृष्टेत्यरुचेराह उपमानतेति। इवाद्यभावाच्चात्पर्याभावाच्चोपमानतयाऽन्वयस्यसामंजस्येनाप्रतीतेरित्यर्थः। इहापीत्यपिनाकाव्यलिंगसमुच्चयः ॥–

ततश्चवाक्यार्थहेतुकंकाव्यलिंगमेवात्रापिस्यान्नत्वलंकारांतरस्यावकाशइतिचेत् अत्रकेचित्समर्थनसापेक्षस्यार्थस्यसमर्थनेकाव्यलिंगंनिरपेक्षस्यापिप्रतीतिवैभवात्समर्थनेऽर्थांतरन्यासः । नहियत्त्वन्नेत्रसमानकांतीत्यादिकाव्यलिंगोदाहरणेष्विव'अथोपगूढेशरदाशशांकेप्रावृड्ययौशांततडित्कटाक्षा ॥ कासांनसौभाग्यगुणोंगनानांनष्टःपरिभ्रष्टपयोधराणां' ॥–

प्रतीतिवैभवात्प्रतीतिदार्ढ्यरूपप्रयोजनवशात् । प्रयोजनस्यापिहेतुत्वविवक्षयापंचमी। उक्तवैलक्षण्यमुदाहरणनिष्ठतयादर्शयति नहीत्यादिना । इत्यादिकाव्यलिंगोदाहरणेष्विव अथेत्याद्यर्थांतरन्यासोदाहरणेषुप्रस्तुतस्यसमर्थनार्थित्वंनह्यस्तीतिसंबंधः । शरदाशशांकेउपगूढेआलिंगितेसति । अथानंतरं । शांतातडिद्रूपाःकटाक्षायस्याः साप्रावृट्ययौगतवती । उक्तंविशेषरूपमर्थंसामान्यरूपेणार्थांतरेणसमर्थयति । परिभ्रष्टपयोधराणांकासामंगनानांसौभाग्यगुणोननष्टइति । पयोधराःकुचामेघाश्च ॥–

'दिवाकराद्रक्षतियोगुहासुलीनंदिवाभीतमिवांधकारं॥ क्षुद्रेपिनूनंशरणंप्रपन्नेममत्वमुच्चैःशिरसामतीव' इत्याद्यर्थांतरन्यासोदाहरणेषुप्रस्तुतस्यसमर्थनापेक्षत्वमस्तीति । वस्तुतस्तुप्रायोवादोयंअर्थान्तरन्यासेपिहिविशेषस्यसामान्येनसमर्थनानपेक्षत्वेपिसामान्यंविशेषेणसमर्थनमपेक्षतएव निर्विशेषंनसामान्यमितिन्यायेन 'बहूनामप्यसाराणांसंयोगःकार्यसाधक'इत्यादिसामान्यस्य'तृणैरारभ्यतेरज्जुस्तयानागोपवध्यत'इत्यादिसंप्रतिपन्नविशेषावतरणंविनाबुद्धौप्रतिष्ठितत्वासंभवात् ॥–

दिवाकरादिति । कुमारसंभवेहिमालयवर्णनं । योहिमालयः । ममत्वंमदीयताबुद्धिः।

शिरोमस्तकंशिखरंच । समर्थानार्थित्वंसमर्थनापेक्षत्वं । अयमर्थांतरन्यासेसमर्थनामनपेक्षत्वरूपः । सामान्यस्येत्यस्यबुद्धौप्रतिष्ठितत्वासंभवादित्यनेनान्वयः ॥–

नचतत्रसामान्यस्यकासांनसौभाग्यगुणोंगनानामित्यादिविशेषसमर्थनार्थसामान्यस्यैवलोकसंप्रतिपन्नतयाविशेषावतरणंविनैवबुद्धौप्रतिष्ठितत्वंसंभवतीतिश्लोकेतन्न्यसनंनापेक्षितमस्तीतिवाच्यं । सामान्यस्यसर्वत्रलोकसंप्रतिपन्नत्वनियमाभावात् । नहियोयोधूमवान्सोग्निमानितिव्याप्तिरूपसामान्यस्यलोकसंप्रतिपन्नतयायथामहानसइतितद्विशेषरूपदृष्टांतानुपादनसंभवमात्रेणाप्रसिद्धव्याप्तिरूपसामान्योपन्यासेपितद्विशेषरूपदृष्टांतोपन्यासनैरपेक्ष्यंसंभवति।नचैवंसामान्येनविशेषसमर्थनस्थलेपि क्वचित्तस्यसामान्यस्यलोकप्रसिद्धत्वाभावेनतस्यबुद्धावारोहायपुनर्विशेषांतरस्यन्यासप्रसंगइतिवाच्यं इष्टापत्तेः । अत्रैवविषयेविकस्वरालंकारस्यानुपदमेवदर्शयिष्यमाणत्वात् ॥–

संप्रतिपन्नेति । वक्तृश्रोतृसंमतेसर्थः । विशेषावतरणंविशेषावगमं । तत्रबहूनामित्यादौ सामान्यस्येतिविशेषावतरणंविनैवबुद्धौप्रतिष्ठितत्वंसंभवतीसग्रिमेणान्वितं । तन्न्यसनंतृणैरित्यादिविशेषन्यसनं ॥–

किंचकाव्यलिंगेपिनसर्वत्रसमर्थनसापेक्षत्वनियमः । चिकुरप्रकराजयन्तिते इत्यत्रतदभावादुपमानवस्तुषुवर्णनीयसाम्याभावेननिंदायाःकविकुलक्षुण्णत्वेनाऽत्रसमर्थनापेक्षाविरहात् । नहि 'तदास्यदास्येपिगतोधिकारितांनशारदःपार्वणशर्वरीश्वर'इत्यादिषुसमर्थनंदृश्यते।'नविषेणनशस्त्रेणनाग्निनानचमृत्युना॥अप्रतीकारपारुष्याःस्त्रीभिरेवस्त्रियःकृता'इत्यादिकाव्यलिंगविषयेषुसमर्थनापेक्षाविरहेप्यप्रतीकारपारुष्याइत्यादिनासमर्थनदर्शनाच्च । नहितत्रस्त्रीणांविषादिनिर्मितत्वाभावप्रतिपादनंसमर्थनसापेक्षं प्रसिद्धत्वात्।तस्मादुभयतोव्यभिचारात्समर्थनापेक्षसमर्थनेकाव्यलिंगन्तन्निरपेक्षसमर्थ

नेऽर्थांतरन्यासइतिनविभागः किंतुसमर्थ्यसमर्थकयोः । सामान्यविशेषसम्बंधेऽर्थांतरन्यासस्तदितरसंबंधेकाव्यलिंगमित्येवव्यवस्थावधारणीया । प्रपंचश्चित्रमिमांसायांद्रष्टव्यः ॥–

नन्वेवमप्यर्थांतरन्यासेकचिदेवसमर्थनापेक्षाकाव्यलिंगेतुसर्वत्रसेसस्तुभेदइत्याशंक्याह । किंचेति । कविकुलक्षुण्णत्वेनकविसमूहाभ्यस्तत्वेन । तदास्यदास्येनलमुखदास्ये पर्वणिपूर्णिमायांभवःपार्वणः शर्वरीश्वरश्चंद्रः । नविषेणेत्यादेःस्त्रियःकृताइत्यनेनान्वयोऽपितुस्त्रीभिरेव । यतःप्रतीकाररहितंपारुष्यंक्रौर्यंयासांतथाभूताः । उभयतोऽन्वयव्यतिरेकाभ्यां समर्थनापेक्षायामपितदास्यदास्येपीत्यादौतदभावात् । नविषेणेत्यादावपेक्षाविरहेपिसमर्थनसत्वात् ॥–

एवमप्रकृतेनप्रकृतसमर्थनमुदाहृतं । प्रकृतेनाप्रकृतसमर्थनंयथा ॥यदुच्यतेपार्वतिपापवृत्तयेनरूपमित्यव्यभिचारितद्वचः॥ तथाहितेशीलमुदारदर्शनेतपस्विनामप्युपदेशतांगतं ॥ यथा वा ॥ दानंददत्यपिजलैःसहसाधिरूढेकोविद्यमानगतिरासितुमुत्सहेत ॥ यद्दंतिनःकटकटाहतटान्मिमंक्षोर्मंक्षूदपातिपरितःपटलैरलीनां ॥ १२१ ॥ १२२ ॥

अप्रकृतेनेति । आद्येमहात्मनांसर्वस्तुकरत्वेनाप्रकृतेनसामान्येनहनुमदब्धितरणस्य प्रकृतविशेषस्यसमर्थनं द्वितीयेपुष्पमालासूत्रवृत्तांतेनाप्रकृतेनविशेषरूपेणप्रकृतस्यगुणवत्संगप्रयुक्तपूज्यत्वस्यसामान्यरूपस्यसमर्थनमित्यर्थः । यदुच्यतइति । हेपार्वति रूपमाकृतिसौंदर्यं पापवृत्तयेदुष्टाचरणायनभवति । यत्राकृतिस्तत्रगुणावसंतीतिन्यायादिति यदुच्यतेतद्वचनमव्यभिचारियथार्थं। तथाहि। उदाररंरमणीयंदर्शनंयस्यास्तथाभूतेपार्वतितवशीलमाचरणंतपस्विनामप्युपदेशरूपतांप्राप्तमितिप्रकृतेनविशेषेणाप्रकृतस्यसामान्यस्यसमर्थनं । दानमिति । दानंवितरणंमदजलंच । जलैरुदकैर्जडैश्च । लडयोरभेदात् । अधिरूढेआक्रांतेसति । विद्यमानगतिःसगतिकोबुद्धिमांश्चकआसितुंस्थातुमुत्सहेत्शक्नुयात् । यस्मात्मिमंक्षोर्मज्जनंकर्तुमिच्छोर्दंतिनोगजस्यकटोगंडएवकटाहस्तस्यतटाद्ग्रादलीनांपटलैःसमूहैःपरितोमंक्षुशीघ्रमुदपातिउत्पतितमित्यन्वयः । अत्रापिपूर्वार्द्धोक्तमप्रकृतसामान्यमुत्तरार्द्धोक्तेनप्रकृतेनविशेषणसमर्थितं ॥ १२१ ॥ १२२ ॥ इत्यलंकारचंद्रिकायामर्थांतरन्यासालंकारः ॥

यस्मिन्विशेषसामान्यविशेषाःसविकस्वरः ॥
सनजिग्येमहांतोहिदुर्द्धर्षाःसागराइव ॥१२३॥

यत्रकस्यचिद्विशेषस्यसमर्थनार्थंसामन्यंविन्यस्यतत्प्रसिद्धाव
त्त्वपरितुष्यताकविनातत्समर्थनायपुनर्विशेषांतरमुपमानरी
त्यार्थांतरन्यासविधयावाविन्यस्यतेतत्रविकस्वरालंकारः। उ
त्तरार्द्धंयथाकथंचिदुदाहरणं। इदंतुव्यक्तमुदाहरणं॥ अनंतर
त्नप्रभवस्ययस्यहिमंनसौभाग्यविलोपिजातं॥ एकोहिदोषो
गुणसन्निपातेनिमज्जतींदोःकिरणेष्विवांकः॥ इदमुपमानरी
त्याविशेषांतरस्यन्यसनेउदाहरणं। अर्थांतरन्यासविधयाय
था॥कर्णारुंतुदमंतरेणरणितंगाहस्वकाकस्वयंमाकंदंमकरंदशा
लिनमिहत्वांमन्महेकोकिलं॥धन्यानिस्थलवैभवेनकतिचिद्व
स्तूनिकस्तूरिकांनेपालक्षितिपालभालपतितेपंकेनशंकेतकः॥
मालिन्यमब्जशशिनोर्मधुलिट्कलंकौधत्तोमुखेतुतवदृक्तल
कांजनाभां॥ दोषावितःक्वचनमेलनतोगुणत्वंवक्तुर्गुणौहिवच
सिभ्रमविप्रलंभौ॥ १२३॥

यस्मिन्निति। यस्मिन्काव्येइत्यर्थात्। निबध्यतइतिशेषः। समर्थ्यसमर्थकभावा
पन्नत्वंतुनलक्षणेनिवेशनीयं। तद्विनाचमत्काराभावेनचमत्कारित्वविशेषणमावश्यवक्त
व्येनैवानतिप्रसंगात्। एवमेवार्थांतरन्यासलक्षणेपिबोध्यं। सनेति। सप्रकृतोराजान
जिग्येनजितोऽर्थात्परैरितिशेषः प्रकृतः। तत्समर्थनंमहांतोहिदुर्धर्षाअनाक्रमणीयाइति
सामान्येनतस्यापि सागराइवेतिविशेषोपमेयेतिज्ञेयं। प्रसिद्धेरल्पत्वात्तत्रापरितोषोबो
ध्यः। यथाकथंचिदिति। महतामनाक्रमणीयत्वस्यातिप्रसिद्धत्वेनतत्समर्थनापेक्षाभावा
च्चंद्रलोकगतमेतन्नसमंजसमितिभावः। इदंवक्ष्यमाणं। व्यक्तमिति। गुणसमुदायेएकस्य
दोषस्यानाकलनमनतिप्रसिद्धतयासमर्थनापेक्षमिंदोरित्यादि विशेषणसमर्थ्यतइत्यतः।
स्फुटमित्यर्थः। कर्णेति। हेकाककर्णयोररुंतुदंपीडाजनकंरणितंशब्दितंअंतरेणविना। स्वयं
मकरंदःपुष्परसस्तच्छालिनंमाकंदमाम्रवृक्षंगाहस्वआश्रय इहाम्रतरौत्वांवयंकोकिलंम
न्महेजानीमहे। यतःस्थलवैभवेनस्थानमाहात्म्येनकतिचिद्वस्तूनिधन्यानिभवंतीतिसा
मान्येनपूर्वोक्तविशेषसमर्थनं। अत्रापितदाकांक्षायांविशेषरूपमर्थांतरंन्यसति। नेपालभू
मिपालस्यभालेपतितेपंकेकस्तूरिकांकोनशंकेतापितुसर्वेइति। मालिन्यमिति। मधुलि
ट्भ्रमरःकलंकश्चैतावब्जशशिनोर्मालिन्यंधत्तः कुरुतः। तवमुखेतुदृक्चतिलकांजनंच
तयोराभांशोभांधत्तइत्यनुषज्जते। अंजनाभेइतिपाठेद्वितीयाद्विवचनं। उक्तमर्थंसामान्येन

समर्थयति।दोषावपिकचित्मेलनतोमिथोमिलनात्गुणसंज्ञतःप्राप्नुतइति कथमेतत्तत्राह। हियतः वक्तुर्वचसिभ्रमविप्रलंभौभ्रांतिप्रतारणेगुणौभवतः। घटवतिघटाभावनिर्णाय परप्रतारणायघटोस्तीतिप्रयुक्तेवाक्येप्रमाजनकत्वात्तयोर्गुणत्वमितिभावः ॥ १२३ ॥
इत्यलंकारचंद्रिकायांविकस्वरालंकारः ॥ १२३ ॥

प्रौढोक्तिरुत्कर्षाहेतौतद्धेतुत्वप्रकल्पनं ॥ कचाः
कलिंदजातीरतमालस्तोममेचकाः ॥ १२४ ॥

कार्यातिशयाहेतौतद्धेतुत्वप्रकल्पनंप्रौढोक्तिः। यथातमालग तनैल्यातिशयाहेतौयमुनातटरोहणेतद्धेतुत्वप्रकल्पनं। यथा वा ॥ कल्पतरुकामदोग्ध्रीचिंतामणिधनदशंखानां ॥ रचितो रजोभरपयस्तेजःश्वासांतरांबरैरेषः। अत्रकल्पवृक्षाद्यैकैकवि तरणातिशायिवर्णनीयराजवितरणातिशयाहेतौकल्पवृक्षपरा गादिरूपपंचनिर्मितत्वेतद्धेतुत्वप्रकल्पनंप्रौढोक्तिः ॥ १२४ ॥

प्रौढोक्तिरिति। उत्कर्षस्याहेतावुत्कर्षहेतुत्वकल्पनंप्रौढोक्तिः। कलिंदजायमुना। स्तोमःसमूहः। मेचकाःश्यामाः। रोहणेउद्भवे। कल्पेति। एषराजाकल्पवृक्षादीनांक्रमेणरजोभरादिभिःपंचभिरचितइत्यन्वयः। धनदःकुबेरः।शंखोनिधिविशेषः।रजोभरः परागसमूहः।पयोदुग्धं। श्वासःप्रसिद्धः। अंतरांबरंशंखाभ्यंतरमाकाशं। अतिशायीत्यग्रिमवितरणेनान्वितं। अहेतौपंचनिर्मितत्वेइतिसामानाधिकरण्येनान्वयः ॥ १२४ ॥
इत्यलंकारचंद्रिकायांप्रौढोक्त्यलंकारः ॥ ॥

संभावनायदीत्थंस्यादित्यूहोन्यस्यसिद्धये ॥यदि
शेषोभवेद्वक्ताकथिताःस्युर्गुणास्तव ॥ १२५ ॥

यथावा ॥ कस्तूरिकामृगाणामंडाद्गंधगुणमखिलमादाय ॥ य दिपुनरहंविधिःस्यांखलजिव्हायांनिवेशयिष्यामि॥यद्यर्थोक्तौ चकल्पनमतिशयोक्तिभेदइतिकाव्यप्रकाशकारः ॥ १२५ ॥

संभावनेति। ऊहस्तर्कः। कस्तूरिकेति। अहंयदिसृष्टिकर्तास्यांतदाकस्तूरिकामृगाणामंडादखिलंगंधरूपंगुणमादायखलजिव्हायांनिवेशयिष्यामीत्यन्वयः ॥ १२४ ॥
इत्यलंकारचंद्रिकायांसंभावनालंकारः ॥ ॥

किंचिन्मिथ्यात्वसिद्ध्यर्थंमिथ्यार्थांतरकल्पनं ॥ मि
थ्याध्यवसितिर्वेश्यांवशयेत्खस्रजंवहन् ॥ १२६ ॥

अत्रवेश्यावशीकरणस्यात्यंतासंभावितत्वसिद्ध्येगगनकुसुम मालिकाधारणरूपार्थांतरकल्पनंमिथ्याध्यवसितिः । यथा वा ॥ अस्यक्षोणिपतेःपरार्धपरयालक्षीकृताःसंख्ययाप्रज्ञाच क्षुरवेक्ष्यमाणबधिरश्राव्याःकिलाकीर्तयः ॥ गीयंतेस्वरमष्टमं कलयताजातेनवंध्योदरान्मूकानांप्रकरेणकूर्मरमणीदुग्धोदधे रोदसि॥अत्राद्योदाहरणंनिदर्शनागर्भं द्वितीयंतुशुद्धं।असंबंधे संबंधरूपातिशयोक्तितोमिथ्याध्यवसितेःकिंचिन्मिथ्यात्वसि द्ध्यर्थंमिथ्यार्थांतरकल्पनात्मनाविच्छित्तिविशेषेणभेदः॥१२६॥

किंचिदिति। कस्यचिदर्थस्यमिथ्यात्वसिद्ध्यर्थंमिथ्याभूतार्थांतरकल्पनंमिथ्याध्य वसितिरलंकारः । वेश्यामित्युदाहरणं । खस्रजंगगनमालां । अत्रखपुष्पमालाधारण मिववेश्यावशीकरणमितिनिदर्शनापिबोध्या । अस्येति । परार्थपरयापरार्द्धसंख्याम तिक्रांतया । लक्षीकृताउपलक्षिताः । प्रज्ञाचक्षुषाअंधेनावेक्ष्यमाणाश्चताबधिरश्राव्या श्चेतिकर्मधारयः । कलयताकुर्वता ।प्रकरेणसमूहेन। कूर्मरमणीकच्छपी।रोधसितीरे। मिथ्याध्यवसितेरित्यस्यभेदइत्यत्रान्वयः । कल्पनाविच्छित्तिविशेषेणकल्पनाप्रयुक्तवि च्छित्तिविशेषेण । कल्पनात्मनेतिपाठेकल्पनास्वरूपेणेत्यर्थः । उपधेयसंकरेप्युपाधेरसं करात् । विच्छित्तिविशेषेणेतिचतस्यैवविशेषणं ।विच्छित्तेर्विशेषोयस्मादिति विच्छि त्तिंविशेषयतिव्यावर्तयतीतिवाव्युत्पत्तेः। एतेनप्रौढोक्त्यैवगतार्थतामाचक्षाणानिरस्ता वेदितव्याः । नचमिथ्याध्यवसितेरलंकारांतरत्वे ॥ 'हरिश्चंद्रेणसंजप्ताःप्रगीताधर्मसूनु ना ।।खेलंतिनिगमोत्संगेमातर्गंगेगुणास्तवे'त्यादौहरिश्चंद्रादिसंबंधाद्गुणानांसत्यताप्रती तेः । सत्याध्यवसितिरपितथास्यादितिवाच्यं । सत्यताप्रतीत्यर्थंकस्याप्यर्थस्यकविप्र तिभाकल्पितत्वाभावेनशब्दमात्रेणालंकारतायाअसंभवात् । कविप्रतिभामात्रकल्पिता अर्थाः । काव्येअलंकारपदास्पदमितिविषमालंकारप्रकरणेत्वयैवाभिधानादित्यलंवि स्तरेण ॥ १९६ ॥ इत्यलंकारचंद्रिकायांमिथ्याध्यवसितिरलंकारः ॥

कर्णस्याद्वर्ण्यवृत्तांतप्रतिबिंबस्यवर्णनं ॥
ललितंनिर्गतेनीरेसेतुमेषाचिकीर्षति ॥ १२७॥

प्रस्तुतेधर्मिणियोवर्णनीयोवृत्तांतस्तमवर्णयित्वातत्रैवतत्प्रति बिंबरूपस्यकस्यचिदप्रस्तुतवृत्तान्तस्यवर्णनंललितं यथाकथं चिद्दाक्षिण्यसमागततत्कालोपेक्षितप्रतिनिवृत्तनायिकान्तरा

सक्तनायकानयनार्थंसखींप्रेषयितुकामानायिकामुद्दिश्यसख्या वचनेनतद्व्यापारप्रतिबिंबभूतगतजलसेतुबंधवर्णनं नेयमप्रस्तुतप्रशंसा प्रस्तुतधर्मिकत्वात् नापिसमासोक्तिः । प्रस्तुतवृत्तान्तेवर्ण्यमानेविशेषणसाधारण्येनसारूप्येणवाऽप्रस्तुतवृत्तांतस्फूर्त्यभावात् अप्रस्तुतवृत्तांतादेवसरूपादिहप्रस्तुतवृत्तांतस्यगम्यत्वात् नापिनिदर्शना प्रस्तुताप्रस्तुतवृत्तांतयोःशब्दोपात्तयोरैक्यसमारोपएवतस्याःसमुन्मेषात् ॥—

प्रस्तुतइति । ललितमितिलक्ष्यनिर्देशः । निर्गतइत्युदाहरणं । दाक्षिण्येत्यादिक्रमत्ययांतचतुष्टयंनायकविशेषणं । दाक्षिण्यमनुरोधशीलत्वं । तद्व्यापारेति । सखीप्रेषणरूपनाइकाव्यापारस्वरूपेत्यर्थः । सारूप्यंचात्रनैरर्थक्यं । क्लृप्तालंकारेष्वंतर्भावमाशंक्यनिराकरोतिनेयमित्यादिना प्रस्तुताप्रतुतेति । तथाचप्रकृतेऽप्रस्तुतवृत्तांतस्यैकस्यैवोपादानान्निदर्शनानयुक्तेतिभावः ॥—

यदिविषयाविषयिणोःशब्दोपात्तयोःप्रवर्तमानएवालंकारोविषयिमात्रोपादानेपिस्यात्तदारूपवमेवभेदेप्यभेदरूपायाअतिशयोक्तेरपिविषयमाक्रामेत् । ननुतर्ह्यत्रप्रस्तुतनायकादिनिगरणेनतत्रशब्दोपात्ताप्रस्तुतनारीद्यभेदाध्यवसायइतिभेदेअभेदरूपातिशयोक्तिरस्तु । एवंतर्हिसारूप्यनिबंधनाअप्रस्तुतप्रशंसाविषयेपिसैवातिशयोक्तिःस्यात् । अप्रस्तुतधर्मिकत्वान्नभवतीतिचेत् । तत्राप्यप्रस्तुतधर्मिवाचकपदस्यापिप्रसिद्धातिशयोक्त्युदाहरणेष्विवप्रस्तुतधर्मिलक्षकत्वसंभवात् । नन्वप्रस्तुतप्रशंसायांसरूपादप्रस्तुतवाक्यार्थात्प्रस्तुतवाक्यार्थोऽवगम्यते नत्वातिशयोक्ताविवविषयवाचकैस्तत्तत्पदैर्विषया लक्ष्यन्तइतिभेदइतिचेत् तर्हिइहापिप्रस्तुतगतादप्रस्तुतवृत्तांतरूपाद्वाक्यार्थात्तद्गतप्रस्तुतवृत्तान्तरूपोवाक्यार्थोवगम्यतइत्येवातिशयोक्तितोभेदोस्तु ॥—

ननूभयोःशब्दोपात्तत्वइवाप्रस्तुतमात्रस्यतत्त्वेपिनिदर्शनास्त्वित्याशंक्याह । यदीति । प्रनिबंधातावत्परिहरति । तर्हिसारूप्येति । 'एकःकृतीशकुंतेषुयोन्यंशक्रान्नयाचत' इत्यादा

वित्यर्थः । अप्रस्तुतेति । अप्रस्तुतस्यशकुंतादेस्तत्रवर्णनीयत्वादतिशयोक्तिस्थलेचवापीकापीत्वादौवापीत्वादिनाप्रस्तुतनाभ्यादेर्वर्ण्यत्वान्नातिशयोक्तिस्तत्रापादयितुंशक्येतिभावः । अप्रसिद्धोयंहेतुरित्याह तत्रेति । प्रसिद्धेति । वापीकापीत्वादिसर्वसंमतेत्यर्थः । तद्गतेति । प्रस्तुतगतेत्यर्थः ॥–

वस्तुतस्तु 'सोऽपूर्वोरसनाविपर्ययविधिस्तत्कर्णयोश्चापलंदृष्टिः सामदविस्मृतस्वपरदिक्किंभूयसोक्तेनवा ॥ पूर्वंनिश्चितवानसि भ्रमरहेयद्वारणोद्याप्यसावंतःशून्यकरोनिषेव्यतइतिभ्रातःकएष ग्रह' इत्याद्यप्रस्तुतप्रशंसोदाहरणेप्रथमप्रतीतादप्रस्तुतवाक्यार्थात्प्रस्तुतवाक्यार्थोऽवगम्यतइत्येतन्नघटते । अप्रस्तुतेवारणस्य भ्रमरासेव्यत्वेकर्णचापलमात्रस्यभ्रमरनिराकरणहेतुत्वसम्भवेपिरसनाविपर्ययांतःशून्यकरत्वयोर्हेतुत्वासम्भवेनमदस्यप्रत्युततत्सेव्यत्वएवहेतुत्वेनचरसनाविपर्ययादीनान्तत्रहेतुत्वान्वयार्थंवारणपदस्यदुष्प्रभुरूपविषयक्रोडीकारेणैवप्रवृत्तेर्वक्तव्यत्वात्। एवंसत्यपियद्यप्रस्तुतसंबोधनादिविच्छित्तिविशेषात्तत्राप्रस्तुतप्रशंसायाअतिशयोक्तितोभेदोघटते ॥ तदात्रापिप्रस्तुतंधर्मिणंस्वपदेननिर्दिश्यतत्राप्रस्तुतवर्णनारूपस्यविच्छित्तिविशेषस्यसद्भावात्ततोभेदःसुतरांघटते ॥–

अप्रस्तुतप्रशंसायांक्वचित्प्रस्तुताप्रस्तुतयोरभेदाध्यवसानमप्यप्रस्तुतवाक्यार्थप्रतीतिकालेदृश्यते । ललितेतुनकापीतिसुतरामतिशयोक्तितोभेदइत्याहसोऽपूर्वइत्यादिना । रसनाविपर्ययःअग्निशापात्करिणांजिव्हापरिवृत्तिः । पूर्वविपरीताभिधानंच । कर्णचापलंप्रसिद्धं पिशुनमतार्थत्वंच । मदःप्रसिद्धःगर्वश्च । तेनविस्मृतास्वपरयोर्दिङ्मार्गआप्तानाप्तविभागश्चययासादृष्टिः वारणोगजोवारकश्च । शून्यःसरंध्रोधनरहितश्च । करःशुंडाहस्तश्च । ग्रहआग्रहः । कुतोनघटतेतत्राह अप्रस्तुतइति । एतच्चभ्रमरासेव्यत्वइत्यस्यविशेषणं । भ्रमरनिरासकरणस्येतिवत्कर्णचापलमात्रस्येत्यस्यक्रोडीकारः । स्वार्थेनसममभेदाध्यवसायः । अप्रस्तुतसंबोधनादीति । आदिनासारूप्यनिबंधनप्रस्तुतवाक्यार्थावगतिपरिग्रह अत्रापिललितालंकारेपि । वर्णनारूपस्येति । चमत्कारितारूपायाविच्छित्तेस्तदवच्छेदकवर्णनारूपत्वमित्यभिप्रायः ॥–

'पश्यनीलोत्पलद्वंद्वान्निस्सरंति' 'वापीकापिस्फुरतिगगनेतत्प

रंसूक्ष्मपद्या'इत्यादितुप्रस्तुतस्यकस्यचिद्धर्मिणःस्ववाचकेनानिर्दिष्टत्वादतिशयोक्तिरेवैतेनगतजलसेतुबंधवर्णनादिष्वसम्बन्धेसंबंधातिशयोक्तिरस्त्वितिशंकापिनिरस्ता । तथासतिकस्त्वंभोःकथयामीत्यादावपितत्प्रसंगात्सारूप्यनिबंधनप्रस्तुतवाक्यार्थावगतिरूपविच्छित्तिविशेषालंकारांतरकल्पनंत्विहापितुल्यं । तस्मात्सर्वालंकारविलक्षणमिदंललितं । यथावा ॥ क्वसूर्यप्रभवोवंशःक्वचाल्पविषयामतिः ॥ तितीर्षुर्दुस्तरंमोहादुडुपेनास्मिसागरं ॥ अत्रापिनिदर्शनाभ्रांतिर्नकार्या । अल्पविषययामत्यासूर्यवंशंवर्णयितुमिच्छुरहमितिप्रस्तुतवृत्तांतानुपन्यासात्तत्प्रतिबिंबभूतस्यउडुपेनसागरंतितीर्षुरस्मीत्यप्रस्तुतवृत्तांतस्यवर्णनेनादौविषमालंकाराविन्यसनेनचकेवलंतत्रतात्पर्यस्यगम्यमानत्वात् ॥—

कस्यचिन्नेत्रद्वंद्वादेः । स्ववाचकेननेत्रादिपदेन । अनिर्दिष्टत्वादप्रतिपादितत्वात् । अतिशयोक्तिरस्तीति । अतिशयोक्तिरेवास्तीत्यर्थः । तत्प्रसंगात्संबोध्यत्वोच्चारयितृत्वयोरसंबंधेपिसंबंधवर्णनादतिशयोक्तिमात्रप्रसंगात् । अलंकारांतरंकस्त्वमित्यादावप्रस्तुतप्रशंसाप्रकृतेतुललितमिति । तत्प्रतिबिंबेति । प्रस्तुतार्थप्रतिबिंबरूपस्याप्रस्तुतार्थस्येत्यर्थः । आदौपूर्वार्द्धे । विषमेति । स्वमतिसूर्यवंशयोरत्यंताननुरूपत्वरूपेत्यर्थः । तात्पर्यस्यतादृशमतिकरणकसूर्यवंशवर्णनेच्छाभिप्रायस्य ॥—

यथावा ॥ अनायिदेशःकतमस्त्वयाद्यवसंतमुक्तस्यदशांवनस्य॥त्वदाप्तसंकेततयाकृतार्थाश्राव्यापिनानेनजनेनसंज्ञा॥ अत्रकतमोदेशस्त्वयापरित्यक्तःइतिप्रस्तुतार्थमनुपन्यस्यवसंतमुक्तस्यवनस्यदशामनायीतितत्प्रतिबिंबभूतार्थमात्रोपन्यासाल्ललितालंकारः ॥ १२७ ॥

अनायीति । नलंप्रतिदमयंत्याउक्तिः । हेनलअद्यत्वयाकतमोदेशोवसंतमुक्तस्यवनस्यदशामनायिप्रापितः । त्वयिप्राप्तसंकेततयाकृतार्थासंज्ञानामाप्यनेनमल्लक्षणेनजनेननश्राव्यानश्रवणार्हाअपितुश्राव्यैवेति । अत्रचतादृशवनदशारूपस्याप्रस्तुतार्थस्यप्रस्तुतेदेशेकथनात्प्रस्तुतवृत्तांतस्योक्तरूपस्यप्रतीतिः । नचात्रवारणेंद्रलीलामितिवत्पदार्थनिदर्शनायुक्तेतिवाच्यं । तत्रपूर्वार्धेनप्रकृतवृत्तांतोपादानेनसादृश्यपर्यवसानरूपनिदर्शनासत्वेप्यत्रतदनुपादानेनतद्व्यंग्यताप्रयुक्तविच्छित्तिविशेषवत्त्वेनललितालंकारस्यैवोचित

स्यात् । एतेनदशापदलक्षितनिःश्रीकत्वरूपकार्यद्वारेणकारणस्यराजकर्तृकत्यागकर्मत्व स्याभिधानात्पर्यायोक्तमित्यपिनिरस्तं उपधेयसंकरेप्युपाधेरसंकराच्चेतिसंक्षेपः॥१२७॥ इत्यलंकारचंद्रिकायांललितप्रकरणम् ॥

उत्कंठितार्थसंसिद्धिर्विनायत्नंप्रहर्षणं ॥ तामे
वध्यायतेतस्मैनिसृष्टासैवदूतिका ॥ १२८ ॥

उत्कंठाइच्छाविशेषः‘सर्वेंद्रियसुखास्वादोयत्रास्तीत्यभिमन्य ते॥तत्प्राप्तीच्छांससंकल्पामुत्कंठांकवयोविदुः’इत्युक्तलक्षणा त्तद्विषयस्यार्थस्यतदुपायसंपादनयत्नंविनासिद्धिःप्रहर्षणं।उ दाहरणंस्पष्टं । यथावा॥ मेघैर्मेदुरमंबरंवनभुवःश्यामास्तमा लद्रुमैर्नक्तंभीरुरयंत्वमेवतदिमंराधेगृहंप्रापय॥ इत्थंनंदनिदे शतश्चलितयोःप्रत्यध्वकुंजद्रुमंराधामाधवयोर्जयंतियमुनाकू लेरहःकेलयः॥ अत्रराधामाधवयोःपरस्परमुत्कंठितत्वंप्रसिद्ध तरमग्रेचग्रंथकारेणनिबद्धमित्यत्रोदाहरणेलक्षणानुगतिः१२८॥

तामेवेति।दूतिकामेवेत्यर्थः।निसृष्टाप्रेषिता।ससंकल्पांमनोरथसहितां।मेघैरिति। मेदुरंतुंदिलं नक्तंरात्रिरस्तीतिशेषः । नंदनिदेशतोनंदस्याज्ञावशात् । प्रत्यध्वकुंजद्रुम मध्वसंबंधिकुंजद्रुमंद्रुमंप्रति। ग्रंथकारेणगीतगोविंदकृता ॥ १२८ ॥

वाञ्छितादधिकार्थस्यसंसिद्धिश्चप्रहर्षणं ॥ दी
पमुद्योजयेद्यावत्तावदभ्युदितोरविः॥ १२९ ॥

स्पष्टं । यथावा ॥ चातकस्त्रिचतुरान्पयःकणान्याचतेजलधरं पिपासया॥सोपिपूरयतिविश्वमंभसाहंतहंतमहतामुदारता१२९

चातकइति । यत्तुचातकस्यत्रिचतुरकणमात्रार्थितयाजलदकर्तृकेणांभसाविश्वपूर णेनहर्षाधिक्याभावादयुक्तमुदाहरणमितितत्तुच्छं । हेतुसिद्धेः । नहिक्षुदुपशमायत त्पर्याप्तान्नमात्रार्थिनस्तदधिकान्नलाभेहर्षाधिक्यंनास्तीतिवक्तुंशक्यते । तदानीमुपयो गाभावेपिस्वस्यैवकालांतरेतदुपयोगसत्त्वात् । नचचातकस्यजलसंग्रहानुपयोगाद्वैष म्यंशंकनीयं । चातकवृत्तांतस्याप्रस्तुततयातदंगेप्रस्तुतदातृयाचकवृत्तांतेकाव्यस्यपर्य वसानादिति ॥ १२९ ॥

यत्नादुपायसिद्ध्यर्थात्साक्षाल्लाभःफलस्यच ॥ निध्यं
जनौषधीमूलंखनतासाधितोनिधिः ॥ १३० ॥

फलोपायसिद्ध्यर्थाद्यत्नान्मध्येउपायसिद्धिमनपेक्ष्यसाक्षात्फलस्यैवलाभोपिप्रहर्षणम्। यथानिध्यंजनसिद्ध्यर्थंमूलिकांखनतस्तत्रैवनिधेर्लाभः । यथावा ॥ उच्चित्यप्रथममधस्थितंमृगाक्षीपुष्पौघंश्रितविटपंग्रहीतुकामा ॥ आरोढुंपदमदधादशोकयष्टावामूलंपुनरपितेनपुष्पिताभूत् ॥ अत्रपुष्पग्रहणोपायभूतारोहणासिद्ध्यर्थात्पदनिधानात्तत्रैवपुष्पग्रहणलाभः १३०

तृतीयंप्रभेदमाह । यत्नादिति । प्रहर्षणमित्यनुवर्तते । निध्यंजनेति । निधिदर्शनसाधनंयदंजनंतत्साधनौषधीमूलमित्यर्थः । साधितोलब्धः । उच्चित्येति । अधःस्थितंवृक्षस्याधोदेशेस्थितं । अवस्थितमितिपाठेसमीपाशोकयष्टाववस्थितमित्यर्थः । श्रिताआश्रिताविटपाःशाखायेनेतिपुष्पौघविशेषणम् । अदधादाहितवती यष्टिःस्कंधः तेनपादाघातेन । पुनरप्यामूलंपुष्पिताभूदर्थादशोकयष्टिः । अत्रचतदसाध्यकयत्नात्तल्लाभइतिप्रकारत्रयसाधारणंसामान्यलक्षणंबोध्यं ॥ १३० ॥ इतिप्रहर्षणम् ॥

इष्यमाणविरुद्धार्थसंप्राप्तिस्तुविषादनम् ॥ दीपमुद्योजयेद्यावन्निर्वाणस्तावदेवसः ॥ १३१ ॥

यथावा ॥ रात्रिर्गमिष्यतिभविष्यतिसुप्रभातंभास्वानुदेष्यतिहसिष्यतिपंकजश्रीः ॥ इत्थंविचिंतयतिकोशगतेद्विरेफेहाहंतहंतनलिनींगजउज्जहार ॥ १३१ ॥

इष्यमाणविरोधीयोऽर्थस्तत्संप्राप्तिर्विषादनमलंकारः । उद्योजयेदुद्दीप्तंकुर्यात् । उद्योजयेद्यावदित्यनेनतदिच्छामात्रंनतुतत्करणमितिविषमाद्भेदः । एवमग्रिमोदाहरणेपीच्छामात्रंनलिष्टोत्पत्त्यनुकूलाचरणमिति ॥ १३१ ॥ इतिविषादनम् ॥

एकस्यगुणदोषाभ्यामुल्लासोन्यस्यतौयदि ॥ अपिमांपावयेत्साध्वीस्नात्वेतीच्छतिजान्हवी ॥ १३२ ॥
काठिन्यंकुचयोःस्रष्टुंवांछंत्यःपादपद्मयोः ॥ निन्दंतिचविधातारंत्वद्धाटीष्वरियोषितः ॥ १३३ ॥
तदभाग्यंधनस्यैवयन्नाश्रयतिसज्जनम् ॥ लाभोयमेवभूपालसेवकानांनचेद्वधः ॥ १३४ ॥

यत्रकस्यचिद्गुणेनान्यस्यगुणोदोषेणदोषो(गुणेनदोषोदोषेणगु

णोवावर्ण्यतेसउल्लासः। द्वितीयार्द्धमाद्यस्योदाहरणम्। तत्रपतिव्रतामहिमगुणेनतदीयस्नानतोगंगायाःपावनत्वगुणोवर्णितः। द्वितीयश्लोकेद्वितीयस्योदाहरणम्। तत्रराज्ञोधाटीषुवनेपलायमानानामरातियोषितांपादयोर्धावनपरिपन्थिमार्दवदोषेणतयोःकाठिन्यमस्पृष्टाव्यर्थंकुचयोस्तत्स्पृष्टवतोधातुर्निंद्यत्वदोषोवर्णितः। तृतीयश्लोकस्तृतीयचतुर्थयोरुदाहरणम्। तत्रसज्जनमहिमगुणेनधनस्यतदनाश्रयणंदोषत्वेनराज्ञःक्रौर्यदोषेणतत्सेवकानांवधंविनाविनिर्गमनंगुणत्वेनवर्णितं ॥—

एकस्येति। एकस्यगुणदोषाभ्यामन्यस्यतौगुणदोषौयदिभवतस्तदोल्लासालंकारः। अपीति। अपिसंभावनायम्। साध्वीपतिव्रतास्नात्वामांपावयेदितिजान्हवीइच्छतीत्यन्वयः। तवधाटीषुयुद्धयात्रासुकुचयोः। स्पृष्टंकाठिन्यंपादपद्मयोर्वांछंत्योरियोषितोविधातारंनिंदंतीत्यन्वयः। स्प्रष्टुमितिपाठेकुचयोःकाठिन्यंपादयोःस्प्रष्टुमिच्छंत्यइत्यन्वयः। लाभोयमिति। भूपालसेवकानामयमेवलाभोयदिवधोनभवतीत्यन्वयः ॥—

अनेनैवक्रमेणोदाहरणांतराणि॥यदयंरथसंक्षोभादंसेनांसोनिपीडितः॥ एकःकृतीमदंगेषुशेषमंगंभुवोभरः॥ अत्रनायिकासौंदर्यगुणेनतदंसनिपीडितस्यस्वांसस्यकृतित्वगुणोवर्णितः। लोकानंदनचंदनद्रुमसखेनास्मिन्वनेस्थीयतांदुर्वंशैःपरुषैरसारहृदयैराक्रांतमेतद्वनं ॥ तेह्यन्योन्यनिघर्षजातदहनज्वालावलीसंकुलानस्वान्येवकुलानिकेवलमिदंसर्वंदहेयुर्वनं ॥ अत्रवेणूनांपरस्परसंघर्षणसंजातदहनसंकुलत्वदोषेणवननाशरूपदोषोवर्णितः। दानार्थिनोमधुकरायदिकर्णतालैर्दूरीकृताःकरिवरेणमदांधबुध्या॥ तस्यैवगंडयुगमंडनहानिरेषाभृंगाःपुनर्विकचपद्मवनेचरंति अत्रभ्रमराणामलंकरणत्वगुणेनगजस्यतत्प्रतिक्षेपोदोषत्वेनवर्णितः। आघ्रातंपरिचुंबितंपरिमुहुर्लीढंपुनश्चर्वितंत्यक्तंवाभुविनीरसेनमनसातत्रव्यथांमाकृथाः॥ हेसद्रत्नतवैवदेवकुशलंयद्वानरेणादरादन्तःसारविलोकनव्यसनिनाचूर्णीकृतंनाश्मना॥अत्रवानरस्यचापलदोषेणरत्नस्य

चूर्णनाभावोगुणत्वेनवर्णितः । अत्रप्रथमचतुर्थयोरुल्लासोन्वर्थः ॥ मध्यमयोश्छत्रिन्यायेनलाक्षणिकः ॥ १३४ ॥

यदयमिति । रथस्यसंक्षोभाच्चलनाद्यदयमंसोऽसेनार्थाद्दयितायानिपीडितःसंघृष्टो मर्मांगेषुमध्येसएवैकःकृतीकुशलः । अवशिष्टमंगंभूमेर्भारमित्यर्थः । दुर्वंशेदुष्टवेणुभिर्दुष्कुलैश्चेत्यादिःश्लेषोबोध्यः। वननाशरूपोवनसंबंधिनाशरूपः। वनस्येतियुक्ततरःपाठः। तत्प्रतिक्षेपोभ्रमरनिरासोगजस्यदोषत्वेनेतिसंबधः । आघ्रातमिति । मुहुःपरिलीढमास्वादितम् । नीरसेनमनसाकरणभूतेन वानरेणकर्त्रा । तत्रतस्मिन्सति । विचारणव्यसनिनाविचारणतत्परेण । अश्मनापाषाणेन । प्रथमचतुर्थयोर्गुणेनगुणदोषेणवागुणइति भेदयोः । उल्लासउल्लासशब्दः । अन्वर्थइति । उत्कर्षोल्लासःसुखंयत्रेत्यर्थानुगतइत्यर्थः । छत्रिन्यायेनेति । केषुचिच्छत्रसंबंधाच्छत्र्यछत्रिसमुदायेछत्रिणोयांतीतिवदित्यर्थः ॥ १३२ ॥ १३३ ॥ १३४ ॥ इत्यलंकारचंद्रिकायांउल्लासः ॥

ताभ्यांतौयदिनस्यातामवज्ञालंकृतिस्तुसा ॥ स्वल्पमेवांबुलभतेप्रस्थंप्राप्यापिसागरं ॥ मीलंतियदिपद्मानिकाहानिरमृतद्युतेः ॥ १३५ ॥

ताभ्यांगुणदोषाभ्यां । तौगुणदोषौ । अत्रकस्यचिद्गुणेनान्यस्य गुणालाभेद्वितीयार्धमुदाहरणं। दोषेणदोषस्याप्राप्तौतृतीयार्धं। यथा ।मदुक्तिश्चेदंतर्मदयतिसुधीभूयसुधियःकिमस्यानामस्यादरसपुरुषानादरभरैः॥ यथायूनस्तद्वत्परमरमणीयापिरमणीकुमाराणामंतःकरणहरणंनैवकुरुते ॥ त्वंचेत्संचरसेवृषेणलघुताकानामदिग्दन्तिनांव्यालैःकंकणभूषणानिकुरुषेहानिर्नहेम्नामपि ॥ मूर्द्धन्यंकुरुषेसितांशुमयशःकिन्नामलोकत्रयीदीपस्यांबुजबांधवस्यजगतामीशोसिकिंब्रूमहे॥अत्राद्येकवितारमणीगुणाभ्यामरसबालकयोर्हृदयोल्लासरूपगुणाभावोवर्णितः । द्वितीयेपरमेश्वरानंगीकरणदोषेणदिग्गजादीनांलघुतादिदोषाभावोवर्णितः ॥ १३५ ॥

प्रस्थंप्रस्थपरिमाणपात्रं । मदुक्तिरिति । ममोक्तिःकवितासुधियोंतः करणंसुधीभूयामृतीभूयचेन्मदयतितोषयतितदाऽस्यामदुक्तेःअरसानांनीरसानाम्पुरुषाणामनादरसमूहैःकिंनामस्यान्नकिंचिदित्यर्थःक्वचिदलसेतिपाठः । परमरमणीयापि । केव रम

णीस्त्रीयूनस्तरुणस्ययथांतःकरणहरणंकुरुतेतद्वत्कुमाराणांबालानामित्यन्वयः। त्वंचेदिति। शिवंप्रतिकस्यापिकवेरुक्तिः। जलांशुंचंद्रंपक्षेजडांशुं। अंबुजबांधवःसूर्यः। उल्लासरूपगुणाभावउल्लासरूपस्यगुणस्याभावः ॥ १३५ ॥ इत्यवज्ञाप्रकरणम् ॥

दोषःस्याभ्यर्थनानुज्ञातत्रैवगुणदर्शनात् ॥ विप
दःसंतुनःशश्वद्यासुसंकीर्त्यतेहरिः ॥ १३६ ॥

यथावा ॥ मय्येवजीर्णतांयातुयत्त्वयोपकृतंहरे॥नरःप्रत्युपकारार्थीविपत्तिमभिकांक्षति॥इयंहनुमंतंप्रतिराघवस्योक्तिः। अत्र प्रत्युपकाराभावोदोषस्तदभ्युपगमेहेतुर्गुणोविपत्त्याकांक्षाया अप्रसक्तिः। साचव्यतिरेकमुखप्रवृत्तेनसामान्येनविशेषसमर्थनरूपेणार्थांतरन्यासेनदर्शिता। यथावा ॥ व्रजेमभवदंतिकंप्रकृतिमेत्यपैशाचिकींकिमित्यमरसंपदःप्रमथनाथनाथामहे॥ भवद्भवनदेहलीविकटतुंडदंडाहतित्रुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते ॥ १३६ ॥

दोषस्येति। अभ्यर्थनाइच्छा। तत्रैवदोषएव। अनुज्ञेतिलक्ष्यनिर्देशः। शश्वन्निरंतरंसंकीर्त्यतइत्यनेनान्वयि। मय्येवेति। जीर्णतांप्रत्युपकाराक्षमतां।हरिशब्दोवानरार्थः। व्यतिरेकमुखेति। वैधर्म्यमुखेत्यर्थः। अस्यचार्थांतरन्यासेनेत्यनेनान्वयः। दर्शितेति। वैधर्म्यंविपर्ययेप्रत्युपकारानभिलाषीविपत्तिंनाकांक्षतीत्यर्थपर्यवसानादितिभावः। व्रजेमेति। हेप्रमथनाथहरपैशाचिकींपिशाचसंबंधिनींप्रकृतिंपिशाचतामेत्यप्राप्यभवतोंतिकंसमीपदेशंभजेम। अमरसंपत्तीःकिमितिप्रार्थयामहे। यतोमघवदादिभिरिंद्रप्रमुखैरपिभवद्भवनदेहलीषुविकटतुंडस्यवक्रतुंडस्यदंडाघातैःस्फुटन्मुकुटाग्रैर्भूयतइत्यर्थः ॥ १३६ ॥ इत्यलंकारचंद्रिकायामनुज्ञाप्रकरणं ॥

लेशःस्याद्दोषगुणयोर्गुणदोषत्वकल्पनं ॥ अखिले
षुविहंगेषुहंतस्वच्छंदचारिषु ॥ शुकपंजरबंधस्तेम
धुराणांगिरांफलम् ॥१३७॥

दोषस्यगुणत्वकल्पनंगुणस्यदोषत्वकल्पनंवलेशः। उदाहरणंराज्ञोभिमतेविदुषिपुत्रेचिरंराजधान्यांप्रवसतितद्दर्शनोत्कंठितस्यगृहेस्थितस्यपितुर्वचनमप्रस्तुतप्रशंसारूपं। तत्रप्रथमार्धेइतरविहगानामवक्तृत्वदोषस्यस्वच्छंदचरणानुकूलतयागुण

त्वंकल्पितम्द्वितीयार्धेमधुरभाषित्वस्यगुणस्यपंजरबंधहेतुत यादोषत्वंकल्पितं। नचात्रव्याजस्तुतिराशंकनीया। नह्यत्र विहगांतराणांस्तुतिव्याजेननिंदायांशुकस्यनिंदाव्याजेनस्तु तौचतात्पर्यं। किंतुपुत्रदर्शनोत्कंठितस्यदोषगुणयोर्गुणदोष त्वाभिमानएवात्रश्लोकेनिबद्धः॥—

लेशइतिलक्ष्यनिर्देशः। प्रवसतीतिसतिसप्तम्यंतं। शुकस्यनिंदायानिंदाव्याजेन स्तुतौचेत्यन्वयः॥—

यथावा॥ संतःसच्चरितोदयव्यसनिनःप्रादुर्भवद्यंत्रणाःस र्वत्रैवजनापवादचकिताजीवंतिदुःखंसदा॥ अव्युत्पन्नमतिः कृतेननसतानैवासताव्याकुलोयुक्तायुक्तविवेकशून्यहृदयोध न्योजनःप्राकृतः॥ दंडीत्वत्रोदाजहार। "युवैषगुणवान्राजा योग्यस्तेपतिरूर्जितः॥ रणोत्सवेमनःसक्तंयस्यकामोत्सवाद पि॥चपलोनिर्दयश्चासौजनःकिंतेनमेसखि॥ आगःप्रमार्जना यैवचाटवोयेनशिक्षिताः॥" अत्राद्यश्लोकेराज्ञोवीर्योत्कर्षस्तु तिः। कन्यायानिरंतरसंभोगनिर्विवर्तिषयादोषत्वेनप्रतिभास तामित्यभिप्रेत्याविदग्धयासख्याराजप्रकोपपरिजिहीर्षयासए वदोषोगुणत्वेनवर्णितः। उत्तरश्लोकेसखीभिरुपदिष्टंमानंकर्तु मशक्तयापितदग्रतोमानपरिग्रहानुगुण्यंप्रतिज्ञायतदनिर्वाह माशंकमानयासखीनामुपहासम्परिजिहीर्षत्यानायिकयाना यकस्यचाटुकारितागुणएवदोषत्वेनवर्णितः। नचाद्यश्लोकेस्तु तिर्निंदापर्यवसायिनी द्वितीयश्लोकेनिंदास्तुतिपर्यवसायिनी तिव्याजस्तुतिराशंकनीया॥—

संतइति। सच्चरितस्योदयोवृद्धिःस्तद्व्यसनिनस्तत्पराःप्रादुर्भवद्यंत्रणंस्वेच्छाचर णनिरोधोयेषांते। सर्वत्रैवविषये। दुःखमितिक्रियाविशेषणं। अव्युत्पन्नमतिरनिपु णमतिः। सतासमीचीनेन कृतेनाचरणेन प्राकृतोनीचः युवैषइति। वरार्थिनींक न्यकांप्रतिसखीवचनं। चपलइत्यादिचनायिकायाःसखींप्रति। उत्सेकइतिपाठेप्युत्क र्षएवार्थः। कन्यायादोषत्वेनभासतामित्यन्वयः। निर्वर्तितुमिच्छानिर्विवर्तिषातद्रू पदोषत्वेनेत्यर्थः। निर्विवित्सोरितिपाठेराज्ञोविशेषणं॥—

राजप्रकोपादिपरिहारार्थमिहनिंदास्तुत्योरन्याविदिततयाले शतएवोद्घाटनेनततोविशेषादिति।वस्तुतस्त्विहव्याजस्तुति सद्भावोपिनदोषः। नह्येतावतालेशमात्रस्यव्याजस्तुत्यंतर्भा वःप्रसज्जते। तदसंकीर्णयोरपिलेशोदाहरणयोर्दर्शितत्वात्। नापिव्याजस्तुतिमात्रस्यलेशांतर्भावःप्रसज्जते। भिन्नविषय व्याजस्तुत्युदाहरणेषु 'कस्त्वंवानररामचंद्रभवनेलेखार्थसंवा हको।यद्वक्तुंमुहुरीक्षसेनधनिनांब्रूषेनचाटून्मृषा'इत्यादिषुदोष गुणीकरणस्यगुणदोषीकरणस्यचाभावात्। तत्रान्यगुणदोषा भ्यामन्यत्रगुणदोषयोःप्रतीतेः ॥—

कुतस्तर्हिगुणत्वेनवर्णनंतत्राह राजप्रकोपेति। अन्येनाविदितंयथास्यादितिक्रिया विशेषणं। लेशतएवेति। तदुक्तंदंडिनैव।'लेशमेकेविदुर्निंदांस्तुतिंवालेशतःकृतामिति'। लेशमात्रस्येतिकृत्स्नार्थकं। उदाहरणयोरखिलेष्विसाद्योः। भिन्नविषयेति। अन्यनिं दयान्यस्यस्तुतिरन्यस्तुत्यान्यनिंदेत्येवमादिरूपेसर्थः ॥—

विषयैक्येपि 'इंदोर्लक्ष्मत्रिपुरजयिनःकंठमूलंमुरारिर्दिङ्ना गानांमदजलमषीभांजिगंडस्थलानि ॥अद्याप्युर्वीवलयतिल कश्यामलिम्नानुलिप्तान्याभासन्तेवदधवलितंकिंयशोभिस्त्व दीयैः'इत्याद्युदाहरणेषुलेशास्पर्शनात्।तत्रहींदुलक्ष्म्यादीनांध वलीकरणाभावदोषएवगुणत्वेननपर्यवस्यतिकिंतुपरिसंख्या रूपेणततोन्यत्सर्वंधवलितमित्यन्योगुणःप्रतीयते। क्वचिद्व्या जस्तुत्युदाहरणेगुणदोषीकरणसत्वेऽपिस्तुतेर्विषयान्तरमपि दृश्यते। यथा॥ सर्वदासर्वदोसीतिमिथ्यासंस्तूयतेबुधैः॥ ना रयोलेभिरेपृष्ठंनवक्षःपरयोषितः॥ अत्रहिवाच्ययानिंदयापरि संख्यारूपेणततोन्यत्सर्वमर्थिनामभिमतन्दीनारादिदीयतेइ तिस्तुत्यंतरमपिप्रतीयते।एवंचयेषूदाहरणेषुकस्तेशौर्यमदोयो द्धुमित्यादिषुगुणदोषादिषुगुणदोषीकरणादिकमेवव्याजस्तु तिरूपतयावतिष्ठते तत्रलेशव्याजस्तुत्योःसंकरोस्तु। इत्थमे वहिव्याजस्तुत्यप्रस्तुतप्रशंसयोरपिप्राक्संकरोवर्णितः॥१३७॥

ननुतथाप्येकविषयव्याजस्तुतिर्नलेशाद्भिद्येतेसाशंक्याह विषयैक्येपीति । लेशा स्पर्शनादिसग्रेतनेनान्वयः । इंदोरिति । हेउर्वीवलयतिलकरूपराजन् त्वदीयैर्यशोभिः किंधवलितंतद्वद यतोद्यापिइंदुलक्ष्म्यादीनिश्यामलिम्नाश्यामवर्णेनानुलिप्तान्याभासं तेइत्यन्वयः । लक्ष्मलांछनं । दिङ्नागानांदिग्गजानांमदजलमेवमपीतद्रांजितमुक्ता नि । परिसंख्येति । एतान्येवश्यामानीत्येवंरूपेत्यर्थः । विषयांतरंदोषीकृताद्भिन्नंगुणरू पमालंबनं । सर्वेदेति । अरयःपृष्ठमर्थात्तवनलेभिरेऽप्राप्तवंतःपलायनाभावात् । दीना रःपरिमाणविशेषपरिच्छिन्नासुवर्णमुद्रा । एवंचलेशव्याजस्तुत्योरलंकीर्णविषयसत्वेचगु णदोषीकरणादिकमित्यादिपदेनदोषगुणीकरणसंग्रहः । येण्वित्युपक्रमात्तत्रेतिपाठोयु क्ततरःअत्रेत्यपियुक्तएव।इदमोपियच्छब्दार्थपरामर्शकत्वात् ॥३७॥ इतिलेशालंकारः॥

सूच्यार्थसूचनंमुद्राप्रकृतार्थपरैःपदैः ॥ नितं
बगुर्वीतरुणीदृग्युग्मविपुलाचसा ॥ १३८॥

अत्र नायिकावर्णनपरेणयुग्मविपुलापदेनास्यानुष्टुभोयुग्मवि पुलानामत्वरूपसूच्यार्थसूचनंमुद्रा। यद्यप्यत्रग्रंथेवृत्तनाम्नोना स्तिसूचनीयत्वंतथाप्यस्योत्तरार्द्धस्यलक्ष्यलक्षणयुक्तच्छंदःशा स्त्रमध्यपातित्वेन तस्यसूचनीयत्वमस्तीतितदभिप्रायेणलक्ष णंयोज्यं । एवंनवरत्नमालायांतत्तद्रत्ननामनिवेशेनतत्तन्नामक जातिसूचनन्नक्षत्रमालायामश्व्यादिदेवतानामभिर्नक्षत्रसूच नमित्यादावयमेवालंकारः । एवंनाटकेतुवक्ष्यमाणार्थसूचने ष्वपि ॥ १३८ ॥

सूच्यार्थेति । सूचनीयस्यार्थस्येत्यर्थः । मुद्रेतिलक्ष्यनिर्देशः । दृग्युग्मंविपुलंयस्याः सा । अत्रग्रंथेअस्मिन्नलंकारग्रंथे । रत्नमालाशब्देनभगवत्स्तुतिपद्यावलीविशेषउच्यते। रत्ननामनिवेशेन प्रकृतार्थपररत्नवाचिपदघटनेन । तत्तन्नामकजातिसूचनं तन्ना मप्रवृत्तिनिमित्तरत्नजातिसूचनं । नक्षत्रमालाशब्दार्थोपिपूर्वोक्तएव । अश्व्यादि देवतानामभिर्नक्षत्राणांतद्दैवत्यानांसूचनंबोध्यं । वक्ष्यमाणेति । यथाअनर्घ्यराघवे 'यां तिन्यायप्रवृत्तस्यतिर्यंचोपिसहायताम् । अपंथानंतुगच्छंतंसोदरोपिविमुंचति' इतिसूत्र धारवचनेनवक्ष्यमाणरावणवृत्तांतसूचनमितिबोध्यं ॥ १३८ ॥ इतिमुद्रालंकारः

क्रमिकंप्रकृतार्थानांन्यासरत्नावलींविदुः । चतु
रास्यःपतिर्लक्ष्म्याःसर्वज्ञस्त्वंमहीपते ॥१३९॥

अत्रचतुरास्यादिपदैर्वर्णनीयस्यब्रह्मविष्णुरुद्रात्मताप्रतीयत इतिप्रसिद्धसहपाठानांक्रमेणनिवेशनंरत्नावली । यथावा ॥रत्याप्तप्रियलांछनेकठिनतावासेरसालिंगितेप्रल्हादैकरसेक्रमादुपचितेभूभृद्गुरुत्वापहे॥कोकस्पर्द्धिनिभोगभाजिजनितानंगेखलीनोन्मुखेभातिश्रीरमणावतारदशकंबालेभवत्याःस्तने ॥ यथावा ॥ लीलाब्जानांनयनयुगलद्राघिमादत्तपत्रःकुंभावैभौ कुचपरिकरःपूर्वपक्षीचकार ॥ भ्रूविभ्रांतिर्मदनधनुषोविभ्रमानन्ववादीद्वक्त्रज्योत्स्नाशशधररुचंदूषयामासयस्याः । अत्रपत्रदानपूर्वपक्षोपन्यासानुवाददूषणोद्भावनानि बुधजनप्रसिद्धक्रमेणन्यस्तानि ।प्रसिद्धसहपाठानांप्रसिद्धक्रमानुसरणेप्ययमेवालंकारः ॥–

क्रमिकमिति । प्रकृतार्थानांक्रमिकंप्रसिद्धक्रमानुसारिन्यसनंप्रतिपादनंरत्नावलिरलंकारः । प्रकृतत्वंचयथाकथंचित्प्रकृतसंबंधत्वंबोध्यं । चतुरेति । चतुरमास्यंयस्यसचतुर्मुखश्च । रत्याप्तेति । हेबालेभवत्याःस्तनेश्रीरमणस्यविष्णोरवतारदशकंभातीत्यन्वयः। कीदृशे रतावाप्तंप्राप्तंप्रियस्यलांछनंचिन्हंनखक्षतांगरागादिकंयेनतथाभूते ।कठिनतायाआवासेस्थानभूते । रसेनालिंगिते । प्रकृताल्हादैकरसेतत्परे । क्रमाद्बदरामलकादिपरिमाणलाभेनोपचितेप्रवृद्धे । भूभृतांपर्वतानांगुरुत्वमपहंतिनाशयतितादृशे ततोपिमहत्वात् । चक्रवाकस्पर्द्धाशीले तत्सदृशत्वात् । भोगःसुखंशरीरंवातद्भाजि । जनितमदने । खेष्विंद्रियेषुलीनाआसक्ताउन्मुखायस्मिन्तादृशे । एतैरेवविशेषणैरवतारदशकरूपतापिस्तनस्यबोध्या । तद्यथा । रत्याप्राप्तःप्रियःकामस्तस्यलांछनंमत्स्यस्तद्रूपे । कठिनतायाआवासेकूर्मे । रसयापृथिव्यास्वोद्धरणकालआलिंगितेवराहे । प्रल्हादेएकोरसःप्रीतिर्यस्यतस्मिन्नृसिंहे । क्रमःपादविक्षेपस्तदनुसारेणोपचितेप्रवृद्धेवामने । भूभृतांराज्ञांगौरवनाशकेभार्गवे । कोकस्पार्धेनिसीतावियोगातुरतयाचक्रवाकशापदेरामे । भोगःफणातद्भाजिशेषावतारेबलभद्रे । जनितमनंगमंगस्यशरीरस्यविरुद्धंमौनभोगत्यागसमाधिप्रभृतियेनतस्मिन्बुद्धे । खलीनमश्वस्यवल्गातदुन्मुखेकल्किनीति । क्रमानुसरणेपीति । तथाचप्रसिद्धसहपाठानामर्थानांन्यसनंरत्नावलिरितिसामान्यलक्षणं । सक्रमाक्रमत्वेतत्प्रभेदाविति भावः ॥–

यथावा ॥ यस्यवन्हिमयोहृदयेषुजलमयोलोचनपुटेषुमारुतमयःश्वसितेषुक्ष्मामयोऽगेष्वाकाशमयःस्वान्तेषुपंचमहा

भूतमयोमूर्त्तइवाद्दश्यतनिहतप्रतिसामंतांतःपुरेषुप्रतापः ।
एवमष्टलोकपालनवग्रहादीनांप्रसिद्धसहपाठानांयथाकथंचि
त्प्रकृतोपमानोपरंजकतादिप्रकारेणनिवेशनेरत्नावल्यलंका
रः प्रकृतान्वयंविनाक्रमिकतत्तन्नाम्नाश्लेषभंग्यानिवेशनेक्रमप्र
सिद्धरहितानांप्रसिद्धसहपाठानांनवरत्नादीनांनिवेशनेप्यय
मेवालंकारः ॥ १३९ ॥

यस्येति । यस्यप्रतापःनिहतानांप्रतिशत्रुभूतानामंतःपुरेषुपंचमहाभूतमयोमूर्त्तइवाद्दश्ये तेत्यन्वयः । पंचमहाभूतमयत्वमेवविशेषणैर्दर्शयति । वन्हिमयइत्यादि । अंगेषुक्षमामयः पृथ्वीमयः पीडाभरसहिष्णुत्वात् । स्वांतेष्वंतःकरणेषुआकाशमयः तेषांशून्यताश्रयत्वात् । यथाकथंचिदित्यस्यप्रपंचनंप्रकृतोपमानेत्यादि । उपमानंचोपरंजकंचोपमानोपरंजकेतयोर्भावस्तत्ता प्रकृतंप्रत्युपमानताउपरंजकताचेत्यर्थः । उपरंजकताचारोप्यमाणता । तदुक्तम् । 'उपरंजकतामेतिविषयीरूपकंतदेति' । तत्रोपमानतारविरिवप्रतिदिवसोपजायमानोदयइत्यादिवत् । उपरंजकतातु चतुरास्यइत्याद्युदाहरणेवन्हिमयइत्यादिप्रतापवर्णनेचस्पष्टेति । प्रकृतान्वयंविनेति । मित्रचंद्रमुखीबालालोहिताधरपल्लवेत्यादाविितिभावः । क्रमिकेत्युपलक्षणम् । तदभावेपिगुरुणाजघनेनैषातरुणीमंदगामिनीत्यादावप्ययमलंकारइतिबोध्यं ॥ १३९ ॥ इत्यलंकारचंद्रिकायांरत्नावल्यलंकारः ॥

तद्गुणःस्वगुणत्यागादन्यदीयगुणग्रहः ॥ पद्म
रागायतेनासामौक्तिकंतेऽधरत्विषा ॥ १४० ॥

यथावा ॥ वीरत्वद्रिपुरमणीपरिधातुंपल्लवानिसंस्पृश्य ॥ नहरति
वनभुविनिजकररुहरुचिखचितानिपांडुपुत्रधिया: ॥ १४० ॥

तद्गुणइति । स्वगुणत्यागादनंतरमन्यदीयगुणग्रहणंतद्गुणालंकारः । पद्मेति । तवनासामौक्तिकमधरकांत्यापद्मरागवदाचरतीत्यर्थः । वीरेति । हेवीर त्वदरिकामिनीवनभुविपरिधानंकर्त्तुंपल्लवानिकरेणसंस्पृश्यपांडुपुत्रबुद्ध्यानहरतिनगृण्हाति । कीदृशानि । निजकररुहाणांनखानांरुच्याश्वेतकांत्याखचितानिव्याप्तानीत्यर्थः ॥ १४० ॥ इत्यलंकारचंद्रिकायांतद्गुणालंकारः ॥

पुनःस्वगुणसंप्राप्तिःपूर्वरूपमुदाहृतं॥हरकंठां
शुलिप्तोपिशेषस्त्वद्यशसासितः ॥ १४१ ॥

यथावा ॥ विभिन्नवर्णागरुडाग्रजेनसूर्यस्यरथ्याःपरितःस्फुरं त्या॥रत्नैःपुनर्यत्ररुचारुचंस्वामानिन्यिरेवंशकरीरनीलैः ॥ अ यमेवतद्गुणइतिकेचिद्व्यवजन्हुः ॥ १४१ ॥

पुनरिति। स्वगुणत्यागानंतरंपुनःस्वगुणप्राप्तिःपूर्वरूपमलंकारः। हरेति। नीलोपी तियुक्तःपाठः। विभिन्नेति। माघेरैवतकगिरिवर्णनं। गरुडाग्रजेनारुणेनविभिन्नवर्णा मिश्रितवर्णाःसूर्यस्यरथ्याअश्वायत्रगिरौवंशांकुरवन्नीलैरत्नैःपरितःस्फुरंत्यारुचास्वांरु चंनीलद्युतिमानिन्यिरेआनीतवंतः। रुचाविभिन्नवर्णाइतिवान्वयः। केचिदित्यस्वर सवीजंतुपद्मरागायतइत्युदाहरणेतद्गुणालंकारोनस्यात्। नचेष्टापत्तिः। अनुभवसिद्धच मत्कारस्यनिरालंबनत्वापत्तेरित्यूहनीयं। अथवायंतद्गुणएवेत्येवकारक्रमभंगेनकाव्यप्र काशकारादिमतोपन्यासपरत्वेनव्याख्येयं।तैरत्रतद्गुणस्योदाहृतत्वात्। अत्रहिपूर्वमश्वा नामरुणगुणत्वअनंतररैवतकरत्नैरुभयेषांतद्गुणत्वमितितद्गुणद्वयमितितेषामभिमतं १४१

पूर्वावस्थानुवृत्तिश्चविकृतेसतिवस्तुनि ॥ दी पेनिर्वापितेप्यासीत्कांचीरत्नैर्महन्महः ॥१४२॥

लक्षणेचकारात्पूर्वरूपमितिलक्ष्यवाचकपदानुवृत्तिः। यथा वा ॥ द्वारंखड्गिभिरावृतम्बहिरपिप्रस्विन्नगण्डैर्गजैरंतःकंचुकि भिःस्फुरन्मणिधरैरध्यासिताभूमयः ॥ आक्रान्तंमहिषीभिरे वशयनंतत्त्वद्विषांमंदिरेराजन्सैवचिरंतनप्रणयिनीशून्येपिरा ज्यस्थितिः ॥ १४२ ॥

पूर्वेति। वस्तुनिविकृतेविगतेसत्यपिपूर्वावस्थायाअनुवृत्तिरपिपूर्वरूपमलंकारः। महःप्रकाशः। द्वारमिति। हेराजन्तवविद्विषांमंदिरेशून्येपिचिरंतनःप्रणयोयस्याःसैव राज्यस्यस्थितिर्मर्यादास्तीतिशेषः। यतोद्वारंखड्गिभिर्गंडकाख्यपशुभिरेवखड्गधा रिभिरावृतं। बहिरपिभूमयोमदप्रस्विन्नगंडैर्गजैरध्यासिताः। अंतःपुरभूमयोविलसन्म णिधारिभिःकंचुकिभिःसर्पैरेवसौविदल्लैरध्यासिताः। शयनंतल्पंमहिषीभिर्वनिताभि रेवमहिषस्त्रीभिराक्रांतमित्यन्वयः ॥ १४२ ॥ इतिपूर्वरूपालंकारः ॥

संगतान्यगुणानंगीकारमाहुरतद्गुणं ॥ चिरंरा गिणिमच्चित्तेनिहितोपिनरज्जसि ॥ १४३ ॥

यथावा ॥ गंडाभोगेविहरतिमदैःपिच्छलेदिग्गजानांवैरिस्त्री णांनयनकमलेष्वंजनानिप्रमार्ष्टि ॥यद्यप्येषाहिमकरकराद्वैत

सौवस्तिकीतेकीर्तिर्दिक्षुस्फुरतितदपिश्रीनृसिंहक्षितींद्र॥ननु चान्यगुणेनान्यत्रगुणोदयानुदयरूपाभ्यामुल्लासावज्ञालंकरा भ्यांतद्गुणातद्गुणयोःकोभेदः। उच्यते। उल्लासावज्ञालक्षणयो र्गुणशब्दोदोषप्रतिपक्षवाची।अन्यगुणेनान्यत्रगुणोदयतदनु दयौचनतस्यैवगुणस्यसंक्रमणासंक्रमणे किंतुसद्गुरूपदेशेनस दसच्छिष्ययोर्ज्ञानोत्पत्त्यनुत्पत्तिवत्तद्गुणजन्यत्वेनसंभावित योर्गुणांतरयोरुत्पत्त्यनुत्पत्ती।तद्गुणाऽतद्गुणयोःपुनर्गुणशब्दो रूपरसगंधादिगुणवाची। तत्रान्यदीयगुणग्रहणाग्रहणेचरक्त स्फटिकवस्त्रमालिन्यादिन्यायेनान्यदीयगुणेनैवानुरंजनानन रंजनेविवक्षिते। तथैवचोदाहरणानिदर्शितानि। यद्यप्यवज्ञा लंकृतिरतद्गुणश्चविशेषोक्तिविशेषावेव। 'कार्याजनिर्विशेषो क्तिःसतिपुष्कलकारणे'इतितत्सामान्यलक्षणाक्रांतत्वात्। त थाप्युल्लासतद्गुणप्रतिद्वंद्विनाविशेषाकारेणालंकारांतरतयापरि गणितावितिध्येयं॥ १४३॥

संगेतेति। संगतःस्वसंबद्धोयोन्यःपदार्थस्तद्गुणानंगीकारमतद्गुणालंकारमाहुः। चि रमिति। 'रागिण्यनुरागिणिमंजिष्ठादिरंजनद्रव्ययुक्तेच। निहितोपिलंनरज्जसिरक्तो नुरागयुक्तश्चनभवसीति'श्लिष्टं। गंडेति। हेश्रीमन्नृसिंहाख्यभूपतेएपातवकीर्तिर्मदैःपि च्छलेपंकिलेदिग्गजानांगंडप्रदेशेयद्यपिविहरति तथावैरिस्त्रीणांनयनकमलेषुस्थितान्यं जनानिप्रमार्ष्टिप्रोंछतितदपितथापिदिक्षुहिमकरस्यचंद्रस्ययत्किरणाद्वैतंतस्यसौवस्तिकी स्वतीसाहेसर्थेतदाहेतिमाशब्दादिभ्यष्ठग्वाच्यइसनेनठक्प्रत्ययः। तत्सदृशीतियावत्। स्फुरतिप्रकाशतइत्यर्थः। विशेषाकारेणेति प्राक्लक्षितविशेषरूपेणेत्यर्थः॥ १४३॥
इत्यलंकारचंद्रिकायामतद्गुणलंकारः॥

प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणःपरसन्निधेः॥ नी
लोत्पलानिदधतेकटाक्षैरतिनीलतां॥ १४४॥

यथा॥ कपिरपिचकापिशायनमदमत्तोवृश्चिकेनसंदष्टः। अ पिचपिशाचग्रस्तःकिंब्रूमोवैकृतंतस्य॥ अत्रकपित्वजात्यास्व तःसिद्धस्यवैकृतस्यमद्यादिभिरुत्कर्षः॥ १४४॥

प्रागिति । परसंनिधिवशात्पूर्वसिद्धस्यस्वगुणस्योत्कर्षोऽनुगुणोनामालंकारः । नीलोत्पलानिकर्णावतंसीकृतानि । कपिरिरिति । कापिशायनंमद्यं ॥१४४॥ इत्यनुगुणः॥

मीलितंयदिसादृश्याद्भेदएवनलक्ष्यते ॥ रसो
नालक्षिलाक्षायाश्चरणेसहजारुणे ॥ १४५ ॥

यथावा ॥ मल्लिकामाल्यभारिण्यःसर्वांगीणार्द्रचंदनाः ॥ क्षौमवत्योनलक्ष्यंतेज्योत्स्नायामभिसारिकाः ॥ अत्राद्येचरणालक्तकरसयोररुणिमगुणसाम्याद्भेदानध्यवसायः । द्वितीयोदाहरणेचंद्रिकाभिसारिकाणांधवलिमगुणसाम्याद्भेदानध्यवसायः ॥ १४५ ॥

मीलितमिति लक्ष्यनिर्देशः । रसइति । स्वभावलोहितेचरणेलाक्षायारसोनालक्षिनज्ञातः । मल्लिकेति । क्षौमंदुकूलंतद्धारिण्यः ॥१४५॥ इत्यलंकारचंद्रिकायांमीलितं॥

सामान्यंयदिसादृश्याद्विशेषोनोपलक्ष्यते ॥ पद्मा
करप्रविष्टानांमुखंनालक्षिसुभ्रुवाम् ॥ १४६ ॥

यथावा ॥ रत्नस्तंभेषुसंक्रांतैःप्रतिबिंबशतैर्वृतः ॥ लंकेश्वरःसभामध्येनज्ञातोवालिसूनुना॥मीलितालंकारेएकेनापरस्यभिन्नस्वरूपानवभासरूपंमीलनंक्रियते । सामान्यालंकारेतुभिन्नस्वरूपावभासेपिव्यावर्तकविशेषोनोपलक्ष्यतइतिभेदः । मीलितोदाहरणेहिचरणादेर्वस्त्वंतरत्वेनागंतुकंयावकादिनभासते । सामान्योदाहरणेतुपद्मानांमुखानांचव्यक्त्यंतरतयाभानमस्त्येव । यथारावणदेहस्यतत्प्रतिबिंबानांचाकिंत्विदंपद्ममिदंमुखमयंबिंबोयंप्रतिबिंबइतिविशेषःपरंनोपलक्ष्यते । अतएवभेदतिरोधानान्मीलितंतदतिरोधानेपिसाम्येनव्यावर्तकानवभासेसामान्यमित्युभयोरप्यन्वर्थता । केचित्तुवस्तुद्वयस्यलक्षणसाम्यात्तयोःकेनचिद्बलीयसातदन्यस्यस्वरूपतिरोधानेमीलितंस्वरूपप्रतीतावपिगुणसाम्याद्भेदतिरोधानेसामान्यं ॥–

सामान्यमिति लक्ष्यनिर्देशः । विशेषोव्यावर्तकधर्मः । पद्मानामाकरः । रत्नस्तंभेष्विति । वालिसूनुनांगदेनएकेनचरणज्योत्स्नादिना । अपरस्यलाक्षारसाऽभिसारिकादेः । भिन्नस्वरूपेति । मुखपद्मादेर्भिन्नस्यस्वरूपस्यावभासेपीत्यर्थः । उक्तमेवार्थे

मुदाहरणारूढतयाविशदयतिमीलितोदाहरणेहीत्यादिना । वस्त्वंतरत्वेननभासतइत्यन्वयः । तत्प्रतिबिंबानांचव्यक्त्यंतरतयाभानमस्त्येवेत्यनुषंगः । केचिदित्यस्याहुरित्यग्रिमेणान्वयः । केचित्प्रकाशकारादयः । तदुक्तं 'समेनलक्ष्मणावस्तुवस्तुनायन्निगूह्यते ॥ निजेनागंतुनावापितन्मीलितमितिस्मृतम्' इति । तयोर्मध्ये एवंचेत्यस्येत्यत्रमीलितालंकारइत्यग्रेतनेनान्वयः ॥–

एवंच 'अपांगतरलेदृशौतरलवक्रवर्णागिरोविलासभरमंथरागतिरतीवकांतंमुखं ॥ इतिस्फुरितमंगकेमृगदृशांस्वतोलीलयातदत्रनमदोदयःकृतपदोपिसंलक्ष्यते' ॥ इत्यत्रमीलितालंकारः । अत्रहिदृक्तारल्यादीनांनारीवपुषःसहजधर्मत्वान्मदोदयकार्यत्वाच्चतदुभयसाधारण्याद्रुत्कृष्टतारल्यादियोगिनावपुषामदोदयस्यस्वरूपमेवतिरोधीयते । लिंगसाधारण्येनतज्ज्ञानेोपायाभावात् । मल्लिकामालभारिण्यइत्यादिषुतुसामान्यालंकारइत्याहुः । तन्मतेपद्माकरप्रविष्टानामित्यादौभेदाध्यवसायेपिव्यावर्तकास्फुरणेनालंकारांतरेणभाव्यं । सामान्यालंकारांतरांतरभेदेनवापूर्वस्मिन्मतेस्वरूपतिरोधानेऽलंकारान्तरेणभाव्यंमीलितावांतरभेदेनवा ॥ १४६ ॥

अपांगेति । अपांगस्तरलेययोस्ते । तरलाःसलरोच्चारणात्वक्रावक्रोक्तिगर्भावर्णायासुताःगिरोवाक्यरूपाः । इतिप्रकारेणमृगदृशामंगकेलीलयास्वतःस्वभावात्स्फुरितंप्रकटीभूतंतत्तस्मादत्रांगकेकृतपदःकृतस्थितिः । भेदाध्यवसायेपीति । मुखपद्मयोर्भेदावभासेपीत्यर्थः । व्यावर्तकास्फुरणेनहेतुना । अलंकारांतरेणेति । स्वरूपातिरोधानेनमीलितासंभवद्भेदातिरोधानेनचसामान्यस्याप्यसंभवादितिभावः । सामान्येति । तथाचगुणसाम्याद्विशेषाग्रहइतिसामान्यालंकारसामान्यलक्षणं । विशेषाग्रहश्चकचिद्भेदेगृह्यमाणेकचिच्चागृह्यमाणइत्याद्यप्रकारांतरगतिरत्रतन्मतेस्यादितिभावः । अवांतरभेदेनवेत्यनंतरंभाव्यमित्यनुषज्यते । पूर्वस्मिन्निति । मीलितंयदिसादृश्यादित्यादिपूर्वोक्तचंद्रालोककृन्मतइत्यर्थः । स्वरूपतिरोधानेऽपांगतरलइत्यादिस्वरूपतिरोधानस्थले । अलंकारांतरेणेत्यादि । स्वरूपतोज्ञायमानेसादृश्याद्भेदाग्रहणंमीलितमित्यंगीकारेप्रथमःपक्षः । सादृश्याद्भेदाग्रहणमित्येतावन्मात्रमीलितलक्षणांगीकारेणद्वितीयइतिभावः ॥ १४६ ॥ इत्यलंकारचंद्रिकायांसामान्यमलंकारः ॥

भेदवैशिष्ट्ययोःस्फूर्तावुन्मीलितविशेषकौ ॥ हि

माद्रिंत्वद्यशोमग्नंसुराःशीतेनजानते ॥ लक्षिता
न्युदितेचंद्रेपद्मानिचमुखानिच ॥ १४७ ॥

मीलितन्यायेनभेदानध्यवसायेप्राप्तेकुतोपिहेतोर्भेदस्फूर्तौमीलितप्रतिद्वंद्वयुन्मीलितं । तथासामान्यरीत्याविशेषास्फुरणेप्राप्तेकुतश्चित्कारणाद्विशेषस्फूर्तौतत्प्रतिद्वंद्वीविशेषकः । क्रमेणोदाहरणद्वयं। तद्गुणरीत्यापिभेदानध्यवसायप्राप्तावुन्मीलितंदृश्यते । यथा ॥ नृत्यद्भर्गाट्टहासप्रचरसहचरैस्तावकीनैर्यशोभिर्धावल्यंनीयमानेत्रिजगतिपरितःश्रीनृसिंहक्षितींद्र॥ नेदृग्यद्येपनाभिकमलपरिमलप्रौढिमासादयिष्यद्देवानांनाभविष्यत्कथमपिकमलाकामुकस्यावबोधः ॥ काकःकृष्णःपिकःकृष्णःकोभेदःपिककाकयोः ॥ वसंतसमयेप्राप्तेकाकःकाकःपिकःपिकः ॥ इदंविशेषकस्योदाहरणं।अत्रद्वितीयकाकपिकशब्दौकाकत्वेनज्ञातःपिकत्वेनज्ञातइत्यर्थांतरसंक्रमितवाच्यौ । यथावा ॥ वाराणसीवासवतांजनानांसाधारणेशंकरलांछनेपि ॥ पार्थप्रहारव्रणमुत्तमांगंप्राचीनमीशंप्रकटीकरोति ॥ १४७ ॥

भेदेति ।वैशिष्ट्यंवैजात्यं। उन्मीलितंविशेषकश्चक्रमेणालंकारौ। मग्नंभेदाग्रहात्तदंतर्गतं । लक्षितानीति । संकुचितत्वादितिभावः । सामान्यरीत्यासामान्यालंकारन्यायेन । एवंच 'वेत्रत्वचातुल्यरुचांवधूनांकर्णाग्रतोगंडतलागतानि ॥ भृंगाःसहेलंयदिनापतिष्यन्कोवेदयिष्यन्नवचंपकानि॥'इत्यपिविशेषकोदाहरणंबोध्यं। यत्त्वनुमानालंकारेणैवगतार्थत्वान्नानयोरलंकारांतरत्वमितितदयुक्तम् ।उदाहृतस्थलेभेदविशेषस्फूर्त्योर्विशेषदर्शनहेतुकप्रत्यक्षरूपत्वात् । अथापिस्वकपोलकल्पितपरिभाषयाऽनुमानालंकारतांब्रूपेतथापिसादृश्यमहिम्नाप्रागनवगतयोर्भेदवैजात्ययोस्फुरणात्मनाविशेषाकारेणमीलितसामान्यप्रतिद्वंद्विनायुक्तमेवालंकारांतरत्वं। अतद्गुणावज्ञयोरिवविशेषोक्त्यलंकारादित्यलंविस्तरेण । नृत्यदिति । नृत्यंकुर्वतोभर्गस्यहरस्ययोऽट्टहासस्तत्प्रसरस्यसमूहस्यविस्तारस्यवासहचरैःसदृशैरित्यर्थः । ईदृक्कीर्त्तिवच्छुक्लएषकमलाकामुकोनाभिकमलपरिमलस्यप्रौढिंसमृद्धिंयदिनासादयिष्यन्नाधारयिष्यदित्यन्वयः । यत्तुतद्गुणस्यात्रनिर्बाधकत्वात्कथंतत्प्रतिद्वंद्वित्वमुन्मीलितस्येतितदनुक्तोपालंभरूपत्वादुपेक्ष्यं । तद्गुणेनभेदानध्यवसायमात्रस्योक्तत्वात् । वाराणसीति ।तृतीयलोचनादिचिन्हेसाधार

णेपिसतीत्यन्वयः । पार्थोर्जुनस्तेनकृतोयःप्रहारस्तेनव्रणोयत्रतादृशमुत्तमांगंशिरः । पूर्वं त्रस्वाभाविकगुणसाम्यमिहत्वागंतुकगुणसाम्यमितिभेदः ॥ १४७ ॥ इत्युन्मीलितविशेषकावलंकारौ ॥

किंचिदाकूतसहितंस्याद्गूढोत्तरमुत्तरं॥यत्रा
सौवेतसीपांथतत्रेयंसुतरासरित् ॥१४८॥

सरित्तरणमार्गंपृच्छंतंप्रतितंकामयमानायाउत्तरमिदं। वेतसीकुंजेस्वाच्छंद्यमित्याकूतगर्भं । यथावा॥ग्रामेस्मिन्प्रस्तरप्रायेन किंचित्पांथविद्यते॥पयोधरोन्नतिंदृष्ट्वावस्तुमिच्छासिचेद्वस॥आस्तरणादिकमर्थयमानंपांथंप्रत्युक्तिरियं।स्तनोन्नतिंदृष्ट्वारंतुमिच्छसिचेद्वस । अविदग्धजनप्रायेऽस्मिन्ग्रामेकश्चिदवगमिष्यतीत्येतादृशंप्रतिबंधकंकिंचिदपिनास्तीतिहृदयं। इदमुन्नेयप्रश्नोदाहरणं। निबद्धप्रश्नोत्तरंयथा ॥ कुशलंतस्याजीवातिकुशलंपृच्छामिजीवतीत्युक्तं ॥पुनरपितदेवकथयसिमृतांनुकथयामियाश्वसिति॥ईर्ष्यामानानंतरमनुतप्तायानायिकायाःसखीमागतांप्रतितस्याःकुशलमितिनायकस्यप्रश्नः । जीवतीतिसख्याउत्तरम्। जीवत्याःकुतःकुशलमितितदभिप्रायः। अन्यत्पृष्टमन्यदुत्तरमितिनायकस्यपुनः कुशलंपृच्छामीतिप्रश्नः । पृष्टस्योत्तरमुक्तमित्यभिप्रायेणजीवतीत्युक्तमितिसख्यावचनम् ।सखीवचनस्याभिप्रायोद्घाटनार्थंपुनरपितदेवकथयसीतिनायकस्याक्षेपः । मृतांनुकथयामियाश्वसितीतिस्वाभिप्रायोद्घाटनं । सतिमरणेखलुतस्याःकुशलंभवतिमदागमसमयेपिश्वासेषुसंचरत्सुकथंमृतांकथयेयमित्यभिप्रायः ॥ १४८ ॥

किंचिदिति। किंचिदभिप्रायसहितंगूढमुत्तरमुत्तरंनामालंकारः । वेतसीवेतसलता सुखेनतरितुंयोग्यासुतरा । ग्रामइति । प्रस्तरप्रायेपाषाणबहुलेपाषाणतुल्येच । प्रायोबाहुल्यतुल्ययोरितिकोशात् । किंचिदास्तरणादिकंसमागमप्रतिबंधकंच । पयोधरोमेघःस्तनश्च । कश्चिदवगमिष्यतिज्ञास्यतीत्येतादृशमित्यादिरूपम् । उन्नेयःकल्प्यः प्रश्नोयेनतादृशस्योत्तरस्य । ईर्ष्यामानेति । ईर्ष्याहेतुकमानेत्यर्थः । अनुतप्तायाःपश्चात्तापयुतायाः ॥ १४८ ॥

प्रश्नोत्तरांतराभिन्नमुत्तरंचित्रमुच्यते ॥ केदा
रपोषणरताःकेखेटाःकिंचलंवयः ॥ १४९॥
अत्रकेदारपोषणरताइतिप्रश्नाभिन्नमुत्तरंकेखेटाःकिंचलमिति प्रश्नद्वयस्यवयइत्येकमुत्तरम् । उदाहरणांतराणिविदग्धमुखमंडनेद्रष्टव्यानि ॥ १४९ ॥

प्रश्नोत्तरेति । प्रश्नश्चउत्तरांतरंचप्रश्नोतरांतरेताभ्यामभिन्नमुत्तरं चित्रमित्युच्यतइत्यर्थः। केदारेति। केदाराणांपोषणेरताःकेइतिप्रश्नः। केदारस्यक्षेत्रस्यपोषणेरताइतितदेवोत्तरम् ।केखेटाःखेआकाशेअटंती तिप्रश्नस्ययदुत्तरंवयःपक्षिणइतितत्किंचलमितिप्रश्नस्य यदुत्तरांतरंवयस्तारुण्यादी।तितेनाभिन्नं ॥१४९॥इत्यलंकारचंद्रिकायांमुत्तरमलंकारः॥

सूक्ष्मंपराशयाभिज्ञेतरसाकूतचेष्टितं ॥ मयिप
श्यतिसाकेशैःसीमंतमणिमावृणोत् ॥१५०॥
कामुकस्यावलोकनेनसंकेतकालप्रश्नभावंज्ञातवत्याश्चेष्टेयम्। अस्तंगतेसूर्येसंकेतकालइत्याकूतं ।यथावा॥ संकेतकालमनसंविटंज्ञात्वाविदग्धया ॥ आसीन्नेत्रार्पिताकूतंलीलापद्मंनिमीलितम् ॥ १५० ॥

सूक्ष्ममिति । पराशयाभिज्ञस्येतरस्मिन्परविषयेसाभिप्रायंचेष्टितंसूक्ष्मालंकारः। पराशयाभिज्ञश्चासावितरश्चतस्यसाकूतचेष्टितमर्थात्परविषयइतिचार्थः । संकेतेति। संकेतकालेमनोयस्यतज्जिज्ञासुमितियावत् । विटंजारं । नेत्राभ्यामर्पितमाकूतंयस्मिन्तादृशंलीलासंबंधिपद्मंनेत्रेत्यादिक्रियाविशेषणंवा ॥ १५० ॥ इतिसूक्ष्ममलंकारः ॥

पिहितंपरवृत्तांतज्ञातुःसाकूतचेष्टितम् ॥ प्रिये
गृहागतेप्रातःकांतातल्पमकल्पयत् ॥ १५१ ॥
रात्रौसपत्नीगृहेजागरणेनश्रांतोसीतितल्पकल्पनाकूतं।यथावा॥ वक्रस्यंदिस्वेदबिंदुप्रबंधैर्दृष्ट्वाभिन्नंकुंकुमंकापिकंठे । पुंस्त्वंतन्व्याव्यंजयंतीवयस्यास्मित्वापाणौखड्गरेखांलिलेख ॥ अत्रस्वेदानुमितपुरुषायितंपुरुषोचितखड्गलेखनेनप्रकाशितम् ॥ १५१ ॥

पिहितमितिलक्ष्यनिर्देशः । तल्पंशयनम् । वक्रेति । वक्त्रस्रवणशीलानांस्वेदबिंदूनांप्रबंधैर्धाराभिःकंठेभिन्नंलग्नंकुंकुमंदृष्ट्वाकापिवयस्यासखीस्मिला।स्मितंकृत्वापुंस्त्वंव्यंजयंतीसतीतन्व्याःपाणौखड्गलेखांलिलेखेसन्वयः । सूक्ष्मालंकारेपराभिप्रा

यमवगतसाकूतचेष्टितेनोत्तरसमर्पणं। पिहितालंकारेतुगूढंपरवृत्तांतंज्ञात्वासाकूतचेष्टया तत्प्रकाशनमितिभेदोबोध्यः ॥ १५१ ॥ इत्यलंकारचंद्रिकायांपिहितमलंकारः ॥

व्याजोक्तिरन्यहेतूक्त्यायदाकारस्यगोपनं ॥ स
खिपश्यगृहारामपरागैरस्मिधूसरा ॥ १५२ ॥

अत्रचौर्यरतकृतसंकेतभूपृष्ठलुंठनलग्नधूलिजालस्यगोपनं। यथावा ॥ कस्यवानभवेद्रोषःप्रियायाःसव्रणेधरे ॥ सभृंगंपद्म माघ्रासीर्वारितापिमयाधुना ॥ उपपतिनाखंडिताधराया नायिकायाःसकाशमागच्छंतंप्रियमपश्यंत्येवसख्यानायिकां प्रतिहितोपदेशव्याजेनतंप्रतिनायिकापराधगोपनम् । छेकान्हुतेरस्याश्चायंविशेषः । तस्यांवचनस्यान्यथानयनेनापन्हवः। अस्यामाकारस्यहेत्वंतरवर्णनेनगोपनमिति ॥ लक्षणेलक्ष्यनाम्निचोक्तिग्रहणमाकारस्यगोपनार्थंहेत्वंतरप्रत्यायकव्यापारमात्रोपलक्षणं ॥ –

व्याजोक्तिरितिलक्ष्यनिर्देशः। चौर्यरतेकृतंयत्संकेतभूतभूमिपृष्ठलुंठनमित्यन्वयः। उपपतिनाजारेण। तस्यांछेकापन्हुतौ ॥–

ततश्च 'आयांतमालोक्यहरिंप्रतोल्यामाल्याःपुरस्तादनुरागमेका॥रोमांचकंपादिभिरुच्यमानंभामाजुगूहप्रणमंत्यथैनं' इत्यत्रापिव्याजोक्तिरेवातत्रह्यनुरागकृतस्यरोमांचाद्याकारस्यभक्तिरूपहेत्वंतरप्रत्यायकेनप्रणामेनगोपनंकृतं।सूक्ष्मपिहितालंकारयोरपिचेष्टितग्रहणमुक्तिसाधारणव्यापारमात्रोपलक्षणम् । ततश्च 'नलिनीदलेबलाकामरकतपात्रइववदृश्यतेशुक्तिः॥इतिममसंकेतभुविज्ञात्वाभावंतदाब्रवीदाली' इत्यादिष्वपिसूक्ष्मालंकारःप्रसरति । अत्रश्लोकेतावत्किमावयोःसंकेतस्थानंभविष्यतीतिप्रश्नाशयंसूचयतिकामुकेतदभिज्ञायाविदग्धयातदासखींप्रतिसाकूतमुक्तमितिसूक्ष्मालंकारोभवति । यतोत्रबलाकायामरकतपात्रप्रतिष्ठितशुक्त्युपमयातस्यानिश्चलत्वेना

श्वस्तत्वंतेनतस्यप्रदेशस्यनिर्जनत्वंतेनतदेवावयोःसंकेतस्थान मितिकामुकंप्रतिसूचनंलक्ष्यते।नचात्रध्वनिराशंकनीयः।दूरेव्य ज्यमानस्यापिसंकेतस्थानप्रश्नोत्तरस्यस्वोक्त्यैवाविष्कृतत्वात्॥

आयांतमिति । प्रतोल्यांरथ्यायां । एकाकाचिद्रामावनितासख्याःपुरस्ताद्रोमांचकंपादिभिरनुभावैर्व्यज्यमानमनुरागमेनंहरिंमणमंतीसतीजुगूहगोपितवतीत्यन्वयः । लक्ष्यते व्यज्यते ॥—

एवंपिहितालंकारेप्युदाहार्यं । इदंचान्यदत्रावधेयं । यत्रासौवेतसीपांथेत्यादिषुगूढोत्तरसूक्ष्मपिहितव्याजोक्त्युदाहरणेषुभावोनस्वोक्त्याविष्कृतःकिंतुवस्तुसौंदर्यबलाद्वक्तृबोद्धव्यविशेषविशेषिताद्गम्यः । तत्रैववस्तुतोनालंकारत्वंध्वनिभावास्पदत्वात् । प्राचीनैःस्वोक्त्याविष्करणेसत्यलंकारास्पदतास्तीत्युदाहृतत्वादस्माभिरप्युदाहृतानि।शक्यंहि 'यत्रासौवेतसीपांथतत्रेयंसुतरासरित् ॥ इतिपृच्छंतमध्वानंकामिन्याहससूचनं' इत्याद्यर्थांतरकल्पनयाभावाविष्करणमित्यतःप्राक्येषुलिखितोदाहरणेषुसंकेतकालमनसंपुंस्त्वंतन्व्याव्यंजयंतीभामाजुगुहेतिभावाविष्करणमस्तितेष्वेवतत्तदलंकारइति॥१५२॥

एवमिति । सूक्ष्मालंकारवदुक्तिरूपव्यापारवर्णनमित्यर्थः । उदाहर्तव्यमिति । यथावक्रस्यंदीतिपद्यएवआलीवालांसस्मितंप्राह मंदंमुग्धाक्षित्वामद्यपश्यामिनाथमित्युत्तरार्धनिर्माणेनाथमित्युक्त्याप्रकाशनमितिबोध्यं । वस्तुसौंदर्येति । वेतसीनिकुंजरूपवस्तुसौंदर्येत्यर्थः । ध्वनिभावास्पदत्वाद्ध्वनित्वाश्रयत्वात् । उपसंहरतिअतइति । येष्वित्यस्यभावाविष्करणमस्तीत्यनेनान्वयः॥१५२॥इत्यलंकारचंद्रिकायांव्याजोक्तिः॥

गूढोक्तिरन्योद्देश्यंचेद्यदन्यंप्रतिकथ्यते । वृषा
पेहिपरक्षेत्रादायातिक्षेत्ररक्षकः॥ १५३ ॥

यंप्रतिकिंचिद्वक्तव्यंतत्तटस्थैर्माज्ञासीतितदेवतदन्यंकंचित्प्रतिश्लेषेणोच्यतेचेत्सागूढोक्तिः । वृषेत्याद्युदाहरणं । परकलत्रंभुंजानंकामुकंप्रतिवक्तव्यंपरक्षेत्रेसस्यानिभक्षयंतंकंचिदुक्षाणंसमीपेचरंतंनिर्दिश्यकथ्यते । नेयमप्रस्तुतप्रशंसा । कार्य

कारणादिव्यंग्यत्वाभावात् । नापिश्लेषमात्रमप्रकृतार्थस्यप्रकृतार्थान्वयित्वेनाविवक्षितत्वात् । तस्यकेवलमितरवंचनार्थं निर्दिष्टतयाविच्छित्तिविशेषसद्भावात् ॥—

गूढोक्तिरिति । यदन्योद्देश्यकंवाक्यंतत्तदन्यंप्रतिकथ्यतेचेद्गूढोक्तिरलंकारः । सेव्यस्यादेःकलत्रंच । अपेहिदूरीभव । अविवक्षितत्वादिति । अयंभावः । प्रकृताप्रकृतश्लेषेऽसावुदयमारूढइत्यादावप्रकृतार्थस्यप्रकृतार्थोपमानतयान्वयः । स्त्रीक्रियतेसर्वथैवप्रकृतासंबद्धस्याप्रकृतार्थस्यकथनेऽसम्बंधार्थाभिधायकत्वापत्तेरतःप्रकृतेपिश्लेषवादिनाऽप्रकृतस्यप्रकृतसंबंधोवाच्यःसचनसंभवतिविवक्षाविरहादिति । कुतस्तर्ह्यप्रकृतार्थकथनंतत्राहतस्येति । अप्रकृतार्थस्येत्यर्थः । ननुतादृशविवक्षाविरहेपिनानार्थविन्यासमात्रेणास्तुश्लेषएवेत्याशंक्याहविच्छित्तिविशेषेति । तथाचश्लेषसत्त्वेपिविच्छित्तिविशेषाद्गूढोक्तिरवश्यमंगीकार्येत्याशयः । अतएवश्लेषमात्रमितितन्मात्रनिराकरणमेवोपक्रांतंनतुश्लेषनिराकरणमिति ॥—

यथावा ॥ नाथोमेविपणिंगतोनगणयत्येषासपत्नीचमांत्यक्त्वा मामिहपुष्पिणीतिगुरवःप्राप्तागृहाभ्यंतरं ॥ शय्यामात्रसहायिनींपरिजनःश्रान्तोनमांसेवतेस्वामिन्नागमलालनीयरजनींलक्ष्मीपतेरक्षमां ॥ अत्रलक्ष्मीपतिनाम्नोजारस्यागमनंप्रार्थयमानायास्तटस्थवंचनायभगवंतंप्रत्याक्रोशस्यप्रत्यायनं ॥१५३॥

नाथइति । विपणिःपण्यवीथिका । पुष्पिणीरजस्वला । आगमेनवेदेनलालनीयःस्तुत्यआगमनेनलालनीयश्चारजनींव्याप्येत्यत्यंतसंयोगेद्वितीया ॥१५३॥ इतिगूढोक्तिः ॥

विवृत्तोक्तिःश्लिष्टगुप्तंकविनाऽऽविष्कृतंयदि ॥
वृषापेहिपरक्षेत्रादितिवक्तिससूचनं ॥१५४॥

श्लिष्टगुप्तंवस्तुयथाकथंचित्कविनाऽऽविष्कृतंचेद्विवृत्तोक्तिः । वृषापेहीत्युदाहरणेपूर्ववद्गुप्तंवस्तुससूचनमितिकविनाविष्कृतं । यथावा ॥ वत्सेमागाविषादंश्वसनमुरुजवंसंत्यजोर्ध्वप्रवृत्तं कंपःकोवागुरुस्तेकिमिहबलभिदाजृंभितेनात्रयाहि ॥ प्रत्याख्यानंसुराणामितिभयशमनच्छद्मनाकारयित्वायस्मैलक्ष्मीमदाद्वःसदहतुदुरितंमंथमुग्धःपयोधिः ॥ इदंपरवंचनायगुप्ताविष्करणं ॥—

श्लिष्टगुप्तमिति । श्लिष्टेत्युपलक्षणम् । अर्थशक्तिमूलगुप्तस्यापिगच्छाम्यच्युतेत्या

दौसंग्रामबलात् । वत्सेइति । वत्सेलक्ष्मिविषादंखेदंहरंचउरुजवंमहावेगंउर्ध्वंप्रवृत्तं श्वसनंश्वासंपवनंचसंत्यजकंजलंपातीतितथावरुणःकम्पश्चगुरुर्महान्बृहस्पतिश्चबलंमसि द्धंतद्भिदानाशकेनवलाख्यदैत्यनाशकेनेंद्रेणचअत्रश्रीकृष्णसन्निधौयाहिइतिप्रकारेणभ यनिवारणव्याजेनसुराणांप्रत्याख्यानंवर्जनंकारयित्वामंथोमन्थनंतेनमुग्धःपयोधिर्यस्मै लक्ष्मीमदात्सवोदुरितंदहत्वित्यन्वयः । परेति । परवंचनायगुप्तस्यआविष्क रणमित्यर्थः ॥—

त्रपागुप्ताविष्करणंयथा॥दृष्ट्याकेशवगोपरागहतयाकिंचिन्नदृ ष्टंमयातेनेहस्खलितास्मिनाथपतितांकिन्नामनालंबसे ॥ एक स्त्वंविषमेषुखिन्नमनसांसर्वाबलानांगतिर्गोप्यैवंगदितःसलेशमवताद्गोष्ठेहरिर्वश्चिरम् ॥ अत्रकृष्णस्यपुरतोविषमेपरिस्ख लनमभिहितवत्यास्तंकामयमानायागोपिकायावचनेविषम पथिस्खलनपतनत्राणसंप्रार्थनरूपेणझटितिप्रतीयमानेनार्थे नगुप्तंविवक्षितमर्थांतरंसलेशंससूचनमित्यनेनाविष्कृतं । एवं नैषधादिषुचेतोनलंकामयतेमदीयमितिदमयंतीवाक्यादिक मप्युदाहरणं । इदंशब्दशक्तिक्रोडीकृतगुप्ताविष्करणम् ॥—

त्रपेति । लज्जयागुप्तस्येत्यर्थः । दृष्ट्येति । गोपेत्वयियोरागआसक्तिस्तद्धतयाऽपहृ तयागवांपरागैर्धूलिभिर्व्याप्तयाच गोपेतिसंबोधनंवा किंचित्समविषमंयुक्तायुक्तं च इहत्वयिभूमौचपत्युर्भावःपतितातांपतनंप्राप्तांच । विषमेषुःपंचशरस्तेनखिन्नमनसां विषमेषुसंकटेषुखिन्नमनसांच अवलानांस्त्रीणांबलरहितानांच सलेशंससूचनं गो ष्ठंगोस्थानम् । चेतोनलमिति । लंकांनअयतेनगच्छतीत्यर्थेनलंकामयतेइच्छतीत्यर्थो गुप्तः तदाविष्करणंच ह्रीणाहृष्टाचेत्यनेनेतिबोध्यम् । शब्दशक्तीतिशब्दश्लेषवशेने त्यर्थः । क्रोडीकृतःसंगृहीतः ॥—

अर्थशक्तिमूलगुप्तार्थाविष्करणंयथा॥गच्छाम्यच्युतदर्शनेनभ वतःकिंतृप्तिरुत्पद्यतेकिंचैवंविजनस्थयोर्हतजनःसंभावयत्य न्यथा॥इत्यामंत्रणभंगिसूचितवृथाऽवस्थानखेदालसामाश्लि ष्यन्पुलकोत्करांचिततनुर्गोपींहरिःपातुवः ॥ अत्रगच्छाम्य च्युतेत्यामंत्रणेनत्वयारंतुंकामेच्छयास्थितंतन्नलब्धमित्यर्थश क्तिलभ्यंवस्तुतृतीयपादेनाविष्कृतम् । सर्वमेतत्कविनिबद्धव

क्तृगुप्ताविष्करणोदाहरणं । कविगुप्ताविष्करणंयथा॥सुभ्रुत्वं कुपितेत्यपास्तमशनंत्यक्ताःकथायोषितांदूरादेवविवर्जिताःसुरभयःस्रग्गंधधूपादयः॥ कोपंरागिणिमुंचमय्यवनतेदृष्टेप्रसीदाधुनासत्यंत्वद्विरहाद्भवंतिदयितेसर्वाममांधादिशः ॥ अत्रतावदीर्ष्यामानकलुषितदयिताप्रसादनव्यापारविधिःप्रतीयते।दृष्टिरोगार्त्तस्यदृष्टिंप्रत्याक्रोशोविवक्षितार्थः सचदृष्टेइत्यस्यपदस्यलुप्तोच्चारणेनसंबुद्धिरूपतामवगमय्याविष्कृतः। कविनिबद्धवक्तृगुप्तंपरवंचनार्थं कविगुप्तंस्वप्रौढिकथनार्थमितिभेदः१५४

गच्छामीति अच्युतमद्विपयेअस्खलितेतिगुप्तार्थः। चिरकालंत्वद्दर्शनेनापिनतृप्तिरित्यर्थे नदर्शनेननतृप्तिरपितुसंभोगेनेत्यर्थोगुप्तः। विजनस्थयोरेकांतगतयोः । हतश्वासौजनः अन्यथारत्यर्थंस्थिताविति संभावयति । तेनद्वयोरकीर्तिर्जातैव वृथैवात्मानंवंचयावइतिगुप्तार्थः । आमंत्रणस्याच्युतेत्यादेर्भंग्यारचनयासूचितोयोवृथावस्थानखेदस्तेनालसां। कविनिबद्धेति। कविनिबद्धेनवक्तागुप्तस्येत्यर्थः। सुभ्रुत्वमितिशोभनभ्रूर्दयिता दृष्टिश्च तयोःसंबोधनं।कोपोरोपोविकारश्च। रागिण्यनुरागिणीति। अवनतेनम्रेइतिच मयीत्यस्यविशेषणं। पक्षेरागिणिरक्तिमशीलेनम्रेइतिदृक्संबोधनं । एवंदृष्टेइत्यपि। उच्चारणेनेति। स्वरविशेषसहकृतोच्चारणेनेत्यर्थः ॥ १५४ ॥ इतिविवृतोक्तिः ॥

युक्तिःपरातिसंधानंक्रियया मर्मगुप्तये ॥ त्वामालिखंतीदृष्ट्वान्यंधनुःपौष्पंकरेलिखत् ॥१५५॥

अत्रपुष्पचापलेखनक्रियया मन्मथोमयालिखितइतिभ्रान्त्युत्पादनेनस्वानुरागरूपमर्मगोपनायपरवंचनंविवक्षितं। यथावा ॥ दंपत्योर्निशिजल्पतोर्गृहशुकेनाकर्णितंयद्वचस्तत्प्रातर्गुरुसन्निधौनिगदतस्तस्यातिमात्रंवधूः। कर्णालंबितपद्मरागशकलंविन्यस्यचंचूपुटे व्रीडार्ताविदधातिदाडिमफलव्याजेनवाग्बंधनं ॥ अत्रशुकवाङ्मुद्रणयातन्मुखेनस्वकीयरहस्यवचनशुश्रूषुजनवंचनंकृतं ।व्याजोक्तावाकारगोपनंयुक्तौतदन्यगोपनमितिभेदः। यद्वा व्याजोक्तावुक्त्यागोपनमिहतुक्रियया

गोपनमितिभेदः । एवंचआयांतमालोक्यहरिंप्रतोल्यामिति श्लोकेपियुक्तिरेव ॥ १५५ ॥

युक्तिरिति । स्वसमर्मगोपनायक्रियययायत्परस्यातिसंधानंवंचनंसायुक्तिरलंकारः । सामिति । नायकंप्रतिदूतीवचनं पुष्पस्येदंपौष्पं । दंपसोरिति । तस्यशुकस्यअतिमात्रमसर्थं निगदतइतिसंबंधः । फलशब्दोवीजपरः । गोपनीयविषयभेदस्यविच्छित्तिभेदाप्रयोजकत्वादाह यद्वेति । नन्वेवंसत्यायांतमालोक्येत्यादौव्याजोक्तिरेवेतिप्रागुक्तं विरुध्येतेत्याशंक्याह एवंचेति । यद्वेति पक्षांगीकारेचेत्यर्थः । एवंचपूर्वग्रंथआद्यपक्षाभिप्रायेणेतिभावः ॥ १५५ ॥ इत्यलंकारचंद्रिकायांयुक्तिः ॥

लोकप्रवादानुकृतिर्लोकोक्तिरितिभण्यते ॥ सह स्वकतिचिन्मासान्मीलयित्वाविलोचने॥१५६॥

अत्रलोचनेमीलयित्वेतिलोकवादानुकृतिः । यथावा ॥ मदीयेवरदराजस्तवे । नामैवतेवरदवांछितदातृभावंव्याख्यात्यतो नवहसेवरदानमुद्रां॥विश्वप्रसिद्धतरविप्रकुलप्रसूतेर्यज्ञोपवीत वहनंहिनखल्वपेक्ष्यं॥अत्रोत्तरार्द्धेलोकवादानुकारः ॥ १५६ ॥

लोकेति । अनुकृतिरनुकरणं । सहस्वेति । अर्थाद्विरहंमासानभिव्याप्येसर्थः । नामैवेति । हेवरदतवनामैववांछितदातृत्वमाख्यातिकथयसतस्त्वंवरदानमुद्रामितरदैवतवन्नधारयसि । यतोविश्वप्रसिद्धतरेविप्रकुलेप्रसूतिरुत्पत्तिर्यस्यताहशस्येसर्थः॥१५६॥ इत्यलंकारचंद्रिकायांलोकोक्तिः ॥

छेकोक्तिर्यदिलोकोक्तेःस्यादर्थांतरगर्भिता ॥ भुजंगएवजानीतेभुजंगचरणंसखे ॥ १५७ ॥

केनचित्कस्यचिद्वृत्तांतम्पृष्टस्यसमीपस्थमन्यंनिर्दिश्यायमेव तस्यवृत्तांतंजानातीत्युक्तवतोयमहेःपादानहिरेवजानातीति लोकवादानुकारः । अत्रसचायंचलोकविदितेधनार्जनादिव्यापारेसहचारिणावितिविदितविषयतयालोकोक्त्यनुवादस्यप्रयोजनोस्थितेरहस्येप्यनंगव्यापारेतस्यायंसहचरइतिमर्मोद्घाटनमपितेनगर्भीकृतं । यथावा॥ मलयमरुतांव्राताया ता विकसितमल्लिकापरिमलभरोभग्नोग्रीष्मस्त्वमुत्सहसेयदि॥ घनघटयतंत्वान्निःस्नेहंयएवनिवर्ततेप्रभवतिगवांकिन्नश्छिन्नंस

एवधनंजयः ॥ अत्रधनलिप्सयाप्रोषितांगनासखीवचनेयएव गवान्निवर्तनेप्रभवतिसएवधनंजयइत्यान्ध्रजातिप्रसिद्धलोक वादानुकारः । अत्रातिसौंदर्यशालिनीमिमामपहायधनलि प्सयाप्रस्थितोरसानभिज्ञत्वाद्गोप्रायएव। तस्यनिवर्तकस्तुध नस्यजेताधनेनाकृष्टस्यतद्विमुखीकरणेनप्रत्याक्षेपकत्वादित्य र्थांतरमपिगर्भितं ॥ १५७ ॥

छेकोक्तिरितिलक्ष्यनिर्देशः । अर्थांतरगर्भिताअर्थांतरव्यंजकता । समीपस्थंच वृत्तांतःपृष्टस्तत्समीपस्थं । सचायंचेति । पृच्छ्यमानवृत्तांतस्तत्समीपस्थश्चेत्यर्थः । ते नलोकोक्त्यनुवादेन मलयेति। व्राताःसमूहाः यातागताः । विकासिनांमल्लिकाकुसुमा नांपरिमलस्यभरोयस्मिन्तादृशोग्रीष्मोभग्नोनष्टः । हेधनंजयद्युसहसेउत्साहवान्भवसि तदार्तंनिःस्नेहंनायकंघटयाऽनयासहसंयोजय गवांनिवर्तनेपरापहृतानांव्यावर्तनेयए वप्रभवतिसएवधनंजयोऽर्जुनइत्यन्वयः। लिप्सयाप्रोपितस्ययांगनातत्सखीवचनइतिसं बंधः । आंध्रस्तैलंगाः । इमांमत्सखीं । गोप्रायोगोतुल्यः ॥ १५७ ॥ इतिछेकोक्तिः ॥

वक्रोक्तिःश्लेषकाकुभ्यामपरार्थप्रकल्पनं ॥ मुं
चमानंदिनंप्राप्तंनेहनंदीहरांतिके ॥ १५८ ॥

अत्रमानंमुंचप्रयातारात्रिरित्याशयेनोक्तायांवाचिनंदिनंप्राप्तं मामुंचेत्यर्थांतरंश्लेषेणपरिकल्पितं । यथावा ॥ अहोकेनेदृशी बुद्धिर्दारुणातवनिर्मिता ॥ त्रिगुणाश्रूयतेबुद्धिर्नतुदारुमयीक्व चित् ॥ इदमविकृतश्लेषोक्तेरुदाहरणं ॥ विकृतश्लेषवक्रोक्तेर्यथा ॥ भवित्रीरंभोरुत्रिदशवदनग्लानिरधुनासतेरामस्थातानयुधिपु रतोलक्ष्मणसखः ॥ इयंयास्यत्युच्चैर्विपदमधुनावानरचमूलंघि ष्ठेदंषष्ठाक्षरपरविलोपात्पठपुनः ॥ सर्वमिदंशब्दश्लेषमूलायाव क्रोक्तेरुदाहरणं ॥ अर्थश्लेषमूलायावक्रोक्तेर्यथा ॥ भिक्षार्थीसक्वया तःसुतनुबलिमखेताण्डवंक्वाद्यभद्रेमन्येवृंदावनान्तेक्वनुसमृग शिशुर्नैवजानेवराहं ॥ बालेकच्चिन्नदृष्टोजरठवृषपतिर्गोपएवा स्यवेत्तालीलासंलापइत्थंजलनिधिहिमवत्कन्ययोस्त्रायतांनः ॥ काक्वायथा ॥ असमालोच्यकोपस्तेनोचितोयमितीरिता ॥

नैवोचितोयमितितंताडयामासमालया ॥ अत्रनैवोचितइ
तिकाकुस्वरविकारेणोचितएवेत्यर्थांतरकल्पनं ॥ १५८ ॥

वक्रोक्तिरिति। काकुर्ध्वनेर्विकारः। अपरार्थस्याभिप्रेतादर्थादर्थांतरस्य। नंदीहर स्यगणविशेषः। दारुणाक्रूरेत्यभिप्रेतंकाष्ठेनेतिकल्पनं विकृतत्वंचकस्यचिद्वर्णस्यावा पोद्वापाभ्यां। भवित्रीति। सीतांप्रतिरावणोक्तिःपादत्रयं चतुर्थस्तंप्रतिसीतायाः। तेतवपतिःसरामोयुधिसंग्रामेपुरतोऽग्रतोनस्थातास्थास्यतीत्यर्थः। अतिशयेनलघुर्लघिष्ठ स्तत्संबोधनम्। इदंपादत्रयं षष्ठाक्षरात्पराणांसप्तमानांत्रिनवीतिवर्णानांविलोपोयत्र तादृशंपुनःपठेत्यर्थः। शब्दश्लेषेति। शब्दस्यपरिवृत्त्यसहत्वादितिभावः। भिक्षेति। जलनिधिश्चहिमवांश्चतत्कन्ययोर्लक्ष्मीपार्वत्योः क्रमेणइत्थंलीलयासंलापोमिथोभाष णंनोस्मान्त्रायतामित्यन्वयः। इत्थंकीदृक्तदाह भिक्षार्थीति। हरमभिप्रेत्यलक्ष्म्या वाक्यं बलेर्दैत्यस्यमखेयज्ञेइतिवामनाभिप्रायंपार्वत्याः। भद्रेशोभनेतांडवंनित्यमयक्व वर्त्ततइतिलक्ष्मीप्रश्नस्योत्तरंवृंदावनस्यांतेमध्येइतिश्रीकृष्णाभिप्रायं। मृगशिशुर्महादेवे नकरेधृतः। परशुमृगवराभीतिहस्तंप्रसन्नमितिध्यानश्रवणात्। इदंलक्ष्म्यावाक्यं नैवे तिपार्वत्याः। मृगःपशौकुरंगेचेतिविश्वः। कच्चिदितिप्रश्ने। जठरोजीर्णः वृषपतिर्वृष श्रेष्ठइतिहरवृषभाभिप्रायंलक्ष्मीवाक्यं गोपोगवांपालकइतिकृष्णाभिप्रायमुत्तरमिति। अत्रभिक्षादिपदानांपरिवृत्तिसहत्वादर्थश्लेषमूलत्वं। असमालोच्येति। अविचारेत्यर्थः मालयापुष्पमालया ॥ १५८ ॥ इत्यलंकारचंद्रिकायांवक्रोक्तिः ॥

स्वभावोक्तिःस्वभावस्यजात्यादिस्थस्यवर्णनं ॥
कुरंगैरुत्तरंगाक्षैःस्तब्धकर्णैरुदीक्ष्यते ॥ १५९ ॥

यथावा॥तौसम्मुखप्रचलितौसविधेगुरूणांमार्गप्रदानरभसस्ख
लितावधानौ ॥ पार्श्वोपसर्पणमुभावपिभिन्नदिक्कंकृत्वामुहु
र्मुहुरुपासरतांसलज्जम् ॥१५९॥

स्वभावोक्तिरितिलक्ष्यनिर्देशः। जात्यादिस्थस्यजात्यादिसंबंधिनः। आदिप देनक्रियादिपरिग्रहः। उत्तरंगाणितरंगायमाणान्यक्षीणियेषांतैः। ताविति। तौ प्रक्रांतौवधूवरौगुरूणांसमीपेअन्योन्याभिमुखंप्रचलितौ परस्परस्यमार्गप्रदानेयोरभसो वेगस्तेनस्खलितंभ्रष्टमवधानंसावधानत्वंययोस्तादृशावुभावपिभिन्नदिक्कंवामदक्षिणरूप दिक्संबंधिपरस्परपार्श्वभागोपसर्पणंमुहुर्मुहुःकृत्वासलज्जंयथास्यात्तथोपसरतां उपसर्प णंचक्रतुरित्यर्थः। पूर्वोदाहरणेकुरंगजातिस्वभाववर्णनमत्रसलज्जक्रियास्वभाववर्ण नमितिभेदः ॥ १२९ ॥ इतिस्वभावोक्तिः ॥

भाविकंभूतभाव्यार्थसाक्षात्कारस्यवर्णनं ॥
अहंविलोकयेऽद्यापियुध्यंतेत्रसुरासुराः १६०
स्थानभीषणत्वोद्भावनपरमिदं ॥ यथावा ॥ अद्यापितिष्ठति
दृशोरिदमुत्तरीयंधर्त्तुंपुरस्तनतटात्पतितंप्रवृत्ते ॥ वाचंनिशम्य
नयनंनयनंममेतिकिंचित्तदायदकरोत्स्मितमायताक्षी १६०

भाविकमितिलक्ष्यनिर्देशः। अद्यापीति। ममनयनंनयनमितितस्यावाचंनिशम्यस्त नतटात्पतितमुत्तरीयंधर्त्तुंपुरःप्रवृत्तेमयिसतितदा आयताक्षीयत्किंचित्स्मितमकरोत्। इदमद्यापिममदृशोः पुरःस्तिष्ठतीत्यन्वयः । अत्रनयनपदेनस्ववाचकत्वरूपशक्यसंबंधेननेत्रपदंलक्ष्यतेतस्माच्चवस्त्रप्रतीतिः । किंवास्ववाचकवाच्यत्वरूपशक्यसंबंधेनवस्त्रमेवलक्षयतीति वचोवाणैरित्यादिवल्लक्षितलक्षणावाबोध्या । नेत्रंपथिगुणेवस्त्रइति विश्वः ॥ १६० ॥ इतिभाविकम् ॥

उदात्तमृद्धेश्चरितंश्लाघ्यंचान्योपलक्षणं ॥ सानौ
यस्याभवद्युद्धंतद्धूर्जटिकिरीटिनोः ॥ १६१ ॥
इदंश्लाघ्यचरितस्यान्यांगत्वेउदाहरणम्। ऋध्युदाहरणंयथा॥
रत्नस्तंभेषुसंक्रांतैःप्रतिबिंबशतैर्वृतः ॥ ज्ञातोलंकेश्वरःकृच्छ्रा
दांजनेयेनतत्त्वतः ॥ १६१ ॥

उदात्तमिति। ऋद्धेःसमृद्धेश्चरितमुदात्तमलंकारः। तथाश्लाघ्यंचरितं। अन्यस्योपलक्षणमंगंचेत्तदपितथा। सानौशिखरेयस्यपर्वतस्य। किरीटीअर्जुनः। कृच्छ्रात्कष्टात्। आंजनेयेनहनूमता ॥ १६१ ॥ इत्यलंकारचंद्रिकायांउदात्तम् ॥

अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम् ॥ त्वयि
दातरिराजेंद्रयाचकाःकल्पशाखिनः ॥ १६२ ॥
इयमौदार्यात्युक्तिः। शौर्यात्युक्तिर्यथा ॥ राजन्सप्ताप्यकूपारा
स्त्वत्प्रतापाग्निशोषिताः॥ पुनस्त्वद्वैरिवनितावाष्पपूरेणपूरि
ताः॥संपदत्युक्तावुदात्तालंकारः । शौर्यात्युक्तावत्युक्त्यलंकार
इतिभेदमाहुः॥ अनयोरनवद्यांगिस्तनयोर्जृंभमाणयोः ॥ अव
काशोनपर्याप्तस्तवबाहुलतांतरे ॥ अल्पंनिर्मितमाकाशमना
लोच्यैववेधसा ॥ इदमेवंविधंभाविभवत्याः स्तनमंडलं॥इति
सदसदुक्तितारतम्येनातिशयात्युक्त्योर्भेदः ॥ १६२ ॥

अत्युक्तिरिति लक्ष्यनिर्देशः । अद्भुतंचतदतथ्यंमिथ्यारूपं।अकूपाराःसमुद्राः । आ
रिति । स्वमतेतुतथ्यत्वातथ्यत्वाभ्यांभेदइतिभावः । अतथ्येअद्भुतस्यविशेषणस्य
त्यंदर्शयति । अनयोरित्यादि । एतत्पद्यंयोगेप्ययोगोऽसंबंधातिशयोक्तिरित्रभा
दाहृतं । असदुक्तितारतम्येनेति । अनयोरित्यत्रासदुक्तिमात्रं । अल्पमिति पद्येल
तासदुक्तिरितितारतम्येनेत्यर्थः । तथाचाद्भुतेतिविशेषणादसंतातथ्यरूपत्वलाभान्ना
शयोक्तावतिव्याप्तिरितिभावः । अतएवानयोरितिपद्यानंतरंदंडिनोक्तं'इतिसंभा
मेवैतद्विशेषाख्यानसंस्कृतं'इति । एवं 'लोकातीतइवात्यर्थमध्यारोप्यविवक्षितः ॥ यो
स्त्वेनातितुष्यंतिविदग्धानेतरेयथा' इत्युक्त्वाअल्पंनिर्मितमित्याद्युदाहृत्यइदमत्युक्तिरि
क्तमितिच ॥ १६२ ॥ इत्यलंकारचंद्रिकायामत्युक्तिः ॥

निरुक्तिर्योगतोनाम्नामन्यार्थत्वप्रकल्पनं ॥ ईदृ
शैश्चरितैर्जानेसत्यंदोषाकरोभवान् ॥ १६३ ॥

यथावा ॥ पुराकवीनांगणनाप्रसंगेकनिष्ठिकाधिष्ठितकालिदासा ॥
अद्यापितत्तुल्यकवेरभावादनामिकासार्थवतीबभूव ॥ १६३ ॥

निरुक्तिरितिलक्ष्यं । योगवशान्नाम्नामर्थविशेषाभिधायिनामर्थांतरोपवर्णनमि
लक्षणं । इदृशैरिति । चंद्रंप्रतिविरहिण्याउक्तिः । इदृशैर्जनसंतापनरूपैःदोषाया
त्रेःकर्त्तादोषाणामाकरश्च । पुरेति । कनिष्ठिकांगुलिविशेषः । अधिष्ठितःकालि
सोयस्यांसाअंगुलिविशेषरूपा । अर्थवतीनविद्यतेकविनामयस्यांसेत्यन्वर्थनामवती
॥ १६३ ॥ इत्यलंकारचंद्रिकायांनिरुक्तिः

प्रतिषेधःप्रसिद्धस्यनिषेधस्यानुकीर्तनम् ॥ नद्यू
तमेतत्कितवक्रीडनंनिशितैःशरैः ॥ १६४ ॥

निर्ज्ञातोनिषेधःस्वतोनुपयुक्तत्वादर्थांतरंगर्भीकरोति । तेन
चारुतान्वितोयंप्रतिषेधनामालंकारः । उदाहरणंयुद्धरंगेप्रत्य
वतिष्ठमानंशाकुनिकंप्रतिविदग्धवचनं । तत्रयुद्धस्याक्षद्यूत
त्वाभावोनिर्ज्ञातएवकीर्त्यमानस्तत्रैवतवप्रागल्भ्यंनयुद्धेव्युत्प
त्तिग्रहोस्तीत्युपहासंगर्भीकरोति । तच्चाकितवेत्यनेनाविष्कृतं।
यथावा ॥ नविषेणनशस्त्रेणनाग्निनानचमृत्युना ॥ अप्रतीका
रपारुष्याःस्त्रीभिरेवस्त्रियःकृताः॥अत्रस्त्रीणांविषादिनिमित्तत्वा
भावःप्रसिद्धएवकीर्त्यमानस्तासांविपाद्यतिशायिक्रौर्यमिति ।

अमुमर्थंव्यक्तीकरोतीतिसचाप्रतीकारपारुष्याइतिप्रतीकारव
द्भ्योविषादिभ्यस्तासांविशेषंदर्शयताविशेषणेनाविष्कृतः १६४

कितवोद्यूतकृत्। 'धूर्तोक्षदेवीकितवइत्यमरः'। ननु प्रसिद्धानुवादस्याचमत्कारित्वा त्कथमलंकारत्वमतआह निर्ज्ञातइत्यादि। शकुनैःपाशकैर्दीव्यतीतिशाकुनिकः। आ विष्कृतमितिध्वनित्वशंकानिवारणं। एवमग्रेपि ॥ १६४ ॥ इतिप्रतिषेधः ॥

सिद्धस्यैवविधानंयत्तदाहुर्विध्यलंकृतिं ॥ पंच
मोदंचनेकालेकोकिलः कोकिलोभवेत् ॥१६५॥

निर्ज्ञातविधानमनुपयुक्तिबाधितंसदर्थान्तरगर्भीकरणेनचारु तरमितितंविधिनामानमलंकारमाहुः। उदाहरणेकोकिलस्य कोकिलत्वविधानमनुपयुक्तंसदतिमधुरपंचमध्वनिशालितया सकलजनहृद्यत्वंगर्भीकरोति। तच्चपंचमोदंचनेइतिकालविशे षणेनाविष्कृतं। यथावा ॥ हेहस्तदक्षिणमृतस्यशिशोर्द्विजस्य जीवातवेविसृजशूद्रमुनौकृपाणं॥ रामस्यगात्रमसिनिर्भरगर्भ खिन्नसीताविवासनपटोःकरुणाकुतस्ते॥अत्ररामस्यस्वहस्तंप्र तिरामस्यगात्रमसीतिवचनमनुपयुक्तंसद्रामस्येत्यनेनस्वस्या त्यंतनिष्करुणत्वंगर्भीकरोति। तच्चनिर्भरेत्यादिविशेषणेना विष्कृतं।यद्यप्यनयोर्विधिनिषेधयोरुदाहरणेषुव्यंग्यान्यर्थांत रसंक्रमितवाच्यरूपाणितथापिनध्वनिभावास्पदानि।स्वोक्त्यै वव्यंग्यविशेषाविष्करणात्। व्यंग्याविष्करणेचालंकारत्वमेवे तिप्राक्प्रस्तुतांकुरप्रकरणेव्यवस्थितत्वात्। पूर्वंवाधितौप्रतिषे धौआक्षेपभेदत्वेनोक्तौ। इहतुप्रसिद्धौविधिप्रतिषेधौतत्प्राति द्वंद्विनावलंकारत्वेनवर्णिताविितिभेदः ॥ १६५ ॥

पंचमस्यस्वरविशेषस्योदंचनमाविष्करणंयत्रताद्दशेकालेकोकिलः कोकिलोमधुरध्व निरभवदित्यर्थः। द्वितीयकोकिलपदस्यानुपयुक्तार्थत्वेनार्थांतरेसंक्रमितत्वात्। सकल जनहृद्यत्वप्रतीतिश्चप्रयोजनं। एवंचशालितयेत्यनंतरंलक्षितयेतिशेषोवोध्यः। पूर्ववत् ध्वनित्वाशंकानिवारणायतच्चेत्याद्युक्तं। हेहस्तेति। शूद्रतपस्याजनिताधर्मवशादपूर्णा युषिद्विजबालकेमृतेतद्वधोद्यतस्यरामस्यस्वहस्तंप्रतीयमुक्तिः। जीवातवेजीवनाय शूद्र

एवंतपश्चरणान्मुनिरिवमुनिस्तस्मिन्कृपाणंखड्गंविसृजनिक्षिप यतोरामस्याकरुणस्य गात्रंशरीरमसि। निर्भरमतिशयेनगर्भखिन्नायाःसीतायाःप्रवासनंनिर्वासनंतत्रपटोर्दक्षस्येत्यर्थः। अत्ररामपदमकरुणत्वरूपार्थांतरसंक्रमितं। तदतिशयोव्यंग्यः। सचात्यंतमित्यनेनोक्तः। ध्वनिभावास्पदानिध्वनिप्रयोजकानिाव्यवस्थितत्वादिति। 'शब्दार्थशक्त्याक्षिप्तोपिव्यंग्योर्थःकविनापुनः॥यत्राविष्क्रियतेस्वोक्त्यासान्यैवालंकृतिर्ध्वनेः' इतिध्वनिकारवचनेननिर्णीतत्वादित्यर्थः। उक्ताविति। 'निषेधाभासमाक्षेपंबुधाःकेचनमन्वते॥ आक्षेपोन्योविधौव्यक्तेनिषेधेचतिरोहिते॥' इत्येताभ्यांनाहंदूतीगच्छगच्छसीत्युदाहरणयोःप्रतिपादितावित्यर्थः। प्रसिद्धत्वाद्बाधितप्रतिद्वंद्वित्वं॥१६५॥इतिविधिः॥

हेतोर्हेतुमतासार्द्धंवर्णनंहेतुरुच्यते॥ असावुदेतिशीतांशुर्मानच्छेदायसुभ्रुवाम्॥ १६६॥

यथावा॥ एषतेविद्रुमच्छायोमरुमार्गइवाधरः॥ कस्यनोतनुतेतन्विपिपासाकुलितंमनः॥ मानेनेच्छतिवारयत्युपशमेक्ष्मामालिखंत्यांह्रियांस्वातंत्र्येपरिवृत्यातिष्ठतिकरौव्याधूयधैर्यंगते॥ तृष्णेत्वामनुबध्नताफलमियत्प्राप्तंजनेनामुनायत्स्पृष्टोनपदासएवचरणौस्प्रष्टुंनसंमन्यते॥ इत्युदाहरणं॥ १६६॥

हेतोरिति। हेतुमताकार्येण। मानच्छेदःकार्यं। एषइति। विद्रुमच्छायःप्रवालकांतिर्विमरुर्निर्जलदेशः गततरुच्छायश्च। मानेइति। मानेनेच्छतिअनिछतिसति एवमुपशमेवारयतिसति। ह्रियांलज्जायांक्ष्मांभूमिमालिखंत्यां। भूम्युल्लेखनस्यतदनुभावत्वात्। स्वातंत्र्येचपरिवृत्यपराङ्मुखीभूयतिष्ठतिसति। धैर्येकरौव्याधूयममनानुमतमितिसूचनायहस्तधूननंकृत्वागतेसतिहेतृष्णेत्वामनुसरतामुनाजनेनैतावत्फलंप्राप्तं यत्पादेनापियोनस्पृष्टःसएवचरणौस्वीयौस्प्रष्टुंनसम्यक्मन्यतेअनुजानातीत्यन्वयः। अत्रतृष्णारूपहेतुतत्कार्ययोःस्पष्टमभिधानं॥ १६६॥

हेतुहेतुमतोरैक्यंहेतुंकेचित्प्रचक्षते॥ लक्ष्मीविलासाविदुषांकटाक्षावेंकटप्रभोः॥ १६७॥

अत्रचकार्यावश्यंभावतच्छैघ्र्यादिप्रत्यायनार्थःकार्यकारणभेदव्यपदेशः। यथावा॥ आयुर्दानमहोत्सवस्यविनतक्षोणीभृताम्मूर्तिमान्विश्वासोनयनोत्सवोमृगदृशांकीर्तेःप्रकाशःपरः॥ आनंदःकलिताकृतिःसुमनसांवीरश्रियोजीवितंधर्मस्यै

षनिकेतनंविजयतेवीरःकलिंगेश्वरः॥अत्रदानमहोत्सवायुष्क रत्वादिनाऽध्यवसितेराज्ञितदायुष्ट्वादिव्यपदेशः ॥ १६७ ॥

भेदांतरमाह । हेतुहेतुमतोरिति । केचिदुद्भटोद्भटप्रभृतयः । तदुक्तम् 'हेतुमतासह हेतोरभिधानमभेदताहेतुः' इति । लक्ष्मीति । कटाक्षाविदुपांलक्ष्मीविलासाइत्यन्वयः । अत्रविलासहेतोर्विलासाभिन्नत्वेनाभिधानम् । एवंविधलक्षणायाःप्रयोजनमाहअत्रेति । कार्यावश्यंभावश्चतच्छैघ्यंचेतिविग्रहः । आदिनाअपथ्याशनंरोगइत्यादौकार्यगतोपादेयत्वानुपादेयत्वादिसंग्रहः । आयुरिति । वीरःकलिंगेश्वरःकलिंगदेशाधिपो विजयतइत्यन्वयः । कीदृशःदानरूपस्यमहोत्सवस्यआयुरिति । कार्याभिन्नत्वेनाभिधानमेवमग्रेपि । विशेषेणनतानांक्षोणीभृतांराज्ञांकलिताकृतिर्धृताकारः । वीरश्रियोवीरलक्ष्म्यानिकेतनंस्थानम् ॥ १६७॥ ॥ इतिश्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सदुपाख्यभट्टविठ्ठलसूरिवरात्मजश्रीरामचंद्रसूरिसूनुनावैद्यनाथेनकृतायामलंकारचन्द्रिकाख्यायांकुवलयानंदटीकायांहेत्वलंकारप्रकरणंसंपूर्णम् ॥ ॥ ॥ ॥

इत्थंशतमलंकारालक्षयित्वानिदर्शिताः ॥ प्राचामाधुनिकानांचमतान्यालोच्यसर्वतः ॥ १६८ ॥ रसभावतदाभासभावशांतिनिबंधनाः ॥ चत्वारोरसवत्प्रेयऊर्जस्विचसमाहितम् ॥ १६९॥ भावस्यचोदयःसंधिःशबलत्वमितित्रयः ॥ अष्टौप्रमाणालंकाराःप्रत्यक्षप्रमुखाःक्रमात् ॥ एवंपंचदशान्यानप्यलंकारान्विदुर्बुधाः ॥ १७० ॥

तत्रविभावानुभावव्यभिचारिभिर्व्यंजितोरतिहासशोकादिश्चित्तवृत्तिविशेषोरसः। सयत्रपरस्यांगंभवतितत्ररसवदलंकारः । विभावानुभावाभ्यामभिव्यंजितोनिर्वेदादिस्त्रयस्त्रिंशद्भेदोदेवतागुरुशिष्यद्विजपुत्रादावभिव्यज्यमानारतिश्चभावः। सयत्रापरस्यांगंसप्रेयोलंकारः ॥—

भावस्येति । निर्वेदादेर्व्यभिचारिभावस्येत्यर्थः । प्रत्यक्षप्रमुखाःप्रत्यक्षाद्याः । तेचप्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुलब्धिसंभवैतिह्याख्याः । विभावेत्यादि । रसादेरालंबनोद्दीपनरूपाणिनायिकाचन्द्रोदयादीनिकारणानिकाव्येवर्ण्यमानानिविभावयंतीतिव्युत्पत्त्याविभावपदेनाभिधीयंते।कार्याणिचकटाक्षरोमांचादीनि। तथाविधान्य

वानुपश्चाद्भवंतीतिव्युत्पत्त्यानुभावपदेन । एषामेवकार्याणांरसादिनोत्पादनेकर्तव्येस हकारिभूतान्युत्कंठादीनिचव्यभिचारिपदेन । विशेषादभितःसमंततोयेस्थायिनंचार यंतीतिव्युत्पत्तेः । एवंरतिरासक्त्यनुरागादिपर्यायवोध्यांतःकरणवृत्तिः । विकृत विटूपिकादिचेष्टादर्शनजन्याचित्तस्यविकासरूपावृत्तिर्हासः । इष्टनाशानिष्टलाभादि जन्याचित्तवृत्तिः । शोकःप्रसिद्धः । आदिपदेनक्रोधोत्साहभयजुगुप्साविस्मयनिर्वे दाख्यानांषण्णांपरिग्रहः । विशेषपदेनचरसादेःस्थायित्वप्रयोजकंपरिपुष्टत्वंकांताविष यत्वमितरानंगत्वंचविवक्षितं। तदुक्तं 'रसादिश्चेन्निरंगःस्याद्देवादिविषयोथवा॥अन्यांग भावभाग्वास्यान्नतदास्थायिशब्दभाक्॥' इतिस्थायिनएवचाभिव्यक्तरसत्वं। यदाहुः 'कारणान्यथकार्याणिसहकारीणियानिच॥रसादेःस्थायिनालोकेतानिचेन्नाट्यकाव्य योः॥विभावाअनुभावास्तत्कथ्यंतेव्यभिचारिणः॥व्यक्तःसतैर्विभावाद्यैःस्थायीभावोर सःस्मृत' इति। अभिव्यक्तानांचरसादीनांरसरूपाणांक्रमाच्छृंगारस्यकरुणरौद्रवीरभया नकबीभत्साद्भुतशांतरूपविशेषसंज्ञावोध्याः। निर्वेदादिरिति। 'निर्वेदग्लानिशंकाख्या स्तथासूयामदश्रमाः॥ आलस्यंचैवदैन्यंचचिंतामोहःस्मृतिर्धृतिः ॥ व्रीडाचपलताहर्ष आवेगोजडतातथा ॥ गर्वोविषादऔत्सुक्यंनिद्राविस्मृतिरेवच ॥ स्वप्नोविवोधो ऽमर्षश्चाप्यवहित्थमथोग्रता ॥ मतिर्व्याधिस्तथोन्मादस्तथामरणमेवच ॥ त्रासश्चैव वितर्कश्चविज्ञेयाव्यभिचारिणः । त्रयस्त्रिंशदमीभावाःसमाख्यातास्तुनामत' इतिभरते नोक्ताः। लज्जादिनाविकारगोपनमवहित्थाख्योभावः। देवतेत्याद्यपरिपुष्टत्वादेरुपल क्षणं। रतिरितिचापुष्टहासादेः॥—

अनौचित्येनप्रवृत्तोरसोभावश्चरसाभासोभावाभासश्चेत्युच्य ते।सयत्रापरस्यांगंतदूर्जस्वितु।भावस्यप्रशाम्यदवस्थाभावशां तिः। तस्याःपरांगत्वेसमाहितं।भावस्योद्गमावस्थाभावोदयः। द्वयोर्विरुद्धयोर्भावयोःपरस्परस्पर्धाभावसंधिः।बहूनांभावानां पूर्वपूर्वोपमर्देनोत्पत्तिर्भावशबलता।एतेषांनितरांगत्वेभावोद यादयस्त्रयोलंकाराः। तत्ररसवदुदाहरणं॥ मुनिर्जयतियोगीं द्रोमहात्माकुंभसंभवः॥येनैकचुलकेदृष्टौदिव्यौतौमत्स्यकच्छ पौ॥अत्रमुनिविषयरतिरूपस्यभावस्याद्भुतरसोंगम् ॥—

अनौचित्येनेति। एतच्चोदाहरणेदर्शयिष्यामः । मुनिरिति। कुंभसंभवोऽगस्त्यः। एकचुलकेनसमुद्रेपीयमानेतदंतर्गतयोरवताररूपयोमत्स्यकूर्मयोर्दर्शनेनगम्योऽद्भुतरसो मुनिप्रभावातिशयपर्यवसन्नतयातद्विषयरतिपोषकत्वात्तदंगमितिभावः॥—

यथावा ॥ अयंसरसनोत्कर्षीपीनस्तनविमर्दनः ॥ नाभ्यूरु जघनस्पर्शीनीवीविस्रंसनःकरः ॥ अत्रकरुणस्यशृंगारोगं । प्रेयोलंकारएवभावालंकारउच्यते । सयथा ॥ कदावाराणस्याममरतटिनीरोधसिवसन्वसानःकौपीनंशिरसिनिदधानोंजलिपुटं ॥ अयेगौरीनाथत्रिपुरहरशंभोत्रिनयनप्रसीदेतिक्रोशन्निमिषमिवनेष्यामिदिवसान्॥ अत्रशांतिरसस्यकदेतिपदसूचितचिंताख्योव्यभिचारिभावोंगं । यथावा ॥ अत्युच्चाःपरितःस्फुरंतिगिरयःस्फारास्तथांभोधयस्तानेतानपिविभ्रतीकिमपिनश्रांतासितुभ्यंनमः ॥ आश्चर्येणमुहुर्मुहुःस्तुतिमितिप्रस्तौमियावद्भुवस्तावद्बिभ्रदिमांस्मृतस्तवभुजोवाचस्ततोमुद्रिताः ॥ अत्रप्रभुविषयरतिभावस्यवसुमतीविषयरतिभावोंगम् ॥—

अयमिति । भूरिश्रवसश्छिन्नंहस्तमालोक्यतद्वधूनामुक्तिः । सपूर्वानुभूतोयंकरोयःकांचीसमाकर्षणशीलः।नीवीवसनग्रंथिस्तस्याविस्रंसनोमोचकइतिस्मर्यमाणयाशृंगारावस्थयाकरुणरसपरिपोषः । कदेति । निमिषमिवदिवसान्कदानेष्यामीत्यन्वयः । कीदृशः । काश्यांगंगातीरेवसन् । अयेइत्यादिरितिक्रोशन्नित्यनेनान्वयः । अत्युच्चाइति । स्फाराविस्तीर्णाः । प्रस्तौमिप्रसंजयामि । भुवःपृथिव्याः । इमांभुवंबिभ्रद्धारयमाणः॥—

ऊर्जस्वियथा॥ त्वत्प्रत्यर्थिवसुंधरेशतरुणीःसंत्रासतःसत्वरंयांतीर्वीरविलुंठितुंसरभसंयाताःकिरातावने॥तिष्ठंतिस्तिमिताःप्ररूढपुलकास्तेविस्मृतोपक्रमास्तासामुत्तरलैःस्तनैरतितरांलोलैरपांगैरपि॥अत्रप्रभुविषयरतिभावस्यशृंगाररसाभासोंगं । यथावा॥ त्वयिलोचनगोचरंगतेसफलंजन्मनृसिंहभूपते॥ अजनिष्टममेतिसादरंयुधिविज्ञापयतिद्विषांगणः ॥ अत्रकवेःप्रभुविषयस्यरतिभावस्यतद्विषयद्विषद्गणरतिरूपोभावाभासोंगं । समाहितंयथा॥पश्यामः किमियंप्रपद्यतइतिस्थैर्यंमयालंबितंकिंमांनालपतीत्ययंखलुशठःकोपस्तयाप्याश्रितः॥इत्यन्योन्यविलक्ष्यदृष्टिचतुरेतस्मिन्नवस्थांतरेसव्याजंहसितंमयाधृतिहरोमुक्तस्तुबाष्पस्तया ॥ अत्रशृंगारस्यकोपशांतिरंगम् ॥—

त्वमत्वर्थीति । हेवीरसंत्रासतोभयाद्वनेसत्वरंगच्छतीस्तवप्रत्यर्थिनःशत्रवोवसुंधरेशा भूपास्तेषांतरुणीर्विलुंठितुंयाताः किराताभिल्लाः तासांतरुणीनामुत्तरलैरतिचपलैःस्त नैरतितरामतिशयेनलोलैश्चंचलैरपांगैर्नेत्रप्रांतैश्चतैस्तिमिताःस्तब्धाप्रोद्गतरोमांचाविस्मृ तध्वपक्रमोलुंठनरूपोयैस्ताहशास्तिष्ठंतीत्यन्वयः । अत्रशृंगाररस्यानुरक्तराजवनिता विषयत्वादनौचित्येनप्रवृत्तिरित्याभासरूपत्वं। त्वयीति। अजनिष्टअभूद्युधिसंग्रामे। तद्वि षयेति। प्रभुविषयाद्विपद्गणस्ययारतिस्तद्रूपइत्यर्थः। अत्रशत्रुविषयकत्वरूपानौचित्येन प्रवर्तितत्वाद्भावस्याभासत्वं। पश्यामइति । नायकस्यस्वमित्रंप्रतिनायिकावृत्तांतोक्तिः। मयितूष्णींभूतेकिमियंप्रपद्यतेकुरुतेतत्पश्याम इत्यभिप्रायेणमयास्थैर्यंमौनरूपमालंबितमं गीकृतं। पश्यामइतिबहुवचनंसखीसमानाभिप्रायं । एवंतयाप्ययंखलुशठोमांकिमिति नालपतिभाषतइतिकोपआश्रितः । इत्यन्योन्यंपरस्परंविलक्ष्यालक्ष्यरहितायाद्दृष्टिस्त त्रचतुरेसव्याजंनिमित्तांतरव्याजसहितम् ॥—

भावोदयोयथा ॥ तदद्यविश्रम्यदयालुरेधिमेदिनंनिनीषामि भवद्विलोकिनी ॥ अदर्शिपादेनविलिख्यपत्रिणातवैवरूपेण समःस्मरत्प्रियः॥ अत्रनलंप्रतिदमयंत्याऔत्सुक्यरूपभावस्ये दयःशृंगाररसस्यांगं । भावसंधिर्यथा ॥ एकाभूत्कुसुमायुधे पुधिरिवप्रव्यक्तपुंखावलीजेतुर्मंगलपालिकेवपुलकैरन्याकपो लस्थली ॥ लोलाक्षींक्षणमात्रभाविविरहक्लेशासहांपश्यतो द्रागाकर्णयतश्चवीरभवतःप्रौढाहवाडंबरं॥ अत्ररमणीप्रेमरणौ त्सुक्ययोःसंधिःप्रभुविषयभावस्यांगम् ॥—

तदिति । एधिभव । निनीषामिनेतुमिच्छामि । यतस्तवैवरूपेणसमःसमत्प्रियोनलःप त्रिणाहंसेनपादेनविलिख्यअदर्शिदर्शितः । एकेति। हेवीरक्षणमात्रेणयुद्धप्रस्थानाद्भा वीयोविरहक्लेशस्तदसहिष्णुंलोलाक्षींदयिताम्पश्यतस्तथाप्रौढसंग्रामाडम्बरमाकर्णयत श्चभवतःएकाकपोलस्थलीद्राकूशीघ्रंपुलकैःकुसुमायुधस्यमदनस्येषुधिस्तरुणीमिवप्रव्य क्तापुंखावलीशरपुंखपंक्तिर्यत्रतथाभूताऽभूत् । अन्याद्वितीयाजेतुर्जयशीलस्यमंगलपा लिकामंगलरूपापालिकायाकुशकाशादिनिर्मिताउभयपार्श्वस्थस्तंभवृक्षादपुवद्धामार्ग पालीतिप्रसिद्धातद्वदभूदित्यर्थः। अत्रप्रेमपदोक्तायारतेरपरिपुष्टत्वाद्भावरूपत्वंबोध्यं॥—

भावशबलंयथा ॥ क्वाकार्यंशशलक्ष्मणःक्वचकुलंभूयोपिदृश्येत सादोषाणांप्रशमायनःश्रुतमहोकोपेपिकांतंमुखं ॥ किंवक्ष्यं

त्यपकल्मषाःकृताधियःस्वप्नेपिसादुर्लभाचेतःस्वास्थ्यमुपैहिकः खलुयुवाधन्योधरंधास्यति ॥ अत्रवितर्कौत्सुक्यमतिस्मरणशंकादैन्यधृतिचिंतानांशबलताविप्रलंभशृंगारस्यांगम् ।प्रमणालंकारेप्रत्यक्षंयथा ॥ क्रांतकांतवदनप्रतिबिंबेभग्नबालसहकारसुगंधौ॥स्वादुनिप्रणदितालिनिशीतेनिर्विवारमधुनींद्रियवर्गः। यथावा ॥ किंतावत्सरसिसरोजमेतदारादाहोस्विन्मुखमवभासतेयुवत्याः॥संशय्यक्षणमितिनिश्चिकायकश्चिद्बिब्बोकैर्बकसहवासिनांपरोक्षैः ॥ पूर्वत्रप्रत्यक्षमात्रमत्रतुविशेषदर्शनजन्यसंशयोत्तरप्रत्यक्षमितिभेदः ॥–

क्वाकार्यमिति । शुक्रकन्यांदेवयानींदृष्टवतोराज्ञोययातेरियमुक्तिः । अकार्यंब्राह्मणकन्याऽऽसक्तिः । शशलांछनस्यचंद्रस्यकुलंसोमवंशः । अयंवितर्कः । तदुपमर्देनभूयोपिसौत्सुक्यम् । एवमग्रेपि । श्रुतंशास्त्रश्रवणमितिमतिः। अहोकोपेपीतिस्मरणं। अपगतकल्मषाःकृतेसुकृतेधर्येपांतेकिंवदिष्यंतीतिशंका । स्वप्नेपीतिदैन्यम् । हेचेतः स्वास्थ्यमुपैहीतिधैर्यम् । कःखलुधन्योयुवातरुणोऽधरंधास्यतिपास्यतीतिचिंता । विप्रलंभोवियोगइतिपर्यायौ । क्रांतेति । इंद्रियाणांवर्गःसमूहः । मधुनिमद्ये । निर्विवारनिवृत्तिंप्राप । कथंभूते संक्रांतिप्रियमुखप्रतिबिंबे । भग्नकोमलाम्रपल्लववत्सुगंधौस्वादुनि । आरवाधिप्रकृष्टनादयुक्तभ्रमरयुतेशीतस्पर्शेचेति । अत्रेंद्रियतृप्त्यातज्जन्यप्रत्यक्षमलंकारः । किमिति । आराद्दूरे । इतिक्षणंसंदिह्यकश्चिद्बकसहवासिनांकमलानांपरोक्षैरदृश्यैर्बिब्बोकैःमानात्प्रियकथालापेबिब्बोकोनादरक्रिया इत्यतलक्षणैर्हावविशेषैर्मुखमितिनिश्चिकायनिर्णीतवान् । इतिप्रत्यक्षम् ॥–

अनुमानंयथा॥यथारंध्रव्योम्नश्चलजलदधूमःस्थगयतिस्फुलिंगानांरूपंदधतिचयथाकीटमणयः॥ यथाविद्युज्ज्वालोल्लसितपरिपिंगाश्चककुभस्तथामन्येलग्नःपथिकतरुखंडेस्मरदवः॥ यथावा ॥ यत्रैतालहरीचलाचलदृशोव्यापारयंतिभ्रुवौयत्तत्रैवपतंतिसंततममीमर्मस्पृशोमार्गणाः ॥तच्चक्रीकृतचापपुंखितशरप्रेंखत्करःक्रोधनोधावत्यग्रतएवशासनधरःसत्यन्तदाऽऽसांस्मरः॥पूर्वेरूपकसंकीर्णमिदमतिशयोक्तिसंकीर्णमितिभेदः॥–

यथेति । यथाशब्दाअनुमानार्थाः । यथाशब्दस्तुनिर्दिष्टस्तुल्ययोगानुमानयोरिति

विम्बकोशात्। तथाचचपलजलदरूपधूमाव्योम्न आकाशस्यरंध्रमवकाशंयस्मात्स्थगयतितस्माच्चकीटमणयःखद्योताःस्फुलिंगानांरूपंदधतिधारयंति । यस्माच्चविद्युद्रूपाभिर्ज्वालाभिरुल्लसिताःप्रकाशीभूताःपरितःपिंगवर्णाश्चककुभोदिशस्तस्मात्पथिकरूपाणांतरूणांखंडेसमूहेस्मरलक्षणोदवाग्निर्लग्नइतिमन्येइत्यन्वयः।प्रयोगस्तु पथिकतरुखंडंस्मरदावानलवत्व्योमव्यापिजलदधूमवत्वादित्यादिर्बोध्यः । यत्रैताइति ।लहरीवच्चलाचलाश्चंचलादृशोयासांताएताःकामिन्योयत्रजनेभ्रूलतांव्यापारयंतिप्रेरयंतितत्रैवभ्रूसंज्ञाविषयएवयद्यस्मादमीमर्मस्पर्शिनोबाणाःसंततंपतंतितत्तस्मान्मंडलीकृतेचापेपुंखितायोजितमुखायेशरास्तेपुंखत्वन्चपलःकरोयस्यतादृशःक्रोधनःस्मरः शासनमाज्ञातद्धारकआसामग्रतोधावतीतिसत्यमित्यन्वयः । अतिशयोक्तीति । मार्गणत्वेनदृशामध्यवसानादितिभावः।प्रयोगस्तु एताश्चक्रीकृतचापंसदापुरोधावदाज्ञाकरमदनकाः । मर्मभेदिबाणपाताश्रयभ्रूसंज्ञास्थानकत्वादितिबोध्यः ॥–

शुद्धानुमानंयथा॥विलीयमानैर्विहगैर्निमीलद्भिश्चपंकजैः॥ विकसंत्याचमालत्यागतोस्तंज्ञायतेरविः॥ यथावा ॥ सौमित्रेननुसेव्यतांतरुतलंचंडांशुरुज्जृंभतेचंडांशोर्निशिकाकथारघुपतेचंद्रोऽयमुन्मीलति॥ वत्सैतद्विदितंकथंनुभवताधत्तेकुरंगंयतःक्वासिप्रेयसिहाकुरंगनयनेचंद्राननेजानकि ॥–

एवंनिलीयमानैरित्यत्रापि । अयंकालःसूर्यास्तमयवान् पक्षिनिलीयमानताद्याश्रयत्वादिति। रविरस्तगमनवान् तादृशकालसंबंधित्वादितिवाप्रयोगोज्ञेयः। सौमित्रेइति। विरहातुरस्यरामस्यलक्ष्मणंप्रत्युक्तिः । अत्राप्ययंचंद्रःकुरंगधारित्वादितिप्रयोगः। इत्यनुमानम् ॥–

उपमानंयथा ॥ तांरोहिणींविजानीहिज्योतिषामत्रमंडले ॥ यस्तन्वितारकान्यासःशकटाकारमाश्रितः ॥ अत्रमन्मथमिवातिसुंदरंदानवारिमिवादिव्यतेजसं ॥ शैलराजमिवधैर्यशालिनंवद्मिवेंकटपतिंमहीपतिं ॥ पूर्वोदाहरणेउपमानभूतमतिदेशवाक्यंदर्शितं ॥ अत्रातिदेशवाक्यार्थसादृश्यप्रत्यक्षरूपमुपमानंफलेनसहदर्शितमितिविशेषः ॥–

तामिति । तारकाणांन्यासःसंनिवेशःशकटस्याकारंसंस्थानमाश्रितस्तांरोहिणींविजानीहीत्यतिदेशवाक्यार्थज्ञानमिहोपमानं । इयंशकटाकारनक्षत्रव्यक्तिः रोहिणीपदवाच्येत्युपमितिप्रतिकरणत्वात् । अत्रेति । अत्रएषुराजसुमध्येमन्मथमिवाति

सुंदरंमहीपतिर्वेंकटपतिसंज्ञंवेद्मीत्याद्यन्वयः । दानवारिर्विष्णुः शैलराजंहरंधैर्यशा लिनंमदनशासकत्वात्।प्रत्यक्षरूपमिति। सादृश्यविशिष्टपिंडप्रत्यक्षस्यापिफलायोगव्य वच्छिन्नत्वेनकरणत्वादितिभावः । फलेन उपमितिरूपेण । इत्युपमानं ॥–

शब्दप्रमाणंयथा ॥ विवृण्वतादोषमपिच्युतात्मनात्वयैक मीशंप्रतिसाधुभाषितं ॥ यमामनंत्यात्मभुवोपिकारणंकथं सलक्ष्यप्रभवोभविष्यति ॥ अत्राशिवःपरमेष्ठिनोपिकारणमि त्यत्रश्रुतिरूपंशब्दप्रमाणमुपन्यस्तं॥एवंस्मृतिपुराणागमलौ किकवाक्यरूपाण्यपिशब्दप्रमाणात्युदाहरणीयानि ॥ तत्रस्मृ तिर्यथा ॥बलात्कुरुतपापानिसंतुतान्यकृतानिवः ॥सर्वान्बल कृतानर्थानकृतान्मनुरब्रवीत् ॥ पूर्वंश्रुतिरभिमतार्थेप्रमाणत्वे नोपन्यस्ता । इहतुस्मृतिरनभिमतार्थेतद्दूषणपरेणप्रमाणत यानीतेतिभेदः । आचारात्मतुष्ट्योरपिमीमांसकोक्तधर्मप्रमा णयोर्वेदशब्दानुमापकतयाशब्दप्रमाणएवांतर्भावः ॥–

विवृण्वतेति । कुमारसंभवेबटुवेषंहरंप्रतिपार्वत्याइयमुक्तिः । वरदोषंप्रकाशयतापि स्खलितांतःकरणेनत्वयाईशंमहादेवंप्रतिएकमलक्ष्यजन्मत्वंसाधूक्तं। यतोयमीशमात्मभु वोब्रह्मणोपिकारणमामनंतिवेदाः । सकथंलक्ष्यःप्रभवउत्पत्तिस्थानंयस्यतादृग्भवि ष्यतीत्यन्वयः । विवक्षतेतिक्वचित्पाठोवक्तुमिच्छतेतितदर्थः । बलादिति । नास्तिको क्तिरियं । हेजनाःपापानिबलात्कुरुततानिचपापानिवोयुष्माकमकृतान्येवभवंतु । य तोबलात्कारेणकृतान्सर्वानर्थान्मनुरकृतानब्रवीदित्यन्वयः । तद्दूषणपरेणसर्वाभिमता र्थदूषणपरेण । आत्मनस्तुष्टिःप्रीतिर्वैकल्पिकेविषयेगर्भाष्टमेऽष्टमेवाब्देब्राह्मणस्योपनय नमित्यादौप्रमाणमित्युक्तं ॥–

तत्राचारप्रमाणंयथा ॥ महाजनाचापरंपरेदृशिस्वनामनामा ददतेनसाधवः ॥ अतोभिधातुंनतदुत्सहेपुनर्जनःकिलाचारमु चंविगायति ॥ आत्मतुष्टिप्रमाणंयथा ॥ असंशयंक्षत्रपरिग्रह क्षमायदार्यमस्यामभिलाषिमेमनः ॥ सतांहिसंदेहपदेषुवस्तु षुप्रमाणमंतःकरणस्यवृत्तयः ॥ अत्रदुष्यंतेनात्मतुष्ट्याशकुंत लापरिग्रहस्यधर्म्यत्वंश्रुत्यनुमतमनुमीयते।एवंश्रुतिलिंगादि

कमपिमीमांसोक्तंप्रमाणंसंभवदिहोदाहर्तव्यं।तत्रश्रुतिर्यथा॥ त्वंहिनाम्नैववरदोनाधत्सेवरमुद्रिकां॥ नहिश्रुतिप्रसिद्धार्थेलिंगमाद्रियतेवुधैः॥ अत्रकरिगिरीश्वरस्यवरदइत्यभिधानश्रुत्यासर्वाभिलषितदातृत्वंसमर्थितं॥—

महाजनेति। दमयंतींप्रतिनलस्योक्तिः। नामवितर्के नाददतेनंगृण्हंति आचारमुचमाचारत्यागिनं विगायतिनिंदति। असंशयमिति। क्षत्रेणक्षत्रियेणपरिग्रहेक्षमायोग्यायतआर्यंश्रेष्ठंममनोयस्यांशकुंतलायामभिलाषशीलं।पदेषुविषयेषु। त्वंहीति।वरमुद्रिकांवरमुद्रांनाधत्सेनधारयसि। श्रुतिर्वरदसंज्ञारूपालिंगंगमकं। पक्षेश्रुत्यातृतीयादिरूपयाप्रकर्षेणशीघ्रंसिद्धेऽर्थेअंगांगीभावेसतिलिंगमर्थप्रकाशनसामर्थ्यरूपमाद्रियते। यथैंद्र्यागार्हपत्यमुपतिष्ठतइतिश्रुत्यागार्हपत्योपस्थानेविनियुक्तस्यमंत्रस्यैंद्रप्रकाशनसामर्थ्यरूपेणलिंगेनेंद्रोपस्थानेविनियोगोनाद्रियतेइत्यर्थः। करिगिरीश्वरःकालहस्तीश्वरः॥—

लिंगंयथा॥विदितंवोयथास्वार्थानमेकाश्चित्प्रवृत्तयः॥ननुमूर्त्तिभिरष्टाभीरित्थंभूतोस्मिसूचितः॥ अत्रशिवस्यश्रुतिप्रसिद्धसर्वोपकारकपृथिव्याद्यष्टमूर्त्तिपरिग्रहलिंगेनतत्प्रवृत्तीनांलोकानुग्रहैकप्रयोजनत्वंसमर्थितं॥लिंगस्यमूलभूतवेदानुमापकतयावैदिकशब्दप्रमाणएवांतर्भावः। एवंलौकिकलिंगानामपिलौकिकशब्दोन्नायकतयालौकिकशब्दप्रमाणएवांतर्भावः। अतः 'लोलभ्रूलतयाविपक्षादिगुपन्यासेविधूतंशिरस्तद्वृत्तांतपरीक्षणेकृतनमस्कारोविलक्ष्यस्थितः॥ ईषत्ताम्रकपोलकांतिनिमुखेदृष्ट्यानतःपादयोरुत्सृष्टोगुरुसंन्निधावपिविधिर्द्वाभ्यांनकालोचितः'इत्यादिचेष्टारूपंप्रमाणांतरंनाशंकनीयम्॥—

विदितमिति। इत्थंभूतःपरार्थैकप्रवृत्तिकः। अतइत्यस्यचेष्टारूपंप्रमाणांतरंनाशंकनीयमित्यग्रेतनेनान्वयः। लोलदिति। गुरूणांसंन्निधावपिद्वाभ्यांनायकाभ्यांसमयोचितोविधिर्नोत्सृष्टः। यथालोलद्भ्रूलतयानायिकयाविपक्षस्यसपत्न्योदिशउपन्यासेत्वत्सकाशादागतोसीतिसूचनेकृतेनायकेननेतिसूचनायशिरोविधूतंसंचालितम्। त

त्तांतपरीक्षणेनायिकयाकृतेसतिकृतनमस्कारोविलक्ष्यवस्थितः। ततईषत्ताविजानीहांतिर्क्षस्यतादृशेनायिकायामुखेकोपातिशयाज्जातेसतितत्पादयोर्दृष्टिपातेनैपदवाच्येत्युपमितिंगे

क्वचिच्छब्दप्रमाणकल्पनयाचमत्कारोयथा॥किमसुभिर्ग्लपितैर्जडमन्यसेमयिनिमज्जतुभीमसुतामनः॥ममकिलश्रुतिमाहतदर्थिकांनलमुखेंदुपरांविबुधःस्मरः॥ अत्रम्रियमाणानांमनश्चंद्रंप्रविशतीत्येतदार्थिकायाः श्रुतेर्नलमुखचंद्रविषयत्वेकल्पितेतथाव्याख्यातृस्मरवाक्यंप्रमाणतयोपन्यस्तं । अर्थापत्तिर्यथा ॥ निर्णेतुंशक्यमस्तीतिमध्यंतवनितंबिनि ॥ अन्यथानोपपद्येतपयोधरभरस्थितिः॥ यथावा॥ व्यक्तंबलीयान्यदिहेतुरागमादपूरयत्साजलधिंनजान्हवी ॥ गंगौघनिर्भर्त्सितशंभुकंधरासुवर्णमर्णःकथमन्यथास्यात् ॥ अनुपलब्धिर्यथा॥ स्फुटमसदवलग्नंतन्विनिश्चिन्वतेतेतदनुपलभमानास्तर्कयंतोपिलोकाः ॥ कुचगिरिवरयुग्मंयद्विनाधारमास्तेतदिहमकरकेतोरिंद्रजालंप्रतीमः ॥–

किमसुभिरिति। व्याख्यातंप्राक्तथेति। नलमुखचंद्रविषयत्वव्याख्यातुःस्मरस्येत्यर्थः । तच्चासिद्धत्वात्कल्पितमितिभावः । इतिशब्दः ॥ निर्णेतुमिति । अस्तीतिनिर्णेतुंशक्यमित्यन्वयः। व्यक्तमिति।हेतुस्तर्कः। यदिव्यक्तंप्रकटंबलीयान्‌तदासाजान्हवीजलधिंनापूरयत् । अन्यथापूरणेसतिअर्णःसमुद्रस्यजलंगंगौघैर्निर्भर्त्सितंतिरस्कृतंसच्छंभुकंठसमानवर्णंनीलंकथंस्यादित्यन्वयः । इत्यर्थापत्तिः ॥ स्फुटमिति । हेतन्वितर्कयंतस्तर्कशीलाअपिलोकास्तदवलग्नमनुपलभमानाअपश्यंतस्तवावलग्नंमध्यमसदितिस्फुटमेवनिश्चिन्वते । कुलपर्वतश्रेष्ठयुग्मत्वेनाध्यवसितंस्तनद्वंद्वमाधारंविनायदास्तेतत्त्विहमकरध्वजस्येंद्रजालंमायाचरितंप्रतीमइत्यन्वयः ॥ इत्यनुपलब्धिः ॥–

संभवोयथा॥ अभूतपूर्वंममभाविकिंवासर्वंसहेमेसहजंहिदुःखं॥ किंतुत्वदग्रेशरणागतानांपराभवोनाथनतेनुरूपः ॥ यथावा ॥ येनामकेचिदिहनःप्रथयंत्यवज्ञान्जानंतितेकिमपितान्प्रतिनैषयत्नः॥उत्पत्स्यतेस्तिममकोपिसमानधर्माकालोह्ययंनिरवधिर्विपुलाचपृथ्वी॥यथावा॥भ्रातःपांथकुतोभवान्नगरतोवार्त्तानवावर्त्ततेबाढंब्रूहियुवापयोदसमयेत्यक्त्वाप्रियांजीवति ॥ सत्यंजीवति
–नीतिकथिन–त्रामयापिश्रुताऽस्तीर्णापृथिवीजनोपिवि

विधःकिंकिंनसंभाव्यते ॥ अत्राद्योदाहरणेअभूतपूर्वंममभाविं किंवेतिसंभवप्रमाणसिद्धार्थोदर्शितः । द्वितीयोदाहरणेसंभवोपपादकंकालानंत्यादिकमपिदर्शितं । तृतीयोदारणेतुसंभवोपिं कंठोक्तइतिभेदः । ऐतिह्यंयथा ॥कल्याणीबतगाथेयंलौकिकीप्रतिभातिमे ॥ एतिजीवंतमानंदोनरंवर्षशतादपि ॥ अत्रलौकिकीगाथेयमित्यनिर्दिष्टप्रवक्तृकप्रवादपारंपर्यरूपतादर्शिता ॥

अभूतेति । ईश्वरंप्रतिभक्तस्योक्तिः । पूर्वमभूतमभूतपूर्वंतादृशंममार्किवाभाविनार्किचित् सर्वंशीतातपादिद्वंद्वंसहे हियतोममसहजमेवदुःखमस्ति किंतुहेनाथतेतवशरणागतानां भक्तानांतदग्रेपराभवोनानुरूपोनोचितइत्यन्वयः । अथवातवनानुरूपइत्यन्वयः । अत्र दुःखादेःसंभवाख्यप्रमाणसिद्धस्यकथनंयेनामेतिभवभूतेरुक्तिः । नामेतिकुत्सने । नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सनइत्यमरः । किमपीतिकाकुर्नकिमपीत्यर्थः । एषकाव्यनिर्माणरूपः । ममकोपिसमानधर्मासदृशोयउत्पत्स्यतेअस्तिवातंप्रतियत्नः । हियस्मान्निरवधिरयंकालःपृथ्वीचविपुलेतिक्रमेणयोज्यं । अत्रकालोह्ययमित्यादिनासोपपत्तिकंसंभवाख्यप्रमाणमुपदर्शितं । भ्रातरिति पथिकंपतिग्रामस्थस्यप्रश्नः । कुतइत्यनंतरमागतइतिशेषः। नगरादित्युत्तरं । वार्तेतिपुनःपूर्वस्यप्रश्नः । बाढमित्युत्तरमंगीकारेअस्तीत्यर्थः। ब्रूहीतिपूर्वस्योक्तिः। युवेत्यादिपांथवचनं। ससंजीवतीतिपुनःपूर्वस्यप्रश्नः। जीवतीत्यादिसर्वंपांथवचनं । इतिसंभवः ॥ अनिर्दिष्टप्रवक्तृकेति। अनिर्दिष्टोविशेषतोनुक्तः प्रवक्तायस्येत्यर्थः । एवंचैतदेवैतिह्यलक्षणमितिदर्शितं । इत्यलंकारचंद्रिकायांप्रमाणालंकारप्रकरणंसंपूर्णं ॥

अथैतेषामलंकाराणांयथासम्भवंक्वचिन्मेलनेलौकिकालंकाराणांमेलनइव चारुत्वातिशयोपलम्भान्नरसिंहन्यायेनपृथगलंकारावस्थितौतन्निर्णयःक्रियतेतत्रतिलतंडुलन्यायेनस्फुटावगम्यभेदालंकारमेलनेसंसृष्टिः। नीरक्षीरन्यायेनास्फुटभेदालंकारमेलनेसंकरः । सचांगांगिभावेनसमप्राधान्येनसंदेहेनएकवाचकानुप्रवेशेनचतुर्विधः। एवंनृसिंहाकाराःपंचालंकाराः॥—

यथासंभवमिति । संसृष्टिसंकराभ्यांद्वयोस्तदधिकानांवेतियथासंभवमित्यर्थः। स्फुटेति । स्फुटमवगम्यमानोभेदोयेषामितिविग्रहः । एकस्मिन्वाचकेऽनुप्रवेशोऽवस्थितिः । एतत्सर्वमुदाहरणेव्यक्तीभविष्यति ॥—

तत्रसंसृष्टिर्यथा॥ कुसुमसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृत शोभया ॥ चलितयाविदधेकलमेखलाकलकलोलकलोलदृ शान्यया॥अत्रशब्दालंकारानुप्रासयमकयोःसंसृष्टिः । लिंप तीवतमोंगानिवर्षतीवांजनंनभः॥असत्पुरुषसेवेवदृष्टिर्निष्फ लतांगता ॥अत्रोत्प्रेक्षयोरुपमायाश्चेत्यर्थालंकाराणांसंसृष्टिः। आनंदमंथरपुरंदरमुक्तमाल्यंमौलौहठेननिहितंमहिषासुरस्य ॥ पादांबुजंभवतुमेविजयायमंजुमंजीरसिंजितमनोहरमांबि कायाः ॥ अत्रशब्दार्थालंकारयोरनुप्रासोपमयोःसंसृष्टिः ॥

कुसुमेति। माघेऋतुवर्णनेपद्यमिदं। अन्ययाकयापिवनितयाचलितयाकलस्वरोमेख लायाःकांच्याःकलकलःकोलाहलोविदधे। किंभूतया कुसुमसौरभलोभेनपरिभ्रमतां भ्रमराणांसंभ्रमेणत्वराविशेषेणसंभृतासमृद्धाशोभायस्यास्तया अलकालोलायस्यांतादृ शीदृग्यस्यास्तथाभूतयेति। आनंदेति। आनंदेनमंथरंयथास्यात्तथापुरंदरेणेंद्रेणमुक्त मर्पितंमाल्यंयत्रतादृशंमहिषासुरस्यमौलौमस्तकेहठेननिहितंमंजुमनोज्ञंमंजीरस्यनूपुरस्य सिंजितंरणितंयत्रतादृशमनोरममम्बिकायाःपादांबुजमंबुजसदृशंचरणंनोऽस्माकंविज यायभवत्वित्यन्वयः। अत्रपादांबुजमित्युपमितसमासएव नतुमयूरव्यंसकादिवत्पादए वांबुजमिति। तथासत्यंबुजप्राधान्येमंजीरासिंजितान्वयायोगादित्युपमैवनरूपकमिति ज्ञेयम्॥ इतिसंसृष्टिः॥

अंगांगिभावसंकरोयथा ॥ तलेष्ववेपंतमहीरुहाणांछायास्तदा मारुतकंपितानां॥शशांकसिंहेनतमोगजानांलूनाकृतीनामिव गात्रखंडाः॥ अत्रशशांकसिंहेनेतितमोगजानामितिचरूपकं। यद्यप्यत्रशशांकएवसिंहस्तमांस्येवगजाइतिमयूरव्यंसकादि समासाश्रयणेनरूपकवच्छशांकःसिंहइवतमांसिगजाइवेत्यु पमितसमासाश्रयणेनोपमापिवक्तुंशक्या। तथापिलूनाकृती नामितिविशेषणानुगुण्याद्रूपकसिद्धिः। तस्याहिविशेषणस्य प्रधानेनसहान्वयेनभाव्यंनतुगुणेन। गुणानांचपरार्थत्वादसंबं धःसमत्वात्स्यादितिन्यायादुपमितसमासाश्रयणेतस्यपूर्वप दार्थप्रधानत्वाच्छशांकस्यतमसांचप्राधान्यंभवेत्। तत्रनवि शेषेणमुख्यार्थान्वयस्वारस्यमस्ति ॥—

तलेष्विति । तदामारुतकंपितानांमहीरुहाणांतलेपुछायाअवेपंतकंपमानाआसन् । त श्रोत्प्रेक्षते । शशांकरूपेणसिंहेनछिन्नाकृतीनांतमोलक्षणगजानांशरीरखंडाइवेति । गुणानांचेतितार्तीयाधिकरणसूत्रं । अस्यार्थः गुणानांगुणभूतानांपदार्थानांपरार्थत्वान्मुख्यप्रधानार्थत्वात्परस्परमसंबंधः । कुतःसमत्वादप्रधानत्वसाम्यादिति । यथा भाष्यकारमतेपावमानेष्टीनामाधानस्यचाहवनीयाद्यर्थत्वात्परस्परंनांगांगीभावसंबंधः । यथावार्तिककारमतेऽग्निसमिंधनार्थानांमंत्रविशेपरूपाणांनिविदांसामीधेनीनांचेतिसंक्षेपः । एतदधिकरणपूर्वपक्षसिद्धांतौप्रकृतानुपयोगान्नदर्शितौ ॥—

स्वरूपनाशरूपोपचरिताकृतिलवनकर्तृत्वकर्मत्वान्वयसंभवेपिमुख्यार्थान्वयस्वारस्यमेवादरणीयं। स्वरूपनाशक्रोडीकरणप्रवृत्तयालक्षणामूलातिशयोक्त्यारूपकसिद्धिः । तच्चरूपकमुत्प्रेक्षायाअंगंतदुत्थापकत्वात् । रूपकाभावेहिछायालूनगात्रखंडाइवावेपंतेत्येतावदुक्तावुपमैवसिद्ध्येत्।वेपनादिसाधर्म्यान्नछायानांसद्यःकृतगात्रखंडतादात्म्यसंभावनारूपोत्प्रेक्षा॥—

स्वरूपनाशेति । स्वरूपनाशरूपमुपचरितंगौणंयदाकृतिलवनमित्यर्थः । नन्वेवमपितमोंशेऽस्यविशेषणस्यान्वयात्कथंरूपकसिद्धिरित्याशंक्याह स्वरूपेति । क्रोडीकारेण निगरणेन।लक्षणामूलेति । साध्यवसानलक्षणामूलेत्यर्थः । तथाचतमोंशेउपचारेणान्वयइतिभावः । नचैवंसत्युपमांगीकारेपिकिंबाधकमितिवाच्यं । तदंगीकारेप्रधानान्वयेप्युपचाराश्रयणापत्तेः। तदपेक्षयाऽप्रधानेतमोंशेतदंगीकारेणरूपकस्यैवौचित्यादिति। नछायानामिति । सिद्ध्येदित्यनुवर्तते। उत्प्रेक्षानसिद्ध्येदित्यन्वयः। इवशब्दस्यसादृश्येप्रसिद्धतरत्वेनासतितात्पर्यग्राहकेसंभावनाबोधकत्वासंभवादितिभावः ॥—

ननुशशांकेनलूनाकृतीनांतमसांगात्रखंडाइवावेपंतेत्येतावदुक्तावपिसिद्ध्यत्युत्प्रेक्षा। तादात्म्यसंभावनोपयुक्तलूनाकृतित्वरूपाधिकविशेषणोपादानात् । सत्यं। तथोक्तावाकृतिलवनादिधर्मरूपकार्यसमारोपनिर्मिताशशांकतमसोर्हंतृहंतव्यचेतनवृत्तांतसमारोपरूपासमासोक्तिरपेक्षणीया। एवमुक्तौरूपकमितिविशेषः । एवमत्रातिशयोक्तिरूपकोत्प्रेक्षाणामंगांगीभावेनसंकरः। समप्राधान्यसंकरोयथा ॥ अवतुनःसवितुस्तुरगावलीसमतिलंघिततुंगपयोधरा॥स्फुरितमध्यगतारुणनाय

कामरकतैकलतेवनभःश्रियः ॥ अत्रपयोधरादिशब्दश्लेषमूलातिशयोक्त्यांगभूतयोत्थाप्यमानैवसवितृतुरगावल्यांमरकतैकावलीतादात्म्योत्प्रेक्षानभोलक्ष्म्यांनायिकाव्यवहारसमारोपरूपसमासोक्तिगर्भैवोत्थाप्यते। पयोधरश्लेषस्योभयोपकारकत्वात्।ततउत्प्रेक्षासमासोक्त्योरेकःकालःपरस्परापेक्षयाचारुत्वसुन्मेषश्चोभयोस्तुल्यइतिविनिगमनाविरहात्समप्राधान्यं॥—

रूपकंविनाप्युत्प्रेक्षायांतात्पर्यग्राहकमस्तीतिशंकतेनन्विति । एवमुक्तौतमोगजानामित्युक्तौ तथाचसाधकांतरस्यसाधकांतराद्रूपकत्वाद्रूपकस्योत्प्रेक्षांगत्वमविकृतमितिभावः।अवत्विति।सवितुःसूर्यस्यतुरगावलीअश्वपंक्तिर्नोऽस्मानवतु।केव नभःश्रियोगगनलक्ष्म्याःमरकतमणीनामेकलताएकावलीवेत्युत्प्रेक्षा। सूर्यतुरंगाणांहरितवर्णत्वात्। कथंभूतासम्यगतिलंघितास्तुंगाउच्चाःपयोधरामेघायया एकावलीपक्षेपयोधरौस्तनौ । तथा स्फुरितोदीप्तिमान् । मध्यगतोऽरुणरूपोनायकोनेतासारथिर्यस्याःसा पक्षेअरुणआरक्तोनायकोहारमध्यमणिः । नायकोनेतरिश्रेष्ठेहारमध्यमणावपीतिविश्वः । अतिशयोक्त्यामेघानांस्तनत्वेनाध्यवसानरूपया । गर्भैवेसनेनतिलतंडुलन्यायेनस्फुटावगम्यमानभेदायाःसंसृष्टेःसंकाशाद्वैलक्षण्यंदर्शितम् । एवमत्रेति । एकस्यचमत्कृतिजननेपरापेक्षत्वादंगांगीभावमाशंक्याह परस्परेति ॥—

यथावा ॥ अंगुलीभिरिवकेशसंचयंसन्निरुध्यतिमिरंमरीचिभिः॥कुड्मलीकृतसरोजलोचनंचुंबतीवरजनीमुखंशशी ॥अत्रांगुलीभिरितिवाक्योक्तोपमयातत्प्रायपाठान्मुख्यकुड्मलीकरणलिंगानुगुण्याच्चोपमितसमासाश्रयणेनलब्धयासरोजलोचनमितिसमासोक्तोपमयांगभूतयोत्थाप्यमानैवशशिकर्तृकनिशामुखचुंबनोत्प्रेक्षानिशाशशिनोर्दांपत्यव्यवहारसमारोपरूपसमासोक्तिगर्भैवोत्थाप्यते । उपमयोरुभयत्रोत्थापकत्वाविशेषात्समासोक्तिगर्भतांविनाचुंबनोत्प्रेक्षायानिरालंबनत्वाच्च।ततश्चात्राप्युत्प्रेक्षासमासोक्त्योरेककालयोःसमप्राधान्यं।यद्यप्यत्रोपमाभ्यांशशिनिशागतावेवधर्मौसमर्थ्यतेनतुशशिनायकयोर्निशानायिकयोश्चसाधारणधर्मौ। साधारणधर्मसमर्पणंचोत्प्रेक्षासमासोक्त्योरपेक्षितं। उत्प्रेक्षायाःप्रकृ

ताप्रकृतसाधारणगुणक्रियानिमित्तसापेक्षत्वात्समासोक्तेर्विशे पणसाम्यमूलकत्वाच्च। तथापिवाक्योक्तोपमायामिवकारस्य मरीचिभिरिवेत्यन्वयान्तरमभ्युपगम्यान्वयभेदलब्धप्रकृताप्र तयोरेकैकविषयस्यार्थद्वयस्यसमासोक्तोपमायांसरोजसदृशं लोचनमितिसमासांतरमभ्युपगम्यसमासभेदलब्धार्थद्वयस्य चाभेदाध्यवसायेनसाधारण्यंसंपाद्यतयोरुत्प्रेक्षासमासोक्त्यो रंगतानिर्वाह्या ॥–

अंगुलीभिरिति । शशीअंगुलीभिरिवमरीचिभिःकेशसंचयमिवतिमिरंसंनिगृह्यकु. ड्मलीकृतसरोजलोचनंलोचनमिवसरोजंयत्रतादृशंरजनीमुखंचुंवतीवेत्यन्वयः । तत्मा येति। उपमाबहुलेसंदर्भेपाठादित्यर्थः। मुख्येति। मुख्यार्थेरूपंयत्कुड्मलीकरणरूपंलिंगं पुष्पासाधारणधर्मस्तस्यानुकूल्यादित्यर्थः। उत्थापकत्वाविशेषत्वादंगत्वाविशेषात्। चंद्र स्यचुंवनोत्प्रेक्षायांदांपत्यव्यवहारसमारोपात्मकसमासोक्तौचापेक्षितस्यनायकसाधर्म्य स्योक्तोपमाभ्याममपर्णात्कथंतयोस्तदंगत्वमितिशंकते यद्यपीति। मरीचिभिरिवेति। मरीचिभिरिवांगुलीभिस्तिमिरमिवकेशसंचयमित्येवंरूपमित्यर्थः। एकैकविषयस्यार्थ द्वयस्याभेदाध्यवसानेनेत्यन्यः। तयोर्वाक्यसमासोक्तोपमयोः ॥–

यद्वा इहप्रकृतकोटिगतानांमरीचितिमिरसरोजानामप्रकृत कोटिगतानांचांगुलीकेशसंचयलोचनानांचतनुदीर्घावरणत्व नीलनीरंध्रत्वकांतिमत्त्वादिनासदृशानांप्रातिस्विकरूपेणभेद वदनुगतसादृश्यप्रयोजकरूपेणाभेदोप्यस्तिसचात्रविवक्षित एवभेदाभेदोभयप्रधानोपमेत्यालंकारिकसिद्धांतात् । तत्र चप्रयोजकांशनिष्कर्षन्यायेनाभेदगर्भतांशोपजीवनेनसाधार ण्येसंपाद्यप्रधानभूतोत्प्रेक्षासमासोक्त्यंगतानिर्वाह्या ॥–

आवश्यकाभेदाध्यवसायेनोपपत्तौकृतमन्वयांतरसमासांतरकल्पनागौरवेणेत्याशयेनाह यद्वेति । तनुदीर्घत्वादौपूर्वनिपातनियमानुरोधेनयथासंख्यक्रमपरित्यागः । तथाचां गुलिमरीच्योस्तनुत्वनीरंध्रत्वाभ्यांतिमिरकेशसंचययोरावरणरूपत्वनीलत्वाभ्यांसरोज लोचनयोर्दीर्घत्वकांतिमत्त्वाभ्यांचसादृश्यंवोध्यं।प्रातिस्विकरूपेणअंगुलित्वमरीचित्वा दिना।अनुगतेति। अनुगतंयत्सादृश्यप्रयोजकंरूपंतनुत्वादिकंतेनेत्यर्थः। एतच्चसादृश्यव्य तिरिक्तमित्यभिप्रायेण। सिद्धांतादिति। तदुक्तंसाधर्म्यंत्रिविधंभेदप्रधानमभेदप्रधानंभे

दाभेदप्रधानंचेत्युपक्रम्यविधानार्थेनउपमानन्वयोपमेयोपमास्मरणानांभेदाभेदसाधारणसाधर्म्यमूलत्वमिति ॥–

नहिप्रकाशशीतापनयनशक्तिमतःसौरतेजसः शीतापनयनशक्तिमात्रेणशीतालूपयोगितानदृष्टा। एवमनभ्युपगमेच 'पांड्यायमंसार्पितलंबहारःक्लृप्तांगरागोहरिचंदनेन॥ आ भातिबालातपरक्तसानुःसनिर्झरोद्गारइवाद्रिराजः' इत्याद्युपमापिन निर्वहेत्। नह्यत्राद्रिराजपांड्ययोरुपमानोपमेययोरनुगतःसाधारणधर्मोनिर्दिष्टः। एकत्रबालातपनिर्झरावन्यत्रहरिचंदनहाराविवितिधर्मभेदात्।तस्मात्तत्रातपहरिचंदनयोर्निर्झरहारयोश्चसदृशयोरभेदांशोपजीवनमेवगतिः। 'पिनष्टीवतरंगाग्रैःसमुद्रःफेनचंदनं॥तदादायकरैरिंदुर्लिंपतीवदिगंगनाः'इत्यत्रोत्प्रेक्षयोःकालभेदेपिसमप्राधान्यं । अन्योन्यनिरपेक्षवाक्यद्वयोपात्तत्वात्। तदादायेतिफेनचंदनरूपकमात्रोपजीवनेनपूर्वोत्प्रेक्षा नपेक्षणात् । नचैवंलिंपतीवतमोंगानीतिवदुत्प्रेक्षाद्वयस्य संसृष्टिरेवेयमितिवाच्यं । लौकिकसिद्धपेपणलेपनपौर्वापर्यछायानुकारिणोत्प्रेक्षाद्वयपौर्वापर्येणचारुतातिशयसमुन्मेपतः संसृष्टिवैषम्यात्। तस्माद्दर्शादिवदेकफलसाधनतयासमप्रधानमिदमुत्प्रेक्षाद्वयं । एवंसमप्रधानसंकरोपिव्याख्यातः ॥–

ननुभेदाभेदरूपांशद्वयोपेतायाउपमायाभेदांशस्यानुपयोगात्कथंतस्याउत्प्रेक्षानुपयोगित्वमित्याशंक्यपरिहरति । नहीति। प्रकाशश्चशीतापनयनंचेतिद्वंद्वः। शीतालुःशीतार्तः शीतोष्णतृप्रेभ्यस्तदसहनइतिवालुः। उक्तसिद्धांतस्यनिर्युक्तिकत्वेनाश्रद्धेयत्वमाशंकमानंप्रत्याह एवमिति। पांड्योयमिति। पांड्यनामाऽयंनृपोऽद्रिराजइवाभाति।कथंभूतः अंसयोरर्पितोलंबोहारोयेनसः। तथाहरिचंदनेनरक्तचंदनेनक्लृप्तः। कृतोंगरागोनुलेपनं येनतथाभूतः। अद्रिराजःकीदृक् बालातपेनरक्तानिसानूनिप्रस्थानियस्यसः। तथानिर्झरस्योद्गारेणोद्गमेनसहितः। पिनष्टीति।व्याख्यातंप्राक्। पौर्वापर्येणेति। तथाचचमत्कारप्रयोजकपौर्वापर्यघटकत्वेनभेदानवभामात्संसृष्टिवैलक्षण्यमितिभावः। दर्शादिवद्दर्शपौर्णमासादिवत्।अयंचभिन्नकालीनयोरपिसमप्राधान्येदृष्टांतः। फलंतत्रस्वर्गः।प्रकृतेतु चमत्कृतिविशेषः ॥–

संदेहसंकरोयथा ॥ शशिनमुपगतेयंकौमुदीमेघमुक्तंजलनिधिमनुरूपंजन्हुकन्यावतीर्णा॥इतिसमगुणयोगप्रीतयस्तत्रपौराः श्रवणकटुनृपाणामेकवाक्यंविवव्रुः ॥ अत्रइयमितिसर्वनाम्ना यद्यजंवृतवतींदुमतीविशिष्टरूपेणनिर्दिश्यतेतदाबिंबप्रतिबिंबभावापन्नधर्मविशिष्टयोःसदृशयोरैक्यारोपरूपानिदर्शना।यदितेनसास्वरूपेणैवनिर्दिश्यतेबिंबभूतोधर्मस्तुपूर्वप्रस्तावात्समगुणयोगप्रीतयइतिपौरविशेषणाच्चावगम्यतेतत्रप्रस्तुतेधर्मिणितद्वृत्तांतप्रतिबिंबभूताप्रस्तुतवृत्तांतारोपरूपंललितमित्यनध्यवसायात्संदेहः । विलीयेंदुःसाक्षादमृतरसवापीयदिभवेत्कलंकस्तत्रत्योयदिचविकचेंदीवरवनं ॥ततःस्नानक्रीडाजनितजडभावैरवयवैःकदाचिन्मुंचेयंमदनशिखिपीडापरिभवं॥ अत्रयद्येतावत्साधनंसंपद्येततदातापःशाम्यतीत्यर्थैकाविसरंभश्चेत्तदैतदुपात्तसिद्ध्यर्थमूहइतिसंभावनालंकारः।एतावत्साधनं कदापिनसंभवत्येवातस्तापशांतिरपिगगनकुसुमकल्पेत्यर्थैकविसंरंभश्चेदुपात्तमिथ्यात्वसिद्ध्यर्थमिथ्यार्थांतरकल्पनारूपा मिथ्याध्यवसितिरित्युभयतासंभवात्संदेहः। एवम् 'सिक्तंस्फटिककुंभांतःस्थितिश्वेतीकृतैर्जलैः ॥ मौक्तिकंचेल्लतांसूतेतत्पुष्पैस्तेसमंयशः' इत्यादिष्वपिसंभावनामिथ्याध्यवसितिसंदेहसंकरोद्रष्टव्यः ॥—

शशिनमिति । अत्रअजस्येंदुमत्यास्वयंवरेसमगुणयोरजेंदुमत्योर्योगेनप्रीतियेषांतेपौरानागरिकान्नृपाणामन्येषांश्रवणयोःकटुपीडाकरमितिपूर्वार्द्धरूपमेकमेववाक्यंविवव्रुरुच्चारयामासुरित्यन्वयः । तेनसर्वनाम्ना साइंदुमती बिंबभूतोधर्मः अजकर्मकंवरणं तत्रतस्मिन्पक्षे। विलीयेति।अग्निसंयोगेनघृतादिवत्केनापिहेतुनाविलीनतांप्राप्येत्यर्थः। विकचंविकासितं । जडभावःशैत्यं । मदनएवशिखीवन्हिः। संरंभस्तात्पर्यं । सिक्तमिति । स्फटिककुंभांतस्थिताश्वेतीकृतैर्जलैःसिक्तंमौक्तिकमित्यन्वयः ॥—

मुखेनगरलंमुंचन्मूलेवसतिचेत्फणी ॥फलसंदोहगुरुणातरुणा किंप्रयोजनं॥अत्रमहोरगवृत्तांतेवर्ण्यमानेराजद्वाररूढखलवृत्तां

तोपिप्रतीयते । तत्रकिंवस्तुतस्तथाभूतोरगवृत्तांतएव प्रस्तुतेऽ प्रस्तुतःखलवृत्तांतस्ततःप्रतीयतइतिसमासोक्तिः । यद्वा प्रस्तुतखलवृत्तांतप्रत्यायनायाप्रस्तुतमहोरगवृत्तांतकीर्त्तनमप्रस्तुतप्रशंसा । यद्वा वर्ण्यमानमहोरगवृत्तांतकीर्तनेनसमीपस्थितखलमर्मोद्घाटनंक्रियतइतिउभयस्यापिप्रस्तुतत्वात्प्रस्तुतांकुर इतिसंदेहः ॥ एकवाचकानुप्रवेशसंकरस्तुशब्दार्थालंकारयोरेवेतिलक्षयित्वाकाव्यप्रकाशकारउदाजहार । स्पष्टोच्छ्वसत्किरणकेसरसूर्यबिंबविस्तीर्णकर्णिकमथोदिवसारविंदं ॥ श्लिष्टाष्टदिग्दलकलापमुखावतारबद्धांधकारमधुपावलिसंचुकोच ॥ अत्रैकपदानुप्रविष्टौरूपकानुप्रासौयत्रैकस्मिन्श्लोकेपदभेदेनशब्दार्थालंकारयोःस्थितिस्तत्रतयोःसंसृष्टिरिहतुसंकरइति । अलंकारसर्वस्वकारस्तु एकस्मिन्वाचकेऽनुप्रवेशोवाच्ययोरेवालंकारयोःस्वारसिकोवाच्यप्रतियोगिकत्वाद्वाचकस्येतिमत्वाऽर्थालंकारयोरप्येकवाचकानुप्रवेशसंकरमुदाजहार ॥–

मुखेनेति । संदोहःसमूहः । लक्षयित्वेति । स्फुटमेकत्रविषयेशब्दार्थालंकृतिद्वयमितिसूत्रेणेत्यर्थः । स्पष्टेति । अथोऽनंतरं दिवसरूपमरविंदंकमलंसंचुकोचसंकोचमगमत् । कीदृक् स्पष्टमुच्छ्वसंतउल्लसंतःकिरणाएवकेसराणियस्यास्तथाभूतासूर्यविंबरूपा विस्तीर्णाकर्णिकावराटोयस्यतत् । श्लिष्टाः प्रकाशाभावेनपरस्परंमिलिताः अष्टदिशएव दलानांकलापस्तन्मुखेनावतारोयस्यास्तादृशीबद्धाअंधकाररूपामधुपावलिर्येन तथाभूतमित्यर्थः । पदभेदेनेति । "सोणत्थिएत्थगामेजोएअंमहमहंतलाअण्णं ॥ तरुणाणंहिअअलूडिंपरिसप्पंतिंणिवारेइ" सनास्त्यत्रग्रामेयएतांस्फुरल्लावण्यान्तरुणानांहृदयलुंठनंपरिसर्पंतिनिवारयतीतिसंस्कृतं अत्रपूर्वार्द्धेऽनुप्रासस्तृतीयपादेरूपकमिततयोःसंसृष्टिः। वाच्यप्रतियोगिकत्वादिति । वाच्यंप्रतियोगिप्रतिसंवंधियस्यतद्वाच्यप्रतियोगिकंतत्त्वादित्यर्थः । एवंचकाव्यावाच्यस्यानुप्रासादेःशब्दालंकारस्यतदनुप्रवेशोनवाचकानुप्रवेशइतिवक्तुंयुक्तमितिभावः ॥–

सत्पुष्करद्योतितरंगशोभिन्यमंदमारब्धमृदंगवाद्ये ॥ उद्यान वापीपयसीवयस्यामेणीदृशोनाट्यगृहेरमंते ॥ अत्रनाट्यगृह वापीपयसोःसत्पुष्करेत्यादिविशेषणंशब्दसाम्यंश्लेषः । अमं दमारब्धेत्यादिविशेषणेऽर्थसाम्यमुपमातदुभयमेकस्मिन्निव शब्देनुप्रविष्टमितितदपिनमन्यामहे । सत्पुष्करेत्यादिविशेष णेपिश्लेषभित्तिकाभेदाध्यवसायरूपातिशयोक्तिलभ्यस्यधर्म साम्यस्यैवतत्रेवशब्दप्रतिपाद्यतयाशब्दसाम्यस्यतदप्रतिपाद्य त्वात् । श्लेषभित्तिकाभेदाध्यवसोयनर्धमसाम्यमतानंगीका रे । अहोरागवतीसंध्याजहातिस्वयमंबरमित्यादिश्लिष्टविशे षणसमासोक्त्युदाहरणेविशेषणसाम्याभावेनसमासोक्त्यभा वप्रसंगात् । शब्दसाम्यस्येवशब्दप्रतिपाद्यत्वेपितस्योपमावा चकत्वस्यैवप्राप्त्याश्लेषवाचकत्वाभावाच्च । शब्दतोऽर्थतोवा कविसंमतसाम्यप्रतिपादनेसर्वविधेष्युपमालंकारस्वीकारात्। अन्यथा"यथाप्रल्हादनाच्चंद्रःप्रतापात्तपनोयथा॥तथैवसोभूद न्वर्थोराजाप्रकृतिरंजनात्" इत्यत्राप्युपमानस्यात् । नह्यत्रा न्वर्थनामरूपशब्दसाम्यंविनाकिंचिदर्थसाम्यंकविविवक्षितम स्ति । तस्माद्यत्रैकस्मिन्नर्थैप्रतिपाद्यमानेअलंकारद्वयप्रतीति स्तत्रतयोरलंकारयोरेकवाचकानुप्रवेशः ॥–

सत्पुष्करेति । यस्यांनगर्यामेणीदृशउद्यानसंबंधिवापीपयसीवनाट्यगृहेरमंतेक्रीडं ति। कीदृशैःसमीचीनैःपुष्करैःकमलैर्द्योतिनोयेतरंगास्तच्छोभावति। गृहपक्षेसमीचीनैः पुष्करैर्वाद्यभांडमुखैर्द्योतितोयोरंगोनृत्यभूमिस्तच्छोभिनीसर्थः।पुष्करंकरिहस्ताग्रेवाद्य भांडमुखेजले।व्योम्निखड्गफलेपद्मइसमरः। श्लेषभित्तिकेति। श्लेषोभित्तिरिवभित्ति र्मूलंयस्येसर्थः । रागवतीति । रागोऽनुरागोरक्तिमाच । अंबरमाकाशंवस्त्रंच । नन्व त्रविशेषणसाम्यायाभेदाध्यवसायापेक्षणेपिसत्पुष्करेसादौशब्दसाम्यमात्रेणाप्युपमोप

पत्तेर्नतदपेक्षेत्यतआह शब्देति ।शब्दतोऽर्थतोवेति ।शब्दप्रयुक्तमर्थप्रयुक्तंवापत्कविसंमतंसाम्यंतत्प्रतिपादनइत्यर्थः । सर्वविधेसर्वप्रकारे । यथेति । चदिआल्हादनइतिधात्वनुसाराच्चंद्रपदमन्वर्थं । अन्वर्थोऽन्वर्थनामा । तस्मान्मतद्वयस्याप्ययुक्तत्वात् ॥—

यथा ॥ विधुकरपरिरंभादात्तनिष्यंदपूर्णैःशशिदृषदुपक्लृप्तैरालवालैस्तरूणां ॥ विफलितजलसेकप्रक्रियागौरवेणव्यरचिसहृतचित्तस्तत्रभैमीवनेन ॥ अत्रहिप्रतिपाद्यमानोर्थसंमृद्धिमद्वस्तुवर्णनमुदात्तमितिलक्षणानुसाराडुदात्तालंकाररूपःअसंबंधेसंबंधकथनमतिशयोक्तिरितिलक्षणादतिशयोक्तिश्च । नच सर्वत्रोदात्तस्यासंबंधेसंबंधवचनरूपत्वंनिर्णीतामितिनाविविक्तालंकारद्वयलक्षणसमावेशोस्तीतिवाच्यं । दिव्यलोकगतसंपत्समृद्धिवर्णनादिष्वतिशयास्पृष्टस्योदात्तस्यशौर्यौदार्यदारिद्र्यादिविषयवर्णनेषूदात्तास्पृष्टायाअतिशयोक्तेश्चपरस्परविविक्ततयाविश्रांतेः । तयोश्चेहार्थवशसंपन्नसमावेशयोर्नांगांगीभावः । एकेनापरस्यानुत्थापनात्स्वातंत्र्यपारतंत्र्यविशेषादर्शनाच्च । नापिसमप्रधान्यं । यैःशब्दैरिहसंबंधिवस्तुप्रतिपाद्यतेतैरेवतस्यैववस्तुनोसंबंधेसंबंधरूपस्यप्रतिपाद्यमानतयाभिन्नप्रातिपादकशब्दव्यवस्थितार्थभेदाभावान्नापिसंदेहसंकरः । एकालंकारकोट्यांतदन्यालंकारकोटिप्रतिक्षेपाभावात् । तस्मादिहोदात्तातिशयोक्त्योरेकवाचकानुप्रवेशलक्षणःसंकरः । क्वचित्संकराणामपिसंकरोदृश्यते ॥—

विधुकरेति । सहंसस्तत्रभैमीवनेनदमयंत्याउद्यानेनहृतचित्तोव्यरचिकृत । कथंभूतेन । चंद्रकिरणाश्लेषादात्तैरंगीकृतैर्निष्यंदैःपूर्णैश्चंद्रकांतघटितैस्तरूणामालवालैर्विफलीकृतजलसेकप्रकाररूपगौरवेणेत्यर्थः। शब्दव्यवस्थितेति । शब्दप्रयुक्तेत्यर्थः। तथाचसमप्राधान्यमर्थभेदविषयमितिभावः । प्रतिक्षिप्यतेनिवार्यतेकोट्यंतरमनेनेतिप्रतिक्षेपोविरोधः ॥—

यथा । मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताःप्रातःप्रांगणसीम्निमंथरचलद्बालांघ्रिलाक्षारुणाः॥ दूराद्दाडिमबीजशंकितधियःकर्षन्तिकेलीशुका यद्विद्वद्भवनेषुभोजनृपतेस्त्त्यागलीलायितं ॥ अत्रतावद्विदुषांसंपत्समृद्धिवर्णनमुदात्तालंकारस्तन्मूलकोबालांघ्रिलाक्षारुणाइत्यत्रतद्गुणालंकारस्तत्रैववक्ष्यमाणभ्रांत्युपपादकः । पदार्थहेतुककाव्यलिंगालंकारश्चेतितयोरेकवाचकानुप्रवेशसंकरस्तन्मूलःशंकितधियइत्यत्रभ्रांतिमदलंकारस्ताभ्यांचोदात्तालंकारश्चारुतांनीतइतितयोश्चतस्यचांगांगीभावसंकरः । एवंविद्वद्गेहवैभवस्यहेतुमतो राज्ञोवितरणविलासस्यहेतोश्चाभेदकथनंहेत्वलंकारः सच राज्ञोवितरणविलासस्यानिरतिशयोत्कर्षाभिव्यक्तिपर्यवसायी। एतावन्मात्रेकविसंरंभश्चेदुक्तरूपोदात्तालंकारपरिष्कृतेहेत्वलंकारेविश्रांतिः । कीदृशीसंपदितिप्रश्नोत्तरतयानिरतिशयैश्वर्यवितरणरूपाप्रस्तुतकार्यमुखेनतदीयसंपदुत्कर्षप्रशंसनेकविसंरंभश्चेत्कार्यनिबंधनाप्रस्तुतप्रशंसालंकारेविश्रांतिः । कार्यस्यापिवर्णनीयत्वेनप्रस्तुतत्वाभिप्रायेतुप्रस्तुतांकुरेविश्रांतिः। अत्रविशेषानध्यवसायात्संदेहसंकरः। किंचविद्वद्गृहवैभववर्णनस्यासंबंधेसंबंधकथनरूपतयाऽतिशयोक्तेरुदात्तालंकारेणसहैकवाचकानुप्रवेशसंकरः। निरतिशयवितरणोत्कर्षपर्यवसायिनोहेत्वलंकारस्याप्यद्भुततथ्यौदार्यवर्णनात्मिकयात्युक्त्या सहैकवाचकानुप्रवेशसंकरः । तन्मूलकस्याप्रस्तुतप्रशंसालंकारस्यप्रस्तुतांकुरस्यवाराजसंपत्समृद्धिवर्णनात्मकोदात्तालंकारेणसहैकवाचकानुप्रवेशसंकरः ॥—

मुक्ताइति । विदुषांमंदिरेषुभवनेषुकेलौसुरतक्रीडायांविच्छिन्नसूत्राद्धाराद्गलिताः

संमार्जनीभिरपसारिताःप्रातःकालेऽगणसीमांतेमंदंचलतांबालानांचरणलाक्षारसेनारु णामुक्ताःदूराद्दाडिमबीजशंकितधियःक्रीडाशुकायत्कर्षंत्याकर्षंतितद्भोजनृपतेस्त्याग स्यदानस्यलीलायितमित्यन्वयः । तत्रैवबालांघ्रिलाक्षारुणाइत्यत्रैव । वक्ष्यमा णेति । शंकितधियइतिवक्ष्यमाणेत्यर्थः । तयोस्तद्गुणकाव्यलिंगयोः । तन्मूलःसंकरमू लः। ताभ्यांसंकरभ्रांतिमद्भ्यां । तयतोःसंकरभ्रांतिमतोः। तस्यउदात्तस्य । हेतुमतःकार्य स्य अभेदकथनंतस्यागलीलायितस्यकार्यमितिवक्तव्येतदेवत्यागलीलायितमित्यभेद कथनं । तदीयेति राजकीयेत्यर्थः । अतथ्यौदार्येति असत्यौदार्येत्यर्थः ॥ तन्मूलक स्येति वितरणोत्कर्षपर्यवसायिहेत्वलंकारमूलकस्येत्यर्थः ॥—

वाचकशब्दस्यप्रतिपादकमात्रपरतयाऽव्यंजकसाधारण्यादेषां चत्रयाणामेकवाचकानुप्रवेशसंकराणांसमप्राधान्यसंकरः । नह्येतेषांपरस्परमन्यत्रांगत्वमस्ति । उदात्तादिमात्रस्यैवहेत्व लंकारादिचारुतापादकत्वेनातिशयोक्तिसंकरस्यांगतयाऽनपे क्षणात् ।एवमत्रश्लोकेचतुर्णामपिसंकराणांयथायोग्यंसंकरः। एवमन्यत्राप्युदाहरणांतराण्यूह्यानि ॥—

ननुराजसंपत्समृद्धेर्व्यंजनागम्यत्वेनावच्यत्वात्कथंतद्वर्णनात्मकोदात्तालंकारेणसहैकवा चकानुप्रवेशकथनमित्याशंकायामाह वाचकशब्दस्येति । त्रयाणामिति । एकउदात्ता तिशयोक्त्योरपरोहेत्वत्युक्तयोरन्योऽव्यंग्योदात्ताप्रस्तुतप्रशंसाप्रस्तुतांकुरान्यतरयोरित्ये वंत्रयाणांपरस्परमित्यर्थः।उदात्तालंकारस्यहेत्वलंकारांगतायाःपूर्वमुक्तत्वादुदात्तातिश योक्तिसंकरस्यापितदंगत्वमितिशंकांनिरस्यति उदात्तादिमात्रस्यैवेति । उदात्तादीत्या दिपदेनहेत्वलंकारपरिग्रहः । हेत्वलंकारादीत्यादिपदेनचाप्रस्तुतप्रशंसापरिग्रहः । त त्रापिनिरतिशयैश्वर्यवितरणोत्कर्षपर्यवसायिनोहेत्वलंकारस्यैवतादृशवितरणरूपकार्य परिष्कारद्वारातद्गम्यप्रस्तुतराजसंपदुत्कर्षप्रशंसारूपायामप्रस्तुतप्रशंसायामंगत्वंनत्वद्भु तातथ्यवर्णनारूपात्युक्तिसंकरस्यापेक्षेतिभावः । यथायोग्यमिति । तथाहि । उदा त्ततद्गुणयोरंगांगिभावसंकरस्यभ्रांतिमदुदात्तयोरंगांगिभावसंकरस्यचांगांगिभावेनचसं करः। तथाभ्रांतिमदुदात्तयोरंगांगिभावसंकरस्योदात्तांगकहेत्वलंकारादिसंदेहसंकरस्य चांगांगिभावेनसंकरइतिसूक्ष्ममतिभिरूहनीयम् ॥

अमुंकुवलयानंदमकरोदप्पदीक्षितः ॥ नियोगाद्वेंकटपतेर्निरुपाधिकृपानिधेः ॥ १७१ ॥ चंद्रालोकोविजयतांशरदागमसंभवः ॥ हृद्यः कुवलयानंदोयत्प्रसादादभूदयम् ॥१७२ ॥ इतिश्रीमदद्वैतविद्याचार्यश्रीमद्द्विजकुलजलधिकौस्तुभश्रीरंगराजाध्वरींद्रवरदसूनोरप्पदीक्षितस्यकृतिःकुवलयानंदःसंपूर्णः॥

स्वकीर्संनुवृत्तयेग्रंथनामस्वनामचोपनिबध्नन्ग्रंथपूर्तिमनुवदति । अमुमिति । स्वग्रंथस्यप्रामाणिकत्वंसूचयितुमाह । चंद्रालोकइति । शरदागमसंज्ञकश्चंद्रालोकमूलभूतोग्रंथः । शरत्कालागमनेनचंद्रस्यालोकइतिश्लेषः । तस्माच्चकुवलयानंदःस्वग्रंथोऽभूत् । कुवलयस्यकुमुदस्यानंदइतिचश्लेषइतिशिवमास्ताम्॥विद्वद्वृंदमहामान्यरामचंद्रात्मजन्मना ॥ विदुषावैद्यनाथेनकृतालंकारचंद्रिका ॥ एनांकुवलयानंदप्रकाशनविशारदाम् । विदांकुर्वंतुविद्वांसःकाव्यतत्त्वविदांवराः । असौकुवलयानंदश्चंद्रालोकोत्थितोपिसन् ॥ प्रतिष्ठांलभतेनैवविनालंकारचंद्रिकाम् । इतिश्रीमत्पदवाक्यप्रमाणज्ञतत्सद्रामभट्टात्मजवैद्यनथकृताऽलंकारचंद्रिकाख्याकुवलयानंदटीकासंपूर्णा ॥ ॥ ॥

इदंपुस्तकं खांडेकरोपाख्यवासुदेवात्मजकाशीनाथेनमुंबइनगर्यां जगदीश्वराख्यमुद्रणयंत्रे मुद्रापितम् ॥ शकाब्दाः १८०७
पार्थिवनामसंवत्सरः ॥

